# दशकर्मादिपद्धतिः

ॐ श्रीगणेशाय नमः

काशी - वाराणसी
1935

# * दशकर्मादिपद्धतिः *

## अथ स्वस्तिवाचनम्

ॐ श्रीगणेशाय नमः ॥ ॥ अथ यजुश्शाखीयगृह्यपद्धतिर्लिख्यते ॥

तत्र कर्ता शुभदिने सुस्नातः शुक्लवासाः कृततिलकः शुभासने प्राङ्मुख उपविश्याचम्य स्वस्ति वाचयेत्—ॐस्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्व्वणः स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना १ स्वस्तये वायुमुपब्रुवामहे सोमं स्वस्ति भुवनस्य यस्पतिः बृहस्पतिं सर्व्वगणꣳ स्वस्तये स्वस्तय आदित्यासो भवन्तु नः २ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये देवाऽ अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वꣳ हसः ३ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति स्वस्ति नऽइन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ४ स्वस्ति पन्थामनुचरेम सूर्य्याचन्द्रमसाविव पुनर्ददताऽघ्नता जानता सङ्गमेमहि ५ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ६ अंहोमुचमाङ्गिरसं गयञ्च स्वस्त्यात्रेयम्मनसा च तार्क्ष्यं प्रयतपाणिः शरणं प्रपद्ये स्वस्तिसंबाधेष्वभयन्नोऽअस्तु ७ ॥ ॐ आ नो भद्राः क्रतवो यन्तु व्विश्वतोऽ दब्धासोऽ अपरीतासऽ उद्भिदः देवा नो यथा सदमिद्वृधेऽ असन्नप्रायुवो रक्षितारो दिवे दिवे १ देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाꣳ रातिरभिनो निवर्त्तताम् । देवानाꣳ सख्यमुपसेदिमा वयन्देवा नऽ आयुः प्रतिरन्तु जीवसे २ तान्पूर्व्वया निविदा हूमहे व्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् अर्य्यमणँव्वरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत् ३ तन्नो व्वातो मयोभु व्वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतन्धिष्ण्या युवम् ४ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ५ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ६ पृषदश्वा मरुतः पृश्निमातरः शुभँय्यावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ७ ॐभद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ सुमुहूर्त्तमस्तु ३ ॥ इति स्वस्तिवाचनम् ।

## अथ गणेशपूजा

दीपं प्रज्वलय्य कर्म कुर्यात् कर्त्ता कर्मदिने प्रातरुत्थाय स्नात्वा अहते धौते वाससी परिधाय नित्यकर्म समाप्य सर्व्वकर्मणः प्रधानभूतं गणेशपूजनं कुर्य्यात् प्रथमं गणेशाय पुष्पाञ्जलिं समर्पयेत्—सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥विघ्नवल्लीकुठाराय गणाधिपतये नमः ॥ शुक्लांबरधरं विष्णुं शशिवर्णं

चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः॥ ततोऽर्घस्थापनं कुर्यात् । चन्दनेन भूमौ त्रिकोणवृत्तचतुरस्रमण्डलं लिखित्वा गंधाक्षतपुष्पैः सम्पूज्य अर्घं संस्थाप्य शंनो देवीरभीष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । इति जलेनापूर्य्य । गंगे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेस्मिन्सन्निधिं कुरु ॥ इत्यंकुशमुद्रया तीर्थमावाह्य गन्धाक्षतपुष्पादि निक्षिप्य ध्यानम् । अरुणोऽरुणपंकजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः । स्वरुचाहितमंडलस्त्रिनेत्रो रविराकल्पशताकुलोवतान्नः ॥ इतिध्यात्वा अर्घं दद्यात्-एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते । अनुकंपय मां भक्त्या गृहाणार्घं दिवाकर ॥ इत्यर्घं दत्वा सर्षपाक्षतैर्भूतोत्सादनं कुर्य्यात्-अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ पाखंडकारिणो भूता भूमौ ये चांतरिक्षगाः । दिवि लोके स्थिता ये च ते नश्यंतु शिवाज्ञया ॥ निर्गच्छंतां च भूतानां वर्त्म दद्यात्स्ववामतः ॥ वामपार्ष्णिघातत्रयेण छोटिकाभिस्तालत्रयेण च सर्वान्विघ्नानुत्सार्य आधारशक्तये पृथिव्यै नमः कमलासनाय नमः इत्यासनं सम्पूज्य पुनरर्घं संस्थाप्य जलेनापूर्य्य गन्धाक्षतपुष्पादि निक्षिप्य तेन जलेनात्मानं गणेशपूजासामग्रीं संप्रोक्ष्य प्राणायामं विधाय तिलकुशयवजलन्यादाय पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय ॐ तत्सदत्रपृथिव्यां जम्बूद्वीपे भरतखण्डे आर्य्यावर्ते पुण्यक्षेत्रे हिमवत्पर्वतैकदेशे ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे कृतत्रेताद्वापरान्ते सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगस्य प्रथमचरणे षष्टयब्दानां मध्ये अमुकनामसम्वत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकगोत्रोऽमुकराशिरमुकशर्माहं श्रुतिस्मृतिपुराणोक्तफलप्राप्तये करिष्यमाणामुकर्मणो निर्विघ्नतासिद्धये भगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये । इति संकल्प्य पीठपूजनं कुर्यात्—ॐतीव्रायैनमः ॐज्वालिन्यैनमः ॐनन्दायैनमः ॐभोगदायैनमः ॐकामरूपिण्यैनमः ॐसत्यायैनमः ॐउग्रायैनमः ॐतेजोवत्यैनमः ॐमध्येविघ्ननाशिन्यैनमः ॐसर्वशक्तिकमलासनायनमः । ध्यानम् । एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् । पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकम् ॥ आवाहनम् । विनायक नमस्तेस्तु उमामलसमुद्भव । इमां मया कृतां पूजां गृहाण सुरसत्तम ॥ आसनम् । नानारत्नसमायुक्तं मुक्ताहारविभूषितम् । स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यताम् ॥ पाद्यम् । गौरीप्रिय नमस्तेस्तु शङ्करप्रिय सर्वदा । भक्त्या पाद्यं मया दत्तं गृहाण प्रणतप्रिय ॥ अर्घम् । व्रतमुद्दिश्य देवेश गन्धपुष्पाक्षतैर्युतम् । गृहाणार्घं मया दत्तं सर्वसिद्धिप्रदो भव ॥ स्नानम् । स्नानं पञ्चामृतैर्देव गृहाण गणनायक । अनाथनाथ सर्व्वज्ञ गीर्वाणपरिपूजित ॥ ॐगणानान्त्वा गणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे निधीनान्त्वा निधिपतिँ हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् । इतिमन्त्रेण स्नानम् । स्नानांगमाचमनीयं च दत्वा वस्त्रम् । रक्तवस्त्रयुगं देव देवाङ्गसदृशप्रभम् । भक्त्या दत्तं गृहाणेदं लम्बोदर हरप्रिय ॥ यज्ञोपवीतम् । राजतं ब्रह्मसूत्रं च काञ्चनस्योत्तरीयकम् । गृहाण चारु सर्व्वज्ञ भक्तानां सिद्धिदायक ॥ गन्धम् । गन्धं कर्पूरसंयुक्तं दिव्यं चन्दनमुत्तमम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥ अक्षताः । अक्षतान्धवलान्देव सुरगन्धर्वपूजित । सर्व्वदेवनमस्कार्य्य गृहाण मदनुग्रहात् ॥ पुष्पाणि । सुगन्धीनि सुपुष्पाणि मालत्यादीनि वै प्रभो । मयाऽऽनीतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ धूपः । दशाङ्गं गुग्गुलं धूपं सुगंधिं सुमनोहरम् । उमासुत नमस्तुभ्यं धूपं मे प्रतिगृह्यताम् ॥ दीपः । गृहाण

मङ्गलं दीपं घृतवर्त्तिसमन्वितम् । दीपं ज्ञानप्रदं देव रुद्रप्रिय नमोस्तुते ॥ नैवेद्यम् । सगुडान्सघृतांश्चैव मोदकान्घृतपाचितान् । नैवेद्यं सफलं दत्तं गृह्यतां विघ्ननाशन ॥ भूषणार्थे द्रव्यं समर्प्य मूलमंत्रेण जपं विधाय समर्प्य ताम्बूलम् । पूगीफलसमायुक्तं नागवल्लीदलान्वितम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ दशमोदकदानसङ्कल्पः । अद्येहामुकोहं अमुककर्मनिमित्तकं गणेशप्रीतये इमान्दशमोदकान्दक्षिणासहितान् ब्राह्मणाय दास्ये ॐतत्सन्न मम । ब्राह्मणं गन्धाक्षतपुष्पैः सम्पूज्य । मोदकदानमन्त्रः । विघ्नेश विप्ररूपेण गृहाण दशमोदकान् । दक्षिणाघृतताम्बूलगुडयुक्तान्ममेष्टद ॥ प्रतिग्रहमंत्रः । दाता विघ्नेश्वरो देवो गृहीता सर्व्वविघ्नराट् । तस्मादिदं मया दत्तं परिपूर्णं तदस्तुमे ॥ इत्येकं मोदकं विनायकाय दद्यात् । प्रार्थना । विनायक नमस्तुभ्यं सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्य्येषु सर्व्वदा ॥ अथ दूर्वाङ्कुरपूजा । ॐगणाधिप नमस्तेऽस्तु ॐउमापुत्र नमस्तेस्तु ॐअघनाशन नमस्तेस्तु ॐविनायक नमस्तेस्तु ॐईशपुत्र नमस्तेस्तु ॐसर्वसिद्धिप्रदायक नमस्तेस्तु ॐएकदन्त नमस्तेस्तु ॐइभवक्त्र नमस्तेस्तु ॐमूषकवाहन नमस्तेतु ॐकुमारगुरो तुभ्यं नमोस्तु ॐ चतुर्थीश नमोस्तुते ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ इति दूर्व्वां समर्प्य नीराजनं कुर्यात्—अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् । आरात्तिकमिदं देव गृहाण मदनुग्रहात् ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा अग्निर्वर्च्चो ज्योतिर्वर्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्व्वर्चः स्वाहा ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ इति नीराज्य पुष्पाञ्जलिः । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ विघ्नवल्लीकुठाराय गणाधिपतये नमः ॥ अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम् । अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥ इति नमस्कृत्य दक्षिणासङ्कल्पं कुर्य्यात्—अद्येहेत्यादि देशकालसंकीर्त्तनान्ते अमुकोहं अमुककर्मणि निर्विघ्नतासिद्धये भगवतो गणेशस्य पूजाकर्मणः साद्गुण्यार्थं इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् न मम इति दक्षिणां दत्वा ॐगणानां त्वा गणपतिᳬहवामहे प्रियाणां त्वा प्रियपतिᳬहवामहे निधीनां त्वा निधिपतिᳬहवामहे व्वसो मम आहमजानि गर्भधमा त्वमजासि गर्भधमिति मन्त्राशिषं दद्यात् ॥ इति गणेशपूजा ॥

## अथ मातृपूजा

सर्वकर्म्मसु प्रधानसङ्कल्पानन्तरं मातृपूजनं कुर्यात् पीठे पिष्टातकेन षोडशमातॄर्विलिखित्वा गोमयेन दूर्वाभिर्विभूष्य अर्घं संस्थाप्य पूजा संकल्पः । अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्माहं अमुककर्मणः पूर्वांगत्वेन सर्वाभ्युदयप्राप्तये पीठे लिखितानां गणपतिसहितगौर्य्यादिषोडशमातॄणां पूजनं करिष्ये । प्रतिष्ठा । ॐएतन्ते देव सवितर्य्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव । मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳬ समिमं दधातु विश्वेदेवा स इह मादयन्तामोंप्रतिष्ठ ॐभूर्भुवःस्वः गणपतिसहितगौर्यादिषोडशमातरः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु । अथध्यानम्—गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका

धेता वरदाभयपाणयः ॥ इति ध्यात्वा नाममन्त्रेण पूजनं—ॐगणपतये नमः ॐगौर्यै नमः ॐपद्मायै नमः ॐशच्यैनमः ॐ मेधायै नमः ॐसावित्र्यै नमः ॐविजयायै नमः ॐजयायै नमः ॐदेवसेनायै नमः ॐस्वधायै नमः ॐस्वाहायै नमः ॐमातृभ्यो नमः ॐलोकमातृभ्यो नमः ॐधृत्यै नमः ॐपुष्ट्यै नमः ॐतुष्ट्यै नमः ॐआत्मनः कुलदेवतायै नमः इति नाममंत्रैः आवाहनमासनं पाद्यमर्घं स्नानमाचमनं वस्त्रं गंधम् अक्षतान् पुष्पाणि धूपं दीपं नैवेद्यं भूषणार्थे द्रव्यं च समर्प्य नाममंत्रेण जपं कृत्वा समर्प्य वसोर्द्धारासंकल्पः—अद्येह अमुकोहं अमुककर्मणि सर्वाभ्युदयप्राप्तये गणपतिसहितगौर्यादिषोडशमातृणामुपरि गुडसर्पिभ्यां वसोर्द्धाराः पातयिष्ये । मन्त्रः आज्यं यतोस्ति देवानामशनं मंगलात्मकम् ततो मातृः समुद्दिश्य घृतधारा ददाम्यहम् ॐवसोःपवित्रमसि शतधारं वसोःपवित्रमसि सहस्रधारं देवस्त्वा सविता पुनातु वसोःपवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ कुड्यस्तम्भसुसंलग्ना मातृणामुपरिस्थिताः । कारयेत्पञ्च तिस्रो वा सप्त वोदङ्मुखस्थिताः ॥ इतिमंत्रैः तिस्रः पंच सप्त वा धाराः पातयित्वा तच्छेषघृतं ललाटे धृत्वा नीराजनं कुर्यात् । पुष्पाञ्जलिः । षोडशमातृणां स्तोत्रं पठेत् । हरात्मज चतुर्बाहो वारणास्य महोदर । प्रसन्नो भव मह्यं त्वं गौरीपुत्र नमोस्तुते १ चन्द्रास्ये चन्द्रकलया विभूषितकपालके । प्रसन्ना भव मह्यं त्वं शिवगौरि नमोस्तुते २ दुग्धोदसंभवे भव्ये सरोजोपरिसंस्थिते । प्रसन्ना भव मह्यं त्वं हरिपद्मे नमोस्तुते ३ सदासौभाग्यसंयुक्ते मंदारकुसुमार्चिते । प्रसन्ना भव मह्यं त्वमिन्द्रकान्ते नमोस्तुते ४ शुक्लांबरधरे देवि वीणापुस्तकधारिणि । प्रसन्ना भव मह्यं त्वं सरस्वत्यैनमोस्तुते ५ सौभाग्ययुक्ते सौभाग्यदायिके दुःखवर्जिते । प्रसन्ना भव मह्यं त्वं विजये ते नमोनमः ६ चारुणा शुभपद्मेन राजमानेऽर्कसन्निभे । प्रसन्ना भव मह्यं त्वं जये ते नमोनमः ७ अनेकवर्णसंयुक्ते नानाशस्त्रसमन्विते । प्रसन्ना भव मह्यं त्वं देवसेने नमोस्तुते ८ पितृणां वल्लभे शान्ते शान्तियुक्ते शुभंकरे । प्रसन्ना भव मह्यं त्वं स्वधे देवि नमोस्तुते ९ सप्तार्चिर्वल्लभे सप्तस्वरसन्तानसंयुते । प्रसन्ना भव मह्यं त्वं स्वाहे देवि नमोस्तुते १० वराभयकरा भव्याः प्रसन्नमुखपंकजाः । सुप्रसन्नाः प्रजायन्तां मह्यं ताभ्यो नमोनमः ११ रक्षिकाः सर्वलोकानां नितरां लोकमातरः । सुप्रसन्नाः प्रजायन्तां मह्यं ताभ्यो नमोनमः १२ धृतिसंजनिके धैर्ययुक्ते सर्वसमर्चिते । प्रसन्ना भव मह्यं त्वं धृतिदेवि नमोस्तुते १३ सर्वेषां पुष्टिजनिके पूर्णकामसमन्विते । प्रसन्ना भव मह्यं त्वं पुष्टिदेवि नमोस्तुते १४सर्वसन्तोषजनिके सन्तोषेण समन्विते । प्रसन्ना भव मह्यं त्वं तुष्टिदेवि नमोस्तुते१५ कुलदेवि महाभागे कुलाद्रिकृतकेतने । प्रसन्ना भव मह्यं त्वं कुलदेवि नमोस्तुते १६ गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः १७ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश १८ ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया । कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ॥ वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा । चामुण्डा गणनाथरुद्रसहिता रक्षंतु नो मातरः १९ इति पुष्पाञ्जलिं समर्प्य दक्षिणासंकल्पः—अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्माहं अमुककर्मनिमित्तकं सर्वाभ्युदयप्राप्तये गणपतिसहितगौर्यादिषोडशमातृणां पूजाकर्मणः साद्गुण्यार्थं इमां दक्षिणां ब्राह्मणाय दास्ये तत्सत् इति संकल्प्य दक्षिणांदद्यात् । मन्त्रपाठः—ॐसमख्ये देव्या धिया संदक्षिणयोरुचक्षसा मा मआयुः प्रमोषीर्मोऽअहं तव वीरं विदेय तव देवि संदृशि । ॐअम्बे अम्बिके अम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् । इति पठित्वा मंत्राशिषं दद्यात् । इतिमातृपूजा ॥

# अथाभ्युदयिकश्राद्धम्

यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये । विश्वोगद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ इति गणेशं नमस्कृत्य स्वदक्षिणभागे कर्मपात्रस्थापनम्–ॐभूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥ इति स्पृष्ट्वा भूमौ चन्दनेन शंखचक्रे लिखित्वा आसनं दूर्वात्रयम् आसने पात्रं पात्रे पवित्रं "पवित्रे स्थो वैष्णव्यौ" शन्नो देवीरितिजलम् ॐशन्नो देवीरभिष्टयऽआपो भवन्तु पीतये शं योरभिस्रवंतु नः । ॐयवोऽसि यवयास्मद्द्वेषो यवयारातीः इति ॐयवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिःपृक्तःपुष्ट्या नान्दीमुखाँल्लोकान्प्रीणाहि नः स्वाहेति च यवान् गन्धाक्षतपुष्पादि तूष्णीं निक्षिप्य तेन जलेनात्मानं नान्दीमुखश्राद्धसामग्रीं च सम्प्रोक्ष्य प्राणायामं विधाय-अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमःस्वाहायै स्वाहायै नित्यमेव नमोनमः ॥ इतित्रिवारं पठित्वा सप्तव्याधा दशार्णेषु मृगाःकालञ्जरे गिरौ । चक्रवाकाःशरद्वीपे हंसाः सरसि मानसे ॥ तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । मनसा च पितॄन्ध्यात्वा नान्दीश्राद्धं समारभे ॥ ॐसोमस्य नीविरसि विष्णोःशर्म्मासि शर्म्म यजमानस्य योनिरसि । सुसस्याःकृषीस्कृधि । इतिमंत्रेण दक्षिणकट्यां नीवीमारोप्य दूर्वाभिर्दिग्बंधनम्–अग्निष्वात्ताःपितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । विदिशश्च गणाः सर्वे रक्षन्तूर्ध्वमधोपि वा ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः । सर्व्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ यवा रक्षंतु दितिजात् दर्भा रक्षंतु राक्षसात् । पंक्तिं वै श्रोत्रियो रक्षेदतिथिःसर्व्वरक्षकः ॥ गायत्र्या कर्म्मपात्रोदकमभिमंत्र्य तेन जलेन शूद्रादिदृष्टिदोषनिपातादामान्नादीनां पवित्रतास्तु इत्यन्नं सम्प्रोक्ष्य अथप्रतिज्ञासंकल्पः—अद्येहेत्यादिदेशकालौसंकीर्त्त्य अमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाम् अमुकी ३ देवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखीनां तथाऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां तथाऽमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां प्रीतये अमुककर्म्मनिमित्तकं सत्यवसुसंज्ञकविश्वेदेवपूर्वकं संक्षिप्तसंकल्पविधिना नान्दीमुखश्राद्धमहं करिष्ये ॐकुरुष्व उत्तरवृद्ध्या आसनानि दद्यात् दूर्वात्रयं गृहीत्वा अद्येह नान्दीमुखामुकगोत्रास्मन्मात्रादित्रय तथा पित्रादित्रय तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिनां सत्यवसुसञ्ज्ञकानां विश्वेषां देवानामिदमासनं वो नमो वृद्धिवृद्धिश्रियै तथाऽमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनां अमुकामुकीदेवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखीनाम् इदमासनं वो नमो वृद्धि २ श्रियै तथाऽमुकगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् इदमासनं वो नमो वृद्धि २ श्रियै तथाऽमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् इदमासनं वो नमो वृद्धि २ श्रियै इत्यासनानि दत्वा (सामगानां

आसनदाने चतुर्थी कार्या) ततः क्रमेण पूजनमनेन मंत्रेण ॐसप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादं सप्तापः स्वपतो लोकमीयुस्तत्र जागृतौ अस्वप्नजौ सत्रसदौ च देवौ ॥ इतिगन्धाक्षतपुष्पैः पूजनम् ॐसत्यवसुसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नमः मातृपितामहीप्रपितामहीभ्योनमः पितृपितामहप्रपितामहेभ्योनमः मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नमः इतिसम्पूज्य धूपदीपसङ्कल्पः अद्येह अमुकगोत्रास्मन्मात्रादित्रय तथा पित्रादित्रय तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिनः सत्यवसुसञ्ज्ञकविश्वेदेवा आसनार्चनविधौ इमानि गंधाक्षतपुष्पधूपदीपनैवेद्यभूषणादीनि यथाविभागं वो नमो वृद्धि २ श्रियै तथाऽमुकगोत्रा अस्मन्मातृपितामहीप्रपितामह्यः अमुकामुकी देव्यः नान्दीमुख्यः तथाऽमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकदेवा वसुरुद्रादित्य स्वरूपाः नान्दीमुखाः तथाऽमुक गोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहा अमुकामुकदेवा सपत्नीका वसुरुद्रादित्यस्वरूपा नान्दीमुखाः आसनार्चनविधाविमानि गंधाक्षतपुष्पधूपदीपनैवेद्यभूषणादीनि यथाविभागं वो नमो वृद्धि २ श्रियै । आसनार्चनविधिः परिपूर्णोस्तु अस्तुपरिपूर्णः गन्धादिदानाचमनं कृत्वा आमान्नं दधिघृतसहितं चतुर्द्धा विभज्य आसनाग्रे संस्थाप्य सङ्कल्पः अद्येह अमुकगोत्रास्मन्मात्रादित्रय तथा पित्रादित्रय तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिभ्यः सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमामान्नं दधिघृतजलसहितं यथांशेन वो नमो वृद्धि० २ श्रियै तथाऽमुकगोत्राभ्यः अस्मन्मातृपितामहीप्रपितामहीभ्यः अमुकामुकीदेवीभ्यो वसुरुद्रादित्यस्वरूपाभ्यो नान्दीमुखीभ्य इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै तथाऽमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्योऽमुकामुकदेवेभ्यो वसुरुद्रादित्यस्वरूपेभ्यो नान्दीमुखेभ्य इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै तथाऽमुकगोत्रेभ्योऽस्मन्मातामहप्रमातामहवृद्धप्रमाता महेभ्योऽमुकामुकदेवेभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यो नान्दीमुखेभ्य इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै इति सङ्कल्प्य अन्नपूजनम् सप्तऋषयइति मन्त्रेण ॐयथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्या७ँशूद्राय चार्याय च स्वाय चारणाय च प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यताम् । इत्यन्नपूजनं कृत्वा दक्षिणासङ्कल्पः देयद्रव्यं सम्प्रोक्ष्य सम्पूज्य अद्येहेत्यादि अमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाममुकामुकीदेवीनां वसुरुद्रादित्यस्वरूपाणाम् नान्दीमुखीनां तथाऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां तथाऽमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां प्रीतयेऽमुककर्मनिमित्तकसत्यवसुसंज्ञकविश्वेदेवपूर्वकनान्दीमुखश्राद्धकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च मातॄणां पितॄणां मातामहानां विश्वेषां देवानां च प्रीतये इमां दधिद्राक्षामलकनिष्क्रयिणीं दक्षिणां यथाविभागं वो नमो वृद्धि२ श्रियै इति संकल्प्य स्वतिलकम्-सत्यानुष्ठानसम्पन्नाः सर्वदा यज्ञबुद्धयः । पितृमातृपराश्चैव सन्त्वस्मत्कुलजा नराः ॥ विशेषपूजनम्–आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं नृणां प्रीताः पितामहाः ॥ आयुः पुत्रान् यशः स्वर्गं कीर्त्तिं पुष्टिं बलं श्रियम् । पशून्सुखं धनं धान्यं प्राप्नुयां पितृपूजनात् ॥ ततः ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वाहायै नित्यमेव नमोनमः ३ सप्तव्याधा इतिच पठित्वा ततः अमुककर्मणः पूर्वाङ्गत्वेन कृतं नान्दीमुखाभ्युदयि-

कश्राद्धं विसर्जये इदं श्राद्धं देशहीनं कालहीनं श्रद्धाहीनं भावनाहीनं दक्षिणाहीनं वाक्यहीनं यत्कृतं तत्सुकृतमस्तु यन्नकृतं तत् श्रीविष्णोः प्रसादात् ब्राह्मणानां वचनात् सर्वं परिपूर्णमस्तु अस्तुपरिपूर्णम् आसनान्युत्थाप्य नीवीं विसृज्य कर्मपात्रं भ्रामयित्वा विसृज्य आचम्य यस्यस्मृत्येति पठित्वा अच्युतायनमः ३ ब्राह्मणं सम्पूज्य आमान्नं दक्षिणां च दद्यात् ॥ इत्याभ्युदयिकश्राद्धम् ॥

## अथ पुण्याहवाचनम्

चतुरो ब्राह्मणानुत्तरवृद्धव्य संस्थाप्य अर्घं संस्थाप्य सङ्कल्पः अद्येत्यादिदेशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं अमुककर्मणि सर्वाभ्युदयप्राप्तये ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तदङ्गतया चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इतिसंङ्कल्प्य ब्राह्मणेभ्योऽर्घं दद्यात् । मन्त्रः-भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम । प्रत्यक्षो यज्ञपुरुषो ह्यर्घोयं प्रतिगृह्यताम् ॥ इत्यर्घं दत्वा पूजयेत्-गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । नमोस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ इतिगन्धाक्षतपुष्पादिभिःसम्पूज्य वरणं कुर्यात्—एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यैः अमुककर्मणि सर्वाभ्युदयप्राप्तये पुण्याहवाचनार्थं ब्राह्मणं त्वामहं वृणे । वृतोस्मि इति प्रत्युक्तिः । एवंक्रमेण चतुर्णां ब्राह्मणानां वरणं कृत्वा सर्वेभ्योऽञ्जलिं बद्ध्वा मन्त्रं पठेत् ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो व्वेन आवः । सबुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः । ॐबृहस्पते अति यदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ब्राह्म पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं यच्च तत्पुण्याहं ब्रुवन्तु नः ॥ भोब्राह्मणाः मम गृहे पुण्याहं भवन्तो ब्रुवन्तु ३ ॐपुण्याहं३ ॐपुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ स्वस्तिर्या अविनाशाख्या लोककल्याणसिद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ भोब्राह्मणाः मम गृहे स्वस्ति भवन्तो ब्रुवन्तु ३ ॐस्वस्ति३ ॐस्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता । सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मम गृहे ऋद्धिं भवन्तो ब्रुवन्तु ३ ॐऋद्ध्यतां ३ ॐसत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम दिवं पृथिव्या अध्यारुहामाविदाम देवाँ २ ॥ स्वर्ज्योतिः ॥ वैधृतौ च व्यतीपाते सङ्क्रान्तौ राहुपर्व्वणि । यादृग्वृद्धिमवाप्नोति तां च वृद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मम गृहे वृद्धिं भवन्तो ब्रुवन्तु ३ ॐवृद्ध्यतां ३ ॐज्यैष्ठ्यञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्चमेऽ मश्चमेऽम्भश्चमे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे व्वर्षिमा च मे द्राघिमा च मे वृद्धञ्च मे वृद्धिश्चमे यज्ञेन कल्पन्ताम् ॥ पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् । ऋषिभिःसर्वगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ भोब्राह्मणाः मम गृहे कल्याणं भवन्तो ब्रुवन्तु ३ ॐकल्याणं ३ॐयथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्याᳪशूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामःसमृद्ध्यताम् ॥ सरित्पतेश्च या कन्या या श्रीर्विष्णुगृहे स्थिता सर्वसौख्यवती लक्ष्मीस्तां श्रियं च ब्रुवन्तु नः ॥ भोब्राह्मणा मम गृहे श्रीरस्त्विति भवन्तो ब्रुवन्तु ३ ॐश्रीरस्तु ३ ॐमनसः काममाकूतिं वाचः सत्यमशीय पशूनां रूपमन्नस्य रसो यशः श्रीःश्रयताम् ॥ शङ्खासुरवि-

१० प० पत्नौ च यथा शान्तिर्धरातले । तथा च देवदेवानां तां च शान्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणा मम गृहे शान्तिं भवन्तो ब्रुवन्तु ३ ॐ शान्तिः ३ ॐद्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिर्व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॐविश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥ ततो दक्षिणासंकल्पः अद्येहामुकोऽहममुककर्मणि सर्वाभ्युदयप्राप्तये कृतस्य पुण्याहवाचनकर्मणः साङ्गतासिद्धये इमां दक्षिणां पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सन्न मम । इति दक्षिणां दद्यात् । ब्राह्मणाः मन्त्रार्थाःसफलाःसन्तु पुण्याहवाचनप्रसादोऽस्तु इतिपठित्वा तिलकं कृत्वा यजमानहस्ते आशीर्वादं दद्युः ॥ इतिपुण्याहवाचनम् ॥ क० ल०

## अथ कलशस्थापनम्

वेद्या ईशानकोणे अव्रणं ताम्रादिधातुविनिर्मितं मृण्मयं वा बहिर्दध्यक्षतचन्दनभूषितं वस्त्राच्छन्नं कलशपात्रं सप्तधान्योपरि स्थापयेत् । प्रथमं भूमिस्पर्शः—ॐमही द्यौः पृथिवीचनऽ इमं यज्ञं मिमिक्षितां पिपृतान्नोभरीमभिः । अथयवप्रक्षेपः ॐओषधयःसमवदंत सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि । अथ पात्रस्थापनम् ॐआजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्त्तस्व सा नःसहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः । अथजलेनापूरणम् ॐवरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद । अथ कुशब्रह्माणं स्थापयेत् ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽ इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुःसप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नःपर्जन्योऽअभि वर्षतु फलवत्यो नऽओषधयःपच्यन्तां योगक्षेमो नःकल्पताम् । अथ गन्धम् ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । अथ दूर्वा ॐकाण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि एवा नो दूर्वे प्रतनु सहस्रेण शतेन च । अथ सर्वौषधिः हरिद्रा वा ॐया ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा मनै नु बभ्रूणामहꣳशतं धामानि सप्त च । अथपूगी फलम् ॐयाःफलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः । अथ दुग्धम् ॐपयःपृथिव्यां पय ओषधीषु पयो दिव्यंतरिक्षे पयोधाः पयस्वतीःप्रदिशःसन्तु मह्यम् । अथ दधि ॐदधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः सुरभिणो मुखाकरत्प्रणऽआयूꣳषि तारिषत् । अथ घृतम् ॐघृतवती भुवनानामभिश्रियोर्व्वी पृथ्वी मधुदुघे सुपेशसा द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा । अथपञ्चपल्लवाः ॐअश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता गोभाज इत्किलासथ यत्सनवथ पूरुषम् । अथ सप्तमृदः ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी यच्छानः शर्म सप्रथाः । अथपञ्चरत्नानि ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् दधद्रत्नानि दाशुषे । अथहिरण्यं द्रव्यं वा ॐहिरण्यगर्भःसमवर्त्तताग्रे भूतस्य जातःपतिरेक आसीत् स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम । अथ वस्त्रम् ॐयदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै सन्दानमर्व्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति । अथोपरि धान्यपूर्णपात्रम् ॐपूर्णा दर्व्वि परा

पत सुपूर्णा पुनरापत व्वस्नेव विक्रीणावहाऽइषमूर्ज्जꣳ शतक्रतो। ततो वरुणमावाहयेत् ॐतत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो व्वरुणेह वोध्युरुशꣳस मा न आयुः प्रमोषीः। अथ कलशाभिमन्त्रणम् कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ अङ्गैस्तु सहिताः सर्वे कलशं तु समाश्रिताः। अथ प्रार्थना—देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥ त्वत्तोये सर्वतीर्थानि देवाः सर्व्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः॥ त्वयि तिष्ठन्ति सर्व्वेऽपि यतः कामफलप्रदः। त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्व्वदा। ॐस्थिरो भव वीड्वङ्गऽआशुर्भव व्वाज्यर्व्वन् पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः। ततः वेदोक्तमंत्रैर्नाममंत्रैर्वा नवग्रहादींस्तत्रावाह्य एतन्तइतिप्रतिष्ठा ॐभूर्भुवः स्वः कलशे आवाहिताः ब्रह्मवरुणसहित-आदित्यादिनवग्रहाः साङ्गाः सपरिवाराः सायुधाः सवाहनाः साधिप्रत्यधिदेवताः इन्द्रादिदशदिक्पालविनायकादिपञ्चलोकपालसहिताः सुप्रतिष्ठिता वरदा भवन्तु। ततोर्घं संस्थाप्य प्राणायामं कृत्वा पूजासंकल्पः अद्येहेत्यादि अमुकराशिरमुकशर्म्माहं अमुककर्म्मनिमित्तकं कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां साधिप्रत्यधिदेवतेन्द्रादिदिक्पालविनायकादिलोकपालानां पूजनं करिष्ये। पद्मासनः पद्मकरो द्विबाहुरित्यादि श्लोकैर्ध्यानं विधाय ॐआकृष्णेनेत्यादिवेदमन्त्रैर्नाममन्त्रैर्वा आवाहनासनपाद्यादीन्समर्पयेत् ॐब्रह्मणे नमः ॐवरुणाय नमः ॐआदित्याय नमः ॐसोमाय नमः ॐभौमाय नमः ॐबुधाय नमः ॐबृहस्पतये नमः ॐशुक्राय नमः ॐशनैश्चराय नमः ॐराहवे नमः ॐकेतुभ्यो नमः ॐअधिदेवताभ्यो नमः ॐप्रत्यधिदेवताभ्यो नमः ॐइन्द्रादिदशदिक्पालेभ्यो नमः ॐविनायकादि-पञ्चलोकपालेभ्यो नमः इतिनाममन्त्रैः पाद्यादिनीराजनान्तं सम्पूज्य पुष्पाञ्जलिः—ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च। गुरुश्च शुक्रः शनिराहुकेतवः सर्व्वे ग्रहाः शान्तिकरा भवन्तु॥ सूर्य्यः शौर्य्यमथेन्दुरुच्चपदवीं सन्मङ्गलं मङ्गलः। सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः॥ राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं। नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः॥ आयुश्च वित्तं ... तथा सुखं च धर्मार्थलाभौ बहुपुत्रतां च। शत्रुक्षयं राजसु पूजितां च तुष्टा ग्रहाः क्षेमकरा भवन्तु॥ इति पुष्पाञ्जलिं समर्प्य दक्षिणासङ्कल्पः अद्येहामुकशर्म्माहं अमुककर्म्मणि कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां साधिप्रत्यधिदेवतेन्द्रादिलोकपालानां पूजायाः साङ्गफलप्राप्तये साद्गुण्यार्थं चेमां दक्षिणां आदित्यादिनवग्रहाणां प्रीतये ब्राह्मणाय दास्ये ॐतत्सन्न मम इति दक्षिणां दत्वा अभिषेकतिलकमंत्रपाठादि कारयेत्॥ इतिकलशस्थापनम् तदङ्गभूतं नवग्रहपूजनं च॥

## अथ रक्षाविधानम्

यवान्कुशाँस्तथा दूर्वां सर्षपान्गंधमक्षतान्। गोमयं दधिसंयुक्तं कारयेत्ताम्रभाजने॥ ॐगणाधिपं नमस्कृत्य नमस्कृत्य पितामहम्। विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वतीम्॥ स्थानक्षेत्रं नमस्कृत्य दिननाथं निशाकरम्। धरणीगर्भसम्भूतं शशिपुत्रं बृह-

स्पतिम् ॥ दैत्याचार्यं नमस्कृत्य सूर्य्यपुत्रं महाग्रहम् । राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥ शक्राद्या देवताः सर्व्वाः नमस्कृत्य मुनींस्तथा । गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं महामुनिम् । व्यासं कविं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ विद्याधिका ये मुनय आचार्य्याश्च तपोधनाः । सर्वे ते मम यज्ञस्य रक्षां कुर्वन्तु विघ्नतः ॥ प्राचीं रक्षतु गोविंद आग्नेयीं गरुडध्वजः । याम्यीं रक्षतु वाराहो नारसिंहस्तु नैर्ऋतीम् ॥ केशवो वारुणीं रक्षेद्वायवीं मधुसूदनः । उदीचीं श्रीधरो रक्षेदैशानीं तु गदाधरः ॥ ऊर्ध्वं गोवर्धनधरो ह्यधस्ताद्धरणीधरः । एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे पद्मं तथोत्तमम् । वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ॥ उपेन्द्रः पातु ब्रह्माणमाचार्य्यं पातु वामनः । अच्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षजः ॥ कृष्णो रक्षतु सामानि ह्यथर्वं माधवस्तथा । उपविष्टाश्च ये विप्रास्तेऽनिरुद्धेन रक्षिताः ॥ यजमानं सपत्नीकं पुण्डरीकविलोचनः । रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ॥ वेदमन्त्रैश्च कर्त्तव्या रक्षा शुभ्रैश्च सर्षपैः । कृत्वा पोटलिकां पूर्वं बध्नीयाद्दक्षिणे करे ॥ वेदमन्त्राश्च तत्रादौ-गायत्री १ ॐगणानान्त्वा० २ ॐजातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ३ ॐसप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ४ ॐन तद्रक्षाᳪसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳪह्येतत् यो बिभर्त्ति दाक्षायणᳪहिरण्यᳪस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ५ यदाबध्नन्दाक्षायणा हिरण्यᳪ शतानीकाय सुमनस्यमानाः तन्मऽआबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम् ६ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानोत्कृत्यां किरामि ७ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ८ रक्षोहणो वो व्वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वो व्वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो व्वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणौ वां व्वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां व्वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ९ मा नःशᳪसो अररुषो धूर्त्तिः प्रणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते १० प्रत्युष्टᳪरक्षः प्रत्युष्टा अरातयो निष्टप्तᳪरक्षो निष्टप्ताऽअरातयः ऊर्वन्तरिक्षमन्वेमि ११ रक्षोहा विश्वचर्षणीरभियोनिमयो हते द्रोणे सधस्थमासदत् १२ एभिर्मंत्रैः पोटलिकामभिमन्त्र्य कर्मान्तेदक्षिणकरे बध्नीयात् । बन्धनमंत्रः—येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥ त्वं यविष्ठ दाशुषो नॄःपाहि शृणुधी गिरः रक्षा तोकमुत त्मना रक्षा सुरक्षा भूयात् ॥ इतिरक्षाविधानम् ॥

## अथ घृतच्छाया

आज्यपात्रं घृतपूरितं सद्रव्यं कृत्वा चन्दनाक्षतैश्चतुर्षु स्थानेषु सम्पूज्य कुशैर्दूर्वाभिर्वा मंत्रैरभिमन्त्रयेत् । मंत्राः—ॐआज्यं परमयज्ञीयमाज्यं तेजोमयो निधिः । आज्यं हि देवदेवानां प्रियमाज्ये स्थितं जगत् ॥ तदाज्यवीक्षणे भक्त्या कृते मङ्गलमाप्नुयात् । दुःस्वप्नो

दुर्निमित्तं च विघ्नौघो नश्यति ध्रुवम् ॥ तेजः प्रज्ञा च शौर्य्यं च बलं चापि प्रवर्द्धते । पुण्यं सप्ताङ्गराज्यं च भवेदन्यदपीप्सितम् ॥ ज्ञात्वा वाऽज्ञानतो वापि मनोवाक्कायकर्म्मभिः । कृतं यत्पातकं तन्मे घृतस्पर्शाद्विनश्यतु ॥ आज्ये चैव मुखं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ॥ इत्यभिमन्त्र्य सङ्कल्पः अद्येहामुकगोत्रोऽमुकराशिरमुकशर्म्माहं सर्वारिष्टविनाशार्थमाज्यावेक्षणं करिष्ये । ( ॐतेजोसीति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः आज्यं देवता आज्यावेक्षणे विनियोगः) ॐतेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् । आज्येन देवास्तृप्यन्ति आज्ये लोकाः प्रतिष्ठिताः ॥ भौमान्तरिक्षं दिव्यं वा यन्मे कल्मषमागतम् । तत्सर्व्वमाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥ आज्ये चैव मुखं दृष्ट्वा सर्वपापैः प्रमुच्यते । ॐध्रुवोसि ध्रुवायं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् घृतेन द्यावापृथिवी पूर्य्येथामिन्द्रस्य च्छदिरसि विश्वजनस्य च्छाया ॥ छायादर्शनं पापनाशनम् इत्थमवलोक्याज्यस्पर्शं कृत्वा सङ्कल्पः अद्येहामुकराशिरमुकशर्माहं इदमवलोकितमाज्यं ताम्रपात्रस्थितं सद्रव्यं मृत्युञ्जयदैवत्यं मृत्युञ्जयप्रीतये सर्वारिष्टपरिहारार्थम् अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॐतत्सन्न मम । ब्राह्मणं सम्पूज्य दद्यात् दानवाक्यं पठेत् कामधेनोः समद्भूतं देवानामुत्तमं हविः । आयुर्वृद्धिकरं दातुराज्यं पातु सदैव माम् ॥ ब्राह्मणश्च गृहीत्वा मंत्राशिषं दद्यात् ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । श्रीमृत्युञ्जयप्रसादोस्तु इति ॥ इतिघृतच्छाया ॥

## अथ कुशकण्डिका

अथातो गृह्यस्थालीपाकानां कर्म्म । स्थण्डिले कुण्डे वा वेद्यां शुद्धायां भूमौ त्रिभिर्दर्भैः परिसमूहनं गोमयोदकेनोपलेपनं खादिरेण खड्गाकृतिना स्फ्येन तदभावे स्रुवेण प्रागग्रास्तिस्रो रेखाः कृत्वा अनामिकाङ्गुष्ठाभ्यां यथोल्लेखिताभ्यो रेखाभ्यः पांसूनुद्धृत्य ईशानकोणे निक्षिपेत् मणिकोदकेन कमण्डलूदकेन वाऽभ्युक्ष्य अग्निमुपसमाधाय ताम्रपात्रस्थमग्निं प्रणयेत् इति पञ्चभूसँस्कारान्कृत्वा ताम्रपात्रस्थमग्निं वेद्यां स्वाभिमुखं स्थापयेत् ॐअग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे देवाँ २ ॥ आसादयादिह ॥ इत्यग्निं संस्थाप्य आचार्य्यब्रह्मणोर्वरणंकुर्य्यात् अद्येहामुकोहं अमुककर्म्मनिमित्तकहोमकर्म्मणि आचार्य्यब्रह्मणोः पूजनपूर्वकं वरणं करिष्ये । भूमिदेवाग्रेस्यर्घं दत्वा गन्धद्वारेति गन्धविलेपनं कृत्वाक्षतपुष्पैः सम्पूज्य वरणसामग्रीं गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतपुष्पमालावासोलङ्करणादिभिः करिष्यमाणामुकहोमकर्म्मणि आचार्य्यकर्म्म कर्तुं आचार्य्यत्वेन त्वामहं वृणे वृतोस्मीतिप्रत्युक्तिः तथाऽमुकहोमकर्म्मणि कृताकृतावेक्षणाय ब्रह्मकर्म्मकर्तुं ब्रह्मत्वेन त्वामहं वृणे । वृतोस्मि । आचार्य्यं प्रार्थयेत्–आचार्य्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेस्मिन्नाचार्यो भव सुव्रत ॥ ब्रह्माणं प्रार्थयेत्-यथा चतुर्मुखो ब्रह्मा सर्ववेदधरो विभुः । तथा त्वं मम यज्ञेस्मिन्ब्रह्मा भव द्विजोत्तम ॥ अस्य यज्ञस्य निष्पत्त्यै भवन्तोभ्यर्थिता मया । सुप्रसन्नेन कर्त्तव्यं शान्तिकं विधिपूर्वकम् ॥ अस्मिन् होमकर्म्मणि त्वं मे आचार्य्यो भव अहं भवानीति प्रत्युक्तिः त्वं मे ब्रह्मा भव अहं भवानीति प्र० इतिवरणं विधाय अग्नेः दक्षिणतो ब्रह्मासनम् तत्र ब्रह्मोपवेशनम् आत्मासनं यजमानासनम् अग्नेरुत्तरतः आसनद्वयं कल्पयित्वा प्रणीतापात्रं सव्यहस्ते कृत्वा जलेनापूर्य दर्भैराच्छाद्य-

ब्रह्ममुखमवलोक्य प्रथमासने निधाय आलभ्य द्वितीयासने निदध्यात् दिशंदिशं प्रागग्रैरुदगग्रैश्च कुशैः परिस्तरणम् पुरस्तात् दक्षिणतः पश्चात् उत्तरतः। अथनन्ति वस्तून्यासादयेत् पवित्रच्छेदनानि त्रीणि कुशतरुणानि द्वे पवित्रे साग्रे अनन्तगर्भे प्रोक्षणीपात्रम् आज्यस्थाली चरुश्चेत् चरुस्थाली सम्मार्जनकुशाः पञ्च उपयमनकुशास्त्रिप्रभृतयः त्रयोदशपर्य्यन्ता ग्राह्याः समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः स्रुवः खादिरः गव्यमाज्यं व्रीहितण्डुलाः पूर्णपात्रं बहुभोक्तृपुरुषाहारपरिमितं कर्मोपयोगिनो दक्षिणा वरो वा एतानि वस्तूनि उत्तरवृद्ध्या स्थापयेत् त्रिभिर्दर्भैर्द्वे च्छेद्ये प्रादेशमात्रे पवित्रे कृत्वा पात्रान्तरेण हस्तेन वा प्रणीतोदकेन पवित्रप्रोक्षणम् पवित्राभ्यामाज्यस्थालीं सम्प्रोक्ष्य तथा चरुस्थालीं सम्मार्जनकुशान् उपयमनकुशान् समिधः स्रुवम् आज्यम् पूर्णपात्रं दक्षिणाञ्च सम्प्रोक्ष्य अग्निप्रणीतयोर्मध्ये असञ्चरे प्रोक्षणीं स्थापयेत् निरूप्याज्यमधिश्रयेत् चरुश्चेदाज्यचर्वोर्युगपदारोपणम् आज्यं ब्रह्माधिश्रयति चरुमाचार्यः अर्द्धश्रिते चरावाज्ये वा ज्वलदुल्मुकं समन्ताद्भ्रामयेत् स्रुवमधोमुखं प्राञ्चं प्रतप्य सव्ये कृत्वा सम्मार्जनकुशैः अग्रतो मूलपर्य्यन्तं मूलतोऽग्रपर्य्यन्तं सम्मार्ज्य पुनः प्रतप्य कराभ्यां सम्मार्ज्य दक्षिणतः कुशोपरि निदध्यात् आज्यमुद्वास्य उत्तरतः स्थापयित्वा पश्चादानीय पूर्ववपवित्राभ्यामुत्पूय अवेक्ष्य अपद्रव्यनिरसनं कृत्वा उपयमनकुशानादाय वामकरे कृत्वा तिष्ठन् घृताक्ताः समिधः पर्य्युक्ष्य स्वाहेति जुहुयात् ॐसमिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् आस्मिन्हव्या जुहोतन् १ सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन अग्नये जातवेदसे २ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि बृहच्छोचा यविष्ठ्य ३ ॐउप त्वाग्ने हविष्मतीघृताचीर्य्यंतु हर्य्यत जुषस्व समिधो मम ४ स्वाहा। ततः प्रोक्षण्युदकेन सपवित्रेण दक्षिणचुलुकगृहीतेन ईशानाद्युत्तरपर्य्यन्तं सम्प्रोक्ष्य पवित्रे प्रणीतायां निदध्यात् संश्रववारणार्थं प्रोक्षणीपात्रं प्रणीताऽग्न्योर्मध्ये निदध्यात् ततो द्रव्यत्यागसङ्कल्पः—अद्येहामुकोहममुकहोमकर्म्मणा यक्ष्ये तत्र प्रजापतिमिद्रमग्निं सोममग्निं वायुं सूर्य्यमग्नीवरुणावग्नीवरुणावग्निं वरुणं सवितारं विष्णुं विश्वान्मरुतः स्वर्कान्वरुणमदितिमग्निं प्रजापतिमग्निंस्विष्टकृतं चाज्येनाहं यक्ष्ये एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तं ॐतत्सद्यथादैवतमस्तु इतिसङ्कल्प्य एतन्त इति प्रतिष्ठाप्य अमुकनामाग्ने सुप्रतिष्ठितो वरदो भव। ध्यानम् ॐतदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः १ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् २ न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः हिरण्यगर्भ इत्येषः मा माहिꣳसीदित्येषा यस्मान्नजात इत्येषः ३ एषो ह देवः प्रदिशो नु सर्वा पूर्वो ह जातःसऽउगर्भेऽअन्तः स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ४ ॐचत्वारि शृङ्गा त्रयोऽअस्य पादा द्वेशीर्षे सप्त हस्तासोऽ अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यं२॥ आविवेश ५ ॐअग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ६ इति ध्यात्वा आवाहयेत् ॐवैश्वानरो नऽऊतयऽआप्रयातु परावतः अग्निर्न्नः सुष्टुतीरुप १ ॐसप्त तेऽअग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धामप्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा २ इत्यावाह्य अमुकाग्नये नमः इति नाममन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य रेखाः पूजयेत् यथा पूर्वरेखायां ॐब्रह्मणे नमः मध्यरेखायां ॐविष्णवे नमः उत्तररेखायां ॐरुद्राय नमः ततोग्निजिह्वापूजनम् ॐरक्तायै नमः ॐश्वेतायै नमः ॐपीतायै नमः ॐतीव्रायै नमः ॐधूम्रायै नमः ॐज्वालिन्यै नमः

ॐविस्फुलिङ्गिन्यै नमः इति सप्तजिह्वाः सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा आघाराज्यभागौ जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये इति त्यागं विधाय हुतशेषं प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रे निक्षिपेत् ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदꣳसोमाय इति हुत्वा ततः प्रकृतहोमं विधाय भूरादिहोमं कुर्य्यात् (व्याहृतीनां प्रजापति ऋषिर्गायत्र्युष्णिगनुष्टुब्छन्दांसि अग्निवायुसूर्या देवता प्रायश्चित्तहोमे विनियोगः) ॐभूः स्वाहा इदमग्नये ॐभुवः स्वाहा इदं वायवे ॐस्वः स्वाहा इदꣳसूर्य्याय ( त्वन्नोऽग्ने इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्व्वप्रायश्चित्तहोमे विनियोगः ) ॐत्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवया सिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्याम् ( सत्वन्नोऽअग्ने इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः ) ॐस त्वन्नोऽअग्नेवमो भवोति नेदिष्ठोऽअस्याऽउषसो व्युष्टौ अवयक्ष्व नो वरुणꣳरराणो व्वीहि मृडीकꣳसुहवो नऽएधि स्वाहा । इदमग्नीवरुणाभ्याम् ( अयाश्चाग्ने इति प्रजापतिऋषिर्विराट्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः ) ॐअयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि अया नो यज्ञँ व्वहास्यया नो धेहि भेषजꣳस्वाहा इदमग्नये ( येते शतमिति शुनःशेफऋषिस्त्रिष्टुप्छन्दो वरुणसवितृविष्णुर्विश्वेदेवामरुतः स्वर्का देवताः सर्वप्रायश्चित्तहोमे विनियोगः) ॐये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे- मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्योमरुद्भ्यः स्वर्केभ्यः ( उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दः वरुणोदेवता सर्व्वप्रायश्चित्तहोमे विनियोगः) ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्यव्रते तवानागसाऽअदितये स्याम स्वाहा । इदंवरुणायादित्यै ॐअग्नयेप्रजापतये स्वाहा इदमग्नयेप्रजापतये ॐअग्नयेस्विष्टकृते स्वाहा इदमग्नयेस्विष्टकृते ततः संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः बर्हिर्होमः ब्रह्मणे पूर्णपात्रदानम्· अद्येहामुकाहम् अमुककर्माङ्गहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यायमपूर्णपूरणार्थञ्च इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं सम्प्रददे ॐतत्सच्च मम इति दत्वा मंत्रपाठः ॐअक्रन्कर्म्म कर्म्मकृतः सह व्वाचा मयोभुवा देवेभ्यःकर्म्म कृत्वाऽस्तं प्रेत सचाभुवः ।। ततः पूर्णाहुतिं जुहुयात् यजमानेनान्वारम्भः कार्य्यः ब्रह्मणा स्रुवौ घृतं देयम् आचार्य्यो होमं कुर्य्यात् स्रुवं सुपूजितं नारिकेलपूगीफलादिफलवस्त्रसहितं कृत्वा ॐस्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्चमऽ आधवनीयश्च मे व्वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पंताम् । इतिमंत्रेण स्रुवं सम्पूज्य सङ्कल्पः अद्येहामुकोऽहं अमुककर्म्माङ्गहोमकर्म्मणःसाङ्गफलप्राप्तये न्यूनातिरिक्तपरिपूर्त्यर्थं मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये ( मूर्द्धानं दिव इति भरद्वाजऋषिस्त्रिष्टुप्छन्दो महावैश्वानरो देवता मृडनामाग्नौ पूर्णाहुतिहोमे विनियोगः ) ॐमूर्द्धानं दिवोऽअरतिम्पृथिव्या व्वैश्वानरमृतऽआजातमग्निं कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः स्वाहा १ ॐसदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषꣳस्वाहा २ ॐयाम्मेधान्देवगणाः पितरश्चोपासते तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा ३ ॐमेधाम्मे व्वरुणो ददातु मेधामग्निः प्रजापतिः मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा ४ ॐपूर्णादर्व्वि परा पत सुपूर्णा पुनरापत व्वस्नेव विक्रीणावहाऽइषमूर्ज्जं शतक्रतो स्वाहा ५ एभिर्मन्त्रैः-

पूर्णाहुतिहाम विधाय अग्निपूजनं कुर्यात्–श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं बलं श्रियम् । आयुष्यं द्रव्यमारोग्यं देहि मे हव्यवाहन ॥ १ ॐतनूपाऽअग्नेऽसि तन्वं मे पाहि ॐआयुर्दाऽअग्नेऽस्यायुर्म्मेदेहि ॐवर्च्चोदाऽअग्नेऽसि वर्च्चो मे देहि अग्ने यन्मे तन्वा ऊनन्तन्मऽआपृण ॐमेधाम्मे देवः सविताऽआदधातु ॐमेधाम्मे देवी सरस्वती आदधातु ॐमेधामश्विनौ देवावाधत्ताम्पुष्करस्रजौ ॐ अङ्गानि च मऽआप्यायन्ताम् इतिसर्व्वाङ्गान्युपस्पृशेत् वाक्च मऽआप्यायताम् इति मुखे प्राणश्च मऽआप्यायताम् इति नासिकायां चक्षुश्च मऽआप्यायताम् इति नेत्रयोः श्रोत्रञ्च मऽआप्यायताम् इति श्रोत्रयोः यशोबलञ्च मऽआप्यायताम् इतिबाह्वोः । ततस्त्र्यायुषकरणं भस्मना ॐत्र्यायुषंजमदग्नेः इतिललाटे ॐकश्यपस्य त्र्यायुषम् इतिग्रीवायाम् ॐयद्देवेषु त्र्यायुषम् इतिदक्षिणस्कन्धे ॐतन्नोऽअस्तु त्र्यायुषम् इतिहृदि ॐत्र्यायुषमितिसर्वेण मन्त्रेण सर्वाङ्गमालभेत् ततो होमसाङ्गदक्षिणासङ्कल्पः अद्येहेत्यादि अमुकोहं अमुककर्म्म-निमित्तकहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां सुवर्णदक्षिणां अग्निदैवत्यां सुवर्णनिष्क्रयीभूतं द्रव्यं वा आचार्य्याय तुभ्यं संप्रददे तथा भूयसीं दक्षिणां अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् तथा यथोपपन्नेनान्नेन ब्राह्मणाँश्च भोजयिष्ये ततोग्निं-विसर्ज्जयेत्–गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ भो भो वह्ने महाशक्ते सर्वकर्म्मप्रसा-धक । कर्म्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥ यान्तु देवगणाः सर्व्वे पूजामादाय मामकीम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ ॐयज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहा ॐधामच्छदग्नि-रिन्द्रो ब्रह्मा देवो बृहस्पतिः सचेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे । इत्यग्निं विसर्जयित्वा दक्षिणां दत्वा अभिषेकतिलकरक्षाबन्धन-घृतच्छायामन्त्रपाठादिकं कारयेत् ॥ इतिकुशकण्डिका ॥

## अथ दुष्टतिथ्यादिषु प्रथमरजोदर्शनविचारस्तस्य शांतिश्च

अथ संस्कारविधौ निरूप्यमाणायां क्रमेण प्रथमं प्राप्तस्य गर्भाधानस्य रजोदर्शनानन्तरमेव विहितत्वात्, रजोदर्शनशान्तेश्च तत्पूर्वमवश्यकर्तव्यतया शान्तिप्रकरणोचिताऽपि साऽत्रैव गर्भाधानसंस्कारात्पूर्वं निर्दिष्टा, तद्विचारश्च तत्पूर्वमेव निर्दिष्टः । तत्र प्रथमं मासफलम्—प्रथमर्त्तौ मधौ नारी विधवा भवति ध्रुवम् । वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता भवेत् ॥ आषाढे च मृतापत्या श्रावणे च धनान्विता । भाद्रपदे दुर्भगा स्यादाश्विने च तपस्विनी ॥ ऊर्ज्जेऽप्यल्पायुषी नारी मार्गशीर्षे बहुप्रजा । पौषे च पुँश्चली नारी माघे पुत्रसुखान्विता ॥ फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥ अथ पक्षफलम्—शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् ॥ अथ सौरमानेन मासफलम्--आत्महा भ्रूणहा मेषे वृषे पुत्रवती भवेत् । द्वन्द्वे कन्याप्रसूर्नारी मृतापत्या च कर्किणि ॥ सिंहे वैधव्यमायाति कन्यायां स्त्रीप्रसूर्भवेत् । तुलायां बहुपुत्राढ्या दुष्टकर्म्मरताऽलिनि ॥ चापे पुत्रधनाढ्या च मकरे सुखिनी भवेत् । सकृत्प्रजावती कुम्भे मीने चाल्पप्रजा भवेत् ॥ अथ तिथिफलम्--आद्यर्त्तौ सुभगा नारी प्रतिपत्सु रजस्वला । द्वितीयायां धनं भाग्यं तृतीयायां सुतान्विता ॥ चतुर्थ्यां विधवा नारी पञ्चम्यां धनदायिनी । सुखभागिनी तु षष्ठ्यां स्यात्सप्तम्यां धन-

वर्द्धिनी ॥ अष्टम्यां राक्षसी नारी नवम्यां पापवर्द्धिनी । दशम्यां प्रीतिकर्त्री स्यादेकादश्यां सुतान्विता ॥ द्वादश्यां दुर्भगा नारी
द० प० त्रयोदश्यां हिरण्यदा । पुंश्चली च चतुर्दश्यां पूर्णिमायां तु पुण्यदा ॥ अमायां विधवा नारी जायते नात्र संशयः ॥ अथ वारफलम्-
रोगिणी रविवारे तु सोमे चैव बहुप्रजा । अङ्गारे चात्महा नित्यं बुधे कन्याप्रसूर्भवेत् ॥ पुत्रिणी गुरुवारे च शुक्रे कन्याप्रसूतिका । रजो. वि.
शनौ तु पुंश्चली नारी प्रथमर्तौ फलं भवेत् ॥ अथ नक्षत्रफलम्—अश्विन्यां धनपुत्राढ्या प्रथमर्तौ रजस्वला । दोषयुक्ता भरण्यां तु १५०
कृत्तिकायां सुपुत्रिणी ॥ रोहिण्यां धनसंयुक्ता मृगे स्यात्सुतशालिनी । आर्द्रायां भर्तृहरिता नितरां दुःखभागिनी ॥ पतिव्रता दितिद्वन्द्वे पुंश्चली च परद्वये । पूर्वाद्वये पुत्रवती मारका च करद्वये ॥ स्वातीद्वये धनवती विधवा स्यात्परद्वये । मूलद्वये नित्ययुक्ता सुभगा स्यात्परद्वये ॥ धनिष्ठायां स्वैरिणी च सती शतभिषाद्वये । अहिर्बुध्न्यद्वये नारी सुभगा भर्तृतत्परा ॥ अथ योगफलम्—आद्यर्तौ दुर्भगा नारी विष्कुम्भे चेद्रजस्वला । वन्ध्या चैवातिगण्डे च शूले शूलवती भवेत् ॥ गण्डे च पुंश्चली नारी व्याघाते चात्मघातिनी । शेषाः शुभावहाः प्रोक्ता योगा नामफलप्रदाः ॥ अथ करणफलम्—बवे पुत्रवती नारी वन्ध्या बालवके तथा । कौलवे पुत्रिणी नारी भवेच्च प्रमदा तथा ॥ तैतिले संमतवती गरे नारी विनश्यति । नष्टप्रजा वणिक्संज्ञे विष्ट्यां वन्ध्या निरन्तरम् ॥ शकुनौ सुचरित्रा च विधवा च चतुष्पदी । नागे च रमिता नारी किंस्तुघ्ने विधवा भवेत् ॥ अथ लग्नफलम्—व्यभिचाररता मेषे वृषे च परभोगिनी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥ पुत्राढ्या सिंहलग्ने तु कन्यायां श्रीमती भवेत् । विचक्षणा तुलायां तु वृश्चिके तु पतिव्रता ॥ मकरे मानहीना तु कुम्भे निर्द्धनवन्ध्यता । मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥ अथ समयफलम्—प्रातःकाले सुतयुता सायाह्ने सर्वभोगिनी । मध्याह्ने च भवेद्वेश्या निशीथे विधवा भवेत् ॥ अथ वस्त्रफलम्—भोगिनी पीतवस्त्रा स्यात्सुभगा चारुवस्त्रिणी । सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता ॥ क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता । दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ॥ नीलाम्बरधरा नारी विधवा नात्र संशयः । मलिनांबरतो नारी दरिद्रा स्यान्नसंशयः ॥ अथ रक्तबिन्दुफलम्—वस्त्रेस्युर्विषमा रक्तबिन्दवः-पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्त्तवे ॥ अथान्यत्फलम्—सम्मार्जनीकाष्ठतृणाग्निसूर्पान्हस्ते दधाना कुलटा तदा स्यात् । तल्पोपभोगे तपसि स्थिता चेत् दृष्टं रजो भाग्यवती तदानीम् ॥ अथाऽशुभफलापवादमाह वशिष्ठः—अशुभमपि समस्तं चार्त्तवे सम्प्रभूतं सुरगुरुसितयुक्ते वीक्षिते वाऽथ लग्ने । तिमिरमिव कठोरज्योतिरुत्पत्तिकाले क्षयमथ समुपैति प्राप्नुयादीप्सितानि । अथ स्थानफलम्—ग्रामाद्बहिः परग्रामे चेत्स्यात्सा व्यभिचारिणी । पतिव्रता पतिस्थाने सुशीला गृहमध्यमे ॥ ग्राममध्ये च वरटा विधवास्या-दिगम्बरा । परागारे च दुःशीला आयुष्या जलसन्निधौ ॥ धनभाण्डे तु संस्था चेत् धनधान्यसुतान्विता ॥ अत्र रजस्वलायाः मात्रादिकृतप्रश्नलग्नाच्छुभाशुभविशेषो भूयान्वशिष्ठेनोक्तः—देवस्थाने पितृस्थाने निन्द्यस्थानेऽन्त्यवेश्मनि । पुष्पवत्याः फलं नास्ति मार्गे चाण्डालवेश्मनि ॥ सुभगा पुत्रयुक्ता च शुभ्र वर्णे सदार्त्तवे । शशशोणितसंकाशे यद्वालक्तकसन्निभे ॥ पुत्रकन्याप्रसूतिः स्यान्नीले तु स्यात् मृतप्रजा ॥ कर्बुरे म्रियते सा च पिङ्गले च मृतप्रजा ॥ कृष्णे तु विधवा नारी रजस्येवं विनिर्दिशेत् । शोणिते बिन्दुमात्रे च स्वैरिणी चाप्यशोभना । वरा मधुस्रवा स्यात्तु दुर्भगा बहुशोणिता । रक्ते रक्तो भवेत्पुत्रः कृष्णे च मृतपुत्रिका ॥ पिच्छिले च भवे-

वन्ध्या काकवन्ध्या च पाण्डुरे । पीते च स्वैरिणी प्रोक्ता सुभगा गुञ्जगे भवेत् ॥ सिन्दूराभे भवेत्कन्या रजःशोणितलक्षणम् । गुरुशुक्रयुते लग्ने प्रेक्षिते वाऽत्रपुष्पजे ॥ सर्वं शुभफलं ज्ञेयं सर्वेषां सम्मतं त्विदम् ॥ अथ शान्तिः । निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते । शान्तिं समाचरेत्तत्र तत्तद्दर्णेन कारयेत् ॥ मण्डलस्येशदिग्भागे व्रीहिराशिं विनिक्षिपेत् । भाराचलप्रमाणं तु वस्त्रेण परिवेष्टयेत् ॥ तस्योपरि न्यसेत्पद्मं तद्दलैकाग्रवर्णकम् ॥ स्वरांश्च विन्यसेत्तत्र द्वे द्वे कोणे यथाक्रमम् । कर्णिकायां न्यसेद्बीजं हृल्लेखामन्त्रसंयुतम् ॥ तस्योपरि न्यसेत्कुंभं वस्त्रेण परिवेष्टितम् । गुडूचीबिल्वापामार्गपत्रमालाः ससर्षपाः ॥ दूर्वापल्लवसंयुक्तं सर्वौषधिगणं न्यसेत् । सहदेवी विष्णुक्रान्ता हरिद्राचूर्णसंयुता ॥ पञ्चपल्लवसंयुक्तं पञ्चरत्नगणं क्षिपेत् । तस्मिन्कुम्भे समावेश्य इंद्राणीमन्त्रमेव च ॥ सवस्त्रां प्रतिमां चैव तस्मिन्नावाहयेत्सुधीः । सर्वान्देवान्समभ्यर्च्य उपचारैस्तु षोडशैः ॥ आपोहिष्ठादिभिर्मंत्रैरब्लिङ्गैर्मंत्रयेत्ततः । समुद्रज्येष्ठं त्र्यम्बकं च विष्णुमन्त्रं जपेत्पुनः ॥ नमस्कारं ततः कृत्वा आचार्यं सम्यगर्चयेत् । ऋत्विग्भ्यो दक्षिणां दद्यात्तत्कुम्भेनाभिषेचयेत् ॥ सवस्त्रां प्रतिमां गां च आचार्याय निवेदयेत् ॥ नारदः–निन्द्यर्क्षतिथिवारेषु यस्याः पुष्पं प्रदृश्यते । तस्याः शान्तिः प्रकर्त्तव्या घृतदूर्वातिलाक्षतैः ॥ तत्प्रत्येकमष्टशतं गायत्र्या जुहुयात्ततः । स्वर्णगोभिस्तिलान्दद्यात्सर्वदोषापनुत्तये ॥ भर्त्ता तत्राभिगमनं वर्जयेदृतुदर्शनात् ॥ इति प्रथमरजोदर्शने तिथ्यादिविचारस्तद्दोषशान्तिविधिश्च ॥ अथ शान्तिप्रकारः । चन्द्रताराऽनुकूले शुभे दिने भर्त्ता प्रातरभ्यङ्गपूर्वकं स्नात्वा शुभासन-उपविश्याचम्य स्वस्तिवाचनं पठित्वा गणेशपूजनं कुर्यात् पूजनसामग्रीं सम्पाद्य अर्घं संस्थाप्य सङ्कल्पं कुर्यात् अद्येहेत्यादि अमुकोऽहं ममास्या वध्वा निन्द्यतिथिवारनक्षत्रादिष्विति यथायोगमुल्लेखं कृत्वा प्रथमरजोदर्शनदोषशान्त्यर्थं शान्तिकर्म्मणि निर्विघ्नताप्राप्तये पूर्वाङ्गत्वेन भगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इतिसंकल्प्य यथाविधि संपूज्य (पृ० १) प्रधानसंकल्पं कुर्यात् ॐअद्येहेत्यादि अमुकोऽहं ममास्या वध्वा दुर्मासक्षतिथिवारयोगकरणमुहूर्त्तसमयवस्त्रेषु प्रथमरजोदर्शनजनितारिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नारदसंहितोक्तप्रकारेण शांतिं करिष्ये तत्पूर्वांगत्वेन सकलमङ्गलाभिवृद्ध्यर्थं मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति संकल्प्य यथाविधिमातृपूजादिविधाय (पृ.३-८)आचार्यं वरयेत् अद्येहेत्यादि करिष्यमाणप्रथमरजोदर्शनशान्तिकर्म्मणि आचार्यकर्म्मकर्तुं आचार्यस्य पूजनपूर्वकं वरणं करिष्ये इतिसंकल्प्य नमोस्त्वनन्तायेति नमोब्रह्मण्यदेवायेत्यादिना गन्धपुष्पाक्षतादिभिः सम्पूज्य वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासोभिः प्रथमरजोदर्शनशान्तिकर्म्मणि आचार्यकर्म्मकर्त्तुं आचार्यत्वेन त्वामहं वृणे इतिवृत्वा आचार्यस्त्वित्यादि प्रार्थयेत् । तत आचार्यः पञ्चभूसंस्कारपूर्वकं स्थण्डिलेऽग्निं संस्थाप्य ब्रह्मवरणं कुर्यात् अद्येहेत्यादि संकीर्त्य प्रथमरजोदर्शनशान्तिकर्मणि ब्रह्मकर्म्मकर्त्तुं ब्रह्मत्वेन त्वामहं वृणे इतिवृत्वा यथाचतुर्मुख इत्यादिना प्रार्थयेत् । ततो यजमानः अग्नेरीशाने कलशविधिना कलशं संस्थाप्य तत्र उक्तरीत्या ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य रक्षाविधानेन रक्षां चाभिमंत्र्य सुवर्णप्रतिमायां इन्द्राणीमावाह्य पूजयेत् ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषः पूषासि घर्मायदीष्व इतिवेदमन्त्रेण ॐइन्द्राण्यै नम इतिनाममंत्रेण च पाद्यादिनीराजनान्तं सम्पूजयेत् तत आचार्यो ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म्म निर्वर्त्य तारणनामानमग्निमावाह्य ॐचत्वारि०(पृ.१२)ॐअग्निं दूतमित्यादि मंत्राभ्यां पाद्यादिनीराजनान्तं सम्पूजयेत् । ततो यजमानो द्रव्यत्यागं कुर्यात् अद्येहेत्यादि प्रथमरजोदर्शनशान्तिकर्म्मणाहं यक्ष्ये तत्र

इदमाज्यं आघाराज्यभागदेवताभ्यः तथेदं घृताक्तदूर्वातिलाद्यत्तद्रव्यं पृथक्पृथगष्टोत्तरशतसंख्यया सवित्रे इन्द्राण्यै च शेषं स्विष्टकृते महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये च मया परित्यक्तं यथादैवतमस्तु ॐतत्सन्न मम इति यजमानेन कृते द्रव्यत्यागे आचार्यः आघाराज्यभागौ हुत्वा प्रकृतहोमं कुर्यात् ॐभूर्भुवः स्वः'''प्रचोदयात् इति गायत्र्या इदं सवित्रे १०८ । ॐअदित्यैरास्नासीन्द्राण्या उष्णीषः पूषासि घर्मायदीष्व स्वाहा इदमिन्द्राण्यै १०८ । ततः प्रकृतहोमानन्तरं ब्रह्मणान्वारब्धो भूरादिनवाहुतिहोमं सर्वप्रायश्चित्तहोमं स्विष्टकृतं च जुहुयात् (पृ.१२) ततः संस्रवप्राशनं पवित्राभ्यां मुखमार्जनं पवित्रयोरग्नौ प्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानम् अद्येहेत्यादि अमुकोऽहं कृतस्य प्रथमरजोदर्शनशान्तिहोमकर्म्मणः साद्गुण्यार्थमपूर्णपूर्णतार्थं च इदं पूर्णपात्रं ब्रह्मणे तुभ्यं सम्प्रददे अक्रन्कर्म्मेति मन्त्रपाठः ॐतनूपाऽअग्नेसीत्यादिभिरङ्गान्यालभेत । ततः पूर्णाहुतिं जुहुयात् त्र्यायुषं कृत्वा दक्षिणासंकल्पः देशकालकीर्त्तनान्ते अमुकोहं ममास्याः वध्वाः दुर्मासतिथिनक्षत्रवारयोगकरणमुहूर्त्त समयवस्त्रेषु जातप्रथमरजोदर्शनसूचितारिष्टनिवृत्तये सकलसौभाग्यप्राप्तये एतद्धोमकर्म्मणः साङ्गतासिद्ध्यै इदं सुवर्णं तथा कलशे आवाहितानामादित्यादिनवग्रहाणां ब्रह्मादिदेवानां प्रतिमायामिन्द्राण्याश्च पूजाकर्मणः साद्गुण्यार्थमिमां दक्षिणां तथा सुपूजितामिमां सौवर्णीमिन्द्राणीप्रतिमां च आचार्याय दातुमहमुत्सृजे तथा शान्तिकाध्यायपाठकर्म्मणः साद्गुण्यार्थमिमां दक्षिणां तथा नवावृत्तिचण्डीपाठकर्म्मणः साङ्गफलप्राप्तये तथा रुद्रैकादशिन्याः साङ्गतासिद्ध्यै च इमां दक्षिणां ब्राह्मणेभ्यो दास्ये तथा कृतैतच्छान्तिकर्म्मणः साङ्गतासिद्ध्यर्थमिमां भूयसीं दक्षिणां च नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दास्ये तथा सकलकर्म्मणः साङ्गतासिद्ध्यै यथासंख्याकान् ब्राह्मणान् भोजयिष्ये इति संकल्प्य दक्षिणां दत्वा देवानग्निंच विसृज्य क्षमापयेत् तत आचार्यादयः कुम्भजलेन समुद्रज्येष्ठा इत्यादि वैदिकैः सुरास्त्वामभिषिञ्चन्त्वित्यादि पौराणैश्च मन्त्रैः सपत्नीकं यजमानमभिषिंचेयुः तिलकरक्षासूत्रबन्धनादिकं च कुर्युः यजमानश्च घृतच्छायादर्शनदाने विधाय ब्राह्मणान्भोजयित्वा स्वयं च इष्टैः सह भुञ्जीत ॥ इति प्रथमरजोदर्शनशान्तिप्रयोगः ॥

## अथ गर्भाधानसंस्कारः

तत्रप्रसङ्गाद्रजस्वलाधर्म्मानाह व्यासः—रजसो दर्शनान्नारी सर्व्वमेव परित्यजेत् । सर्वैरलक्षिता शीघ्रं लज्जिता स्वगृहे वसेत् ॥ एकाम्बरधरा दीना स्नानालंकारवर्जिता । मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला ॥ अश्नीयात्केवलं नक्तं भक्तं मृण्मयभाजने । स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ॥ स्नायादथार्त्त वत्रती सचैलाऽनुदिते रवौ । विलोक्य भर्तृवदनं शुद्धा भवति धर्म्मतः ॥ शुद्धा भवेच्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ५ अथ स्नानानन्तरं पुनरपि रजोदर्शने जाते शुद्धा एवेत्याहापस्तंबः—रजस्वला यदा स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते इति ॥ अथ गर्भाधानप्रयोगः ॥ तत्र प्रथमरजोदर्शने जाते प्रातः भर्त्ता अभ्यङ्गपूर्वकं स्नात्वा सर्वौषधिसप्तमृत्तिकापञ्चत्वक्पञ्चपल्लवसहितकलशोदकेन वधूं स्नापयित्वा अहते धौते वाससी परिधाय स्वासने समुपविश्याचम्य अर्घं संस्थाप्य प्राणायामं कृत्वा गणेशपूजासङ्कल्पः अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमु-

कोहम् अमुकराशेरस्या वध्वाः संस्कारातिशयद्वारा अस्यां जनिष्यमाणसर्व्वगर्भाणां बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीतये गर्भाधानसंस्कारं करिष्ये तत्पूर्वाङ्गत्वेन गणेशपूजनमातृपूजननान्दीश्राद्धपुण्याहवाचनानि करिष्ये इतिसंकल्प्य गणेशपूजामातृपूजानान्दीश्राद्धपुण्याहवाचनानि (पृ०१–८) कृत्वा गर्भाधानं कुर्यात् । यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्यद्दशमं भवेत् । तत्रापत्यं प्रजायेत तस्माद्दक्षत्रयं त्यजेत् ॥ पित्र्यं पौष्णं च ज्येष्ठां च यत्नतो वर्जयेद्बुधः । षोडशर्त्तु निशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ षष्ठदिनस्य युग्मत्वेऽपि "षष्ठ्यां स्यान्मध्यमःसुतः" इति वचनात् षष्ठदिनं त्याज्यम् । तस्माद्रजोदर्शनादारभ्य चतस्रो रात्रीस्त्यक्त्वा पञ्चमीसप्तम्यौ अयुग्मत्वात् षष्ठीं निषिद्धत्वात् सन्त्यज्य अष्टमीमारभ्य षोडशीपर्यन्तं युग्मासु रात्रिषु चन्द्रतारानुकूलासु मघारेवतीज्येष्ठानक्षत्रवर्जितासु अनुरागिणीं स्वलङ्कृतां स्त्रियं स्वयं च स्वलङ्कृतो द्विगुणानुरागः सुलग्ने रात्रौ गर्भाधानं कुर्यात् । तत्र मन्त्राः ॐविष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं तेऽअश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ॐहिरण्मयी ऽअरणी याभ्यान्निर्म्मन्थतामश्विनौ देवौ । तं ते गर्भं दधामहे दशमे मासि सूतवे ॥ ॐरूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शता दश ॥ इतिपठित्वाऽभिगमनं कुर्यात् ततः शौचं विधायाचम्य वध्वा दक्षिणांसस्योपरि हस्तं नीत्वा हृदयमालभते ॐयत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद् विद्यात्पश्येम शरदःशतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ इति पठित्वा ताम्बूलचर्वणं कुर्वीत इति ॥ एवं यदि गर्भं न दधाति तत्रोपायमाह—सैंह्याः श्वेतपुष्पिकामूलं मूलनक्षत्रे उत्पाट्य उदपेषं पिष्ट्वा चतुर्थेऽहनि स्नातायां निशायां वध्वा दक्षिणस्यां नासिकायामासिञ्चति । तत्र मन्त्रः ॐइयमोषधीत्रायमाणा सरस्वती सहमाना अस्या अहं बृहत्याः पुत्रः पितुरिव जाग्रभम् ॥ द्वितीयोपायमाह—पिण्डपितृयज्ञेऽनवघ्रातं मध्यमं पिण्डं पत्नीं प्राशयेत् । मन्त्रः ॐआधत्त पितरो गर्भं कुमारं पुष्करस्रजम् यथेह पुरुषो सदत् ॥ तृतीयोपायमाह—नित्यहोमात्पूर्वं अनेन मन्त्रेण स्त्री एकामाहुतिं जुहुयात् मन्त्रश्च ॐपुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्य्यश्च पुमांसं वर्द्धतां मयि स्वाहेति ॥ ततो योनिस्फुरणादिना गर्भाधानं जातमिति निश्चित्य व्यायामातिभोजनदिवास्वापारोहणकुक्कुटासनादीनि वर्जयेत् । ततःप्रातर्द्दक्षिणां दद्यात् ॥ इति गर्भाधानसंस्कारः ॥

## अथ पुंसवनम्

तत्र पारस्करसूत्रम्—मासे तृतीये पुंसवनं कुर्यात् । तत्र गर्भाधानप्रभृति तृतीये मासि पुंनक्षत्रे यस्मिन्दिने पुष्यश्रवणहस्तमृगशीर्षादिनक्षत्रयोगे न चन्द्रमा भवति तस्मिन् चन्द्रतारानुकूले गर्भिणीं संस्नाप्य तत्पतिः स्वयं च स्नात्वा उभावप्युपोषितौ अहते धौते वाससी परिधाय प्रथमं गणेशं सम्पूजयेत् (पृ०१-३) ततः प्रधानसङ्कल्पः अद्येह अमुकोहं ममास्यां भार्यायां उत्पत्स्यमानापत्यगर्भस्य बीजगर्भसमुद्भवैनोनिवर्हणपुंरूपोदयप्रतिरोधिकर्म्मनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म्म करिष्ये पुंसवनकर्म्मणः पूर्वांगत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इतिसंकल्प्य मातृपूजादि(पृ०३-८)विधाय अस्तमये वटवृक्षस्यावरोहान्मूलाकारान् तदभावे कुशमूलं

वा उदकेन पिष्ट्वा तद्रसं गर्भिण्या दक्षिणनासिकायामासिञ्चति । तत्र मन्त्रः ॐहिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ अथ वामनासिकायाम् ॐअद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ इतिमन्त्राभ्यां उदरप्रान्तिममासिञ्चेत् । सा यदि वीर्य्यवानयं पुत्रः स्यादिति कामयेत तदा उदकपूर्णं शरावं उपस्थे अंके वा धृत्वा गर्भाभिमन्त्रणं कुर्य्यात् मन्त्रः ॐसुपर्णोसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोमऽआत्मा छन्दाᳬस्यङ्गानि यजूᳬषि नाम ॥ साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः सुपर्णोसि गरुत्मान् दिवं गच्छ स्वः पत ॥ इतिमन्त्रेण गर्भाभिमन्त्रणं कृत्वा दक्षिणासङ्कल्पः अद्येहामुकोहं कृतस्यास्य पुंसवनकर्मणः साद्गुण्यार्थम् इमां दक्षिणां भोजनं च ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् ततोऽभिषेकमन्त्रपाठादि कारयेत् ॥ इति-पुंसवनकर्म्म ॥ 

## अथ सीमन्तोन्नयनम्

पंचममासे चन्द्रताराद्यनुकूले दिवसे पूर्वं गणेशपूजनं ( पृ०१-३ ) कृत्वा प्रधानसंकल्पं कुर्यात् अद्येहामुकोहम् अस्यां भार्यायां गर्भाभिवृद्धिपरिपन्थिपिशितप्रियाऽलक्ष्मीभूतराक्षसगणनिरसनक्षमसकलसौभाग्यनिदानभूतलक्ष्मीसमावेशनद्वारा प्रतिगर्भं बीजगर्भसमुद्भ-वैनोनिवर्हणाय श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्म्म करिष्ये इति सङ्कल्प्य मातृपूजनादि ( पृ०३-८ ) विधाय तत्र बहिःशालायां स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य तदीशाने कलशविधिना कलशं संस्थाप्य ( पृ० ८–१० ) तत्र नवग्रहादीना-वाह्य संपूज्य रक्षासूत्रमभिमंत्र्य कलशे संस्थाप्य अग्नेःपश्चात्स्वदक्षिणतो गर्भिणीं स्त्रियमुपवेश्य आचार्य्यब्रह्मणोर्वरणं कृत्वा ब्रह्मोपवेशनादि आसादनान्ते(पृ०११–१२)विशेषोपकल्पनीयानि वस्तून्यासादयेत् आज्यस्थाली चरुस्थाली आज्यं मुद्गाः तिलाः पृथक्पृथक् मृदुपीठः युग्मं शलाटुग्रप्सम् औदुंबरफलयुग्ममपक्वमित्यर्थः एकस्तवकविवद्धं च पवित्रलक्षणास्तिस्रो दर्भपिञ्जूल्यश्च त्रेणी शलली वीरतरशंकुः शरैषिका अश्व-त्थशंकुर्वा पूर्णपात्रं सूत्रपूर्णं लोहकीलकं सूत्रकर्त्तनसाधनमित्यर्थः वीणागाथिनौ चेति । ततः पवित्रच्छेदनादिपर्युक्षणान्तं कर्म्म(पृ.१२)कृत्वा चरुमधिश्रयेत् अर्द्धश्रितेषु तिलमिश्रिततण्डुलान् क्षिपेत् एवं चरुं श्रपयित्वा चरुम् आज्यं चोद्वास्य ततो द्रव्यत्यागं कुर्यात् अद्येहास्मिन् सीमन्तहोमकर्म्मणि आज्येन आघाराज्यभागदेवताभ्यः तिलमिश्रितमुद्गस्थालीपाकेन प्रजापतिं स्विष्टकृतं तथाज्येन भूरादिनवाहुतीर्यक्ष्ये अग्निप्रतिष्ठा एतन्ते० इति मङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव मङ्गलनामाग्नये नम इति पाद्यादिभिः सम्पूज्य आघारावाज्यभागौ-हुत्वा स्थालीपाकेनाज्यमिश्रितेन जुहोति ॐ प्रजापतये स्वाहा इदं प्रजापतये ततः ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । तत आज्येन भूरादिहोमं कृत्वा संश्रवप्राशनादि पूर्णपात्रदानं होमदक्षिणां च विधाय ततोग्नेःपश्चाद्भर्त्तुर्वामतो भद्रपीठोपरि मृद्वासने स्थितायाः स्त्रियाः सीमन्तकेशे अपक्वौदुंबरफलयुग्मेन एकगुच्छेन त्रिभिर्दर्भपिञ्जूलिभिस्त्रेण्या शलल्या शरैषिकया पूर्णलोहकीलेन ललाटा-न्तरमारभ्य द्विधा करोति तत्र मन्त्रः ॐभूर्विनयामि ॐभुवर्विनयामि ॐस्वर्विनयामि इतित्रिर्विनयनं कृत्वा अथ उदुंबरादिपंचकं पुञ्जीकृतं-तस्या वेण्यामावध्नाति मंत्रः ॐ अयमूर्ज्जावतो वृक्षऽऊर्ज्जीव फलिनी भव इति मंत्रेण बध्नीयात् वेण्यां त्रिवृत्कुर्य्यात् अथवीणागा-

  

थिनौ प्रेषयति ॐसोमं राजानं गायेथां यो वाण्यन्यो वीरतर इति तौ प्रेषितौ वीणामादाय स्वदेशीयराज्ञोऽथवा कस्यचिदन्यस्य वीरनृपस्य चरितं गायतः सोमं राजानमन्यं युधिष्ठिरार्जुनादिकं वा गायतः ॐसोम एव नो राजेमा मानुषीःप्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसौ इति पठेत् । ततो गर्भिणीसमीपे गङ्गादिनदीनां नाम गृह्णीयात् ततो दक्षिणासङ्कल्पः अद्येहामुकोहं अस्या भार्यायाः सीमन्तोन्नयनकर्म्मणःसाद्गुण्यार्थं इमां दक्षिणां भोजनं च ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् इति संकल्प्य दक्षिणां दत्वा अभिषेकतिलकरक्षाघृतच्छायात्र्यायुषमन्त्रपाठादिकं कारयेत् ॥ इतिसीमन्तोन्नयनकर्म्म ॥

## अथ जातकर्म

तत्र तावत्सुखप्रसवार्थं सोष्यन्तीकर्म्म । सोष्यन्तीं ( प्रसवशूलवतीं ) प्रसवोन्मुखीं स्त्रियमद्भिरभ्युक्षयति । तत्र मन्त्रः ( एजत्विति प्रजापतिऋषिः पंक्तिश्छन्दः गर्भो देवता अभ्युक्षणे विनियोगः ) ॐएजतु दशमास्यो गर्भो जरायुणा सह यथायं वायुरेजति यथा समुद्र एजति एवायं दशमास्योऽअस्रज्जरायुणा सह ॥ इत्यभ्युक्ष्य मन्त्रं पठेत् (अवैत्विति प्रजापतिऋषिः पंक्तिश्छन्दः उल्बं देवता जपे विनियोगः ) ॐअवैतु पृश्नि शेवलꣳशुने जराय्वत्तवे नैवमाꣳसेन पीवरि । न कस्मिंश्चनायतमव जरायु पद्यताम् ॥ इति पठेत् एतच्चगर्भमात्रविमोक्षणे कार्य्यम् ॥ अथ जातकर्म्मविधिः ॥अथ पुत्रे जाते पिता शीघ्रं सचैलं स्नायात् स्नानसङ्कल्पः अद्येहामुकोहं पुत्रजनननिमित्तकं सचैलं स्नानं करिष्ये इतिसङ्कल्प्य स्नात्वा शुभे नवे धौते वाससी परिधायाचम्य प्राङ्मुख उपविश्याचम्य नालच्छेदनात्पूर्वं गणेशपूजनं कुर्य्यात् पूजासामग्रीं संपाद्य अद्येहामुकोहं जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये करिष्यमाणजातकर्म्मकर्म्मणि निर्विघ्नताकार्य्यसिद्धये पूर्वाङ्गत्वेन गणेशपूजनं करिष्ये इतिसंकल्प्य उक्तप्रकारेण (पृ०१-३) गणेशं सम्पूज्य दक्षिणां दत्वा प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादिसंकीर्त्य अमुकोहमस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायायुर्मेधाभिवृद्धये बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यं संस्कारं करिष्ये । ततो मातृपूजासंकल्पः अद्येहामुकोहं पुत्रजननिमित्तकं गौर्यादिषोडशमातॄणां पूजनं करिष्ये इति संकल्प्य तासां पूजनं पूर्वोक्तप्रकारेण (पृ०३-४) विधाय वसोर्धाराः पातयित्वा आभ्युदयिकश्राद्धं हेम्ना विदध्यात् तत्र प्रतिज्ञायाम् अद्येहेत्यादि अमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाम् अमुकामुकीदेवीनां नान्दीमुखीनां तथामुकगोत्राणामस्मत्पितृ पितामह प्रपितामहानाम् अमुकामुकदेवानां नान्दीमुखानां तथा अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकदेवानां सपत्नीकानां नान्दीमुखानां सत्यवसुसंज्ञकविश्वेदेवपूर्वकं संक्षिप्तसंकल्पविधानेन पुत्रजननिमित्तं नान्दीमुखश्राद्धं करिष्ये नमोवृद्धिवृद्धिश्रियै इतिसंकल्प्य पूर्वोक्तविधानेन (पृ.५-७)नान्दीश्राद्धं विधाय पुण्याहं वाचयेत् यथा अमुकोहं जातस्य पुत्रस्य करिष्यमाणजातकर्म्मकर्म्मणि सकलमङ्गलाभिवृद्ध्यर्थं ब्राह्मणद्वारा पुण्याहं वाचये तदङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इतिसंकल्प्य वृत्वा स्वस्ति वाचयित्वा कलशे नवग्रहानावाह्य संपूज्य(पृ.८-१०)पुत्रस्य मेधाजननाख्यं कर्म्म कुर्यात् तत्र सुवर्णादितैजसे पात्रे मधुघृते मेलयित्वा केवलं घृतं वा सुवर्णान्तर्हितयाऽनामिकयाऽऽदाय जातं कुमारं सकृत्प्राशयति जातस्य जिह्वामनुमार्ष्टीत्यर्थः । तत्र मंत्रः ॐभूस्त्वयि दधामि ॐभुवस्त्वयि दधामि

ॐस्वस्त्वयि दधामि ॐभूर्भुवःस्वःसर्वं त्वयि दधामि इति सकृत्प्राशयेत् इतिमेधाजननम् । अथास्यायुष्यकरणम् । यथा जातस्य नाभि-समीपे दक्षिणकर्णसमीपे वा जपति ॐअग्निरायुष्मान्त्स वनस्पतीभिरायुष्मान् तेन त्वायुषा ऽऽयुष्मन्तं करोमि १ॐसोमऽआयुष्मान्स ओषधीभिरायुष्मान् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि २ॐब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत् तेन त्वाऽऽयुषायुष्मन्तं करोमि ३ ॐदेवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तः तेन त्वायुषायुष्मन्तं करोमि ४ ॐऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तः तेन त्वायुषायुष्मन्तं करोमि ५ॐपितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तःतेन त्वायुषायुष्मन्तं करोमि ६ॐयज्ञ आयुष्मान् स दक्षिणाभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि ७ॐसमुद्र आयुष्मान्स स्रवन्तीभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि ८ इति त्रिर्वा सकृद्वा जपेत् एतदायुष्यकरणम् ॥ ॐत्र्यायुषं जमदग्नेःकश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ इति च त्रिर्वा सकृद्वा जपेत् इति ॥ अथ यदि पितुःकुमारस्य सर्वायुःप्राप्तिकामना स्यात्तदा दिवस्परीत्येकादशभिर्मन्त्रैः कुमारं सर्वाङ्गेष्वभिमृशति मन्त्राश्च (दिवस्परीत्येतस्यानुवाकस्य वत्सप्रीर्भालंदन ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता जाताभिमन्त्रणे विनियोगः ) ॐदिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः तृतीयमप्सु नृमणाऽअजस्रमिन्धानऽएनं जरते स्वाधीः १ विद्मा तेऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत ऽआजगन्थ २ समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षा ईधे दिवोऽअग्नऊधन् । तृतीये त्वा रजसि तस्थिवा ँ समपामुपस्थे महिषाऽअवर्द्धन् ३ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ॥ सद्यो जज्ञानो व्वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः ४ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोम गोपाः । व्वसुः सूनुः सहसोऽअप्सु राजा विभात्यग्रऽउषसामिधानः ५ विश्वस्य केतुर्भुवनस्य गर्भऽआ रोदसीऽअपृणाज्जायमानः । व्वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ६ उशिक्पावकोऽअरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि । इयर्त्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ७ दृशानो रुक्मऽउर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतोऽभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ८ यस्तेऽअद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तन्नय प्रतरं वस्योऽअच्छाभि सुम्नं देवभक्तं यविष्ठ ९ आ तं भज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभज शस्यमाने । प्रियःसूर्ये प्रियोऽअग्ना भवात्युज्जातेन भिनददुज्जनित्वैः १० त्वामग्ने यजमानाऽअनुद्यून्विश्वा व्वसु दधिरे वार्य्याणि त्वया सह द्रविणमिच्छमाना व्व्रजं गोमन्तमुशिजो विवव्रुः ११ इति एकादशर्चः पठित्वा अस्ताव्यग्निरितिद्वादशीमृचं न पठेत् । दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टीति पारस्करः ॥ अथ कुमारस्य पूर्वादिचतुर्दिक्षु मध्ये च ब्राह्मणान्संस्थापयेत् चत्वारश्चतुर्दिक्षु पञ्चमो मध्ये नैर्ऋत्यां वा स्थाप्यः "इममनुप्राणित" इति तान्पिता ब्रूयात् ततःपूर्वदिक्स्थितो विप्रः कुमारसम्मुखं तिष्ठन् तं लक्षीकृत्य "प्राण" इति तारस्वरं ब्रूयात् दक्षिणदिक्स्थितोपि तथा तिष्ठन् "व्यान" इति तथा ब्रूयात् पश्चिमदिक्स्थितोपि तथैव "अपान" इति ब्रूयात् उदक्संस्थित "उदान" इति ब्रूयात् मध्यमस्तूपरिष्टादवेक्षमाणः "समान" इति ब्रूयात् । पञ्चब्राह्मणाभावे स्वयमेव तत्र तत्र गत्वा कुमाराभिमुखो प्राण इत्यादि ब्रूयात् अस्मिन्पक्षे प्रैषो न भवति । अथ यस्मिन्देशे कुमारो जातो भवति तं देशं अनामिकया स्पृशन् एतं मन्त्रं पठन्परामृशति मन्त्रः ( ॐवेदते भूमिर्हृदयमित्यस्य पंक्तिश्छन्दः पृथिवी देवता जन्मभूम्यभिमन्त्रणे विनियोगः ) ॐवेद ते भूमि हृदयं दिवि चन्द्रमसि

श्रितम् । वेदाहं तन्मां तद् विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ इति भूमिमभिमन्त्र्य कुमारं दृष्ट्वा जपति ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । आत्मा वै पुत्र नामासि स जीव शरदः शतम् । अथास्य मातरं दृष्ट्वा जपति ॐ इडासि मैत्रावरुणी वीरे वीरमजीजनथाः सा त्वं वीरवती भव यास्मान् वीरवतोऽकरत् इति । अथ मातुर्दक्षिणं स्तनं प्रक्षाल्य कुमाराय प्रयच्छति (ॐ इमꣳ स्तनमूर्ज्जस्वन्तमिति परमेष्ठी ऋषिः त्रिष्टुप्छंदः अग्निर्देवता स्तनप्रदाने विनियोगः) ॐ इमꣳ स्तनमूर्ज्जस्वंतं धयापां प्रपीनमग्ने सरिरस्य मध्ये उत्सञ्जुषस्व मधुमन्तमर्व्वन्तसमुद्रियꣳसदनमा विशस्व इति ॥ ततो वामं स्तनं प्रक्षाल्य प्रयच्छति ( यस्ते स्तन इति दीर्घतमा ऋषिस्त्रिष्टुप्छन्दः गौर्देवता स्तनप्रदाने विनियोगः ) ॐ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽकः उर्व्वन्तरिक्षमन्वेमि इति ॥ अथ कुमारस्य शिरःप्रदेशे जलपूर्णं कुम्भं दशदिनपर्यन्तं निदधाति ( आपोदेवेष्वित्यस्य प्रजापतिऋषिरनुष्टुप्छन्द आपो देवताः सूतिकायाः शिरःप्रदेशे रक्षार्थोदककुम्भस्थापने विनियोगः) ॐ आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथ इति ॥ ततः सूतिकाद्वारदेशे वेदीं कृत्वा सूतिकाग्निमुपसमाधाय पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य (अत्र प्रणीताप्रणयनादयो न भवन्ति पञ्चभूसंस्कारास्तु भवन्त्येव) स्थापितमग्निं एतन्त इति प्रतिष्ठाप्य ॐ भूर्भुवःस्वरिति प्रगल्भनामाग्निमावाह्य ॐ अग्नये नम इति पाद्यादिभिः सम्पूज्य होमं कुर्यात् तण्डुलफलिकाकणतुषमिश्रान्सर्षपान्गृहीत्वा ( शण्डामर्केति प्रजापतिऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाद्वाराग्नौ तण्डुलफलिकाकणतुषमिश्रसर्षपहोमे विनियोगः) ॐ शण्डा मर्का उपवीरः शौण्डिकेयऽउलूखलः मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः । स्वाहा इदमग्नये ( आलिखन्निति प्रजापतिऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाग्नौ तण्डुलफलिकाकणतुषमिश्रसर्षपहोमे विनियोगः ) ॐ आलिखन्ननिमिषः किं वदन्तऽउपश्रुतिः हर्य्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिः । हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा । इदमग्नये । इदं शण्डामर्कोपवीरशौण्डिकेयोलूखलमलिम्लुचद्रोणासश्च्यवनेभ्यः इतिप्रथमाहुतौ त्यागः । इदमालिखन्ननिमिषकिंवदन्तऽउपश्रुतिहर्य्यक्षकुम्भीशत्रुपात्रपाणिनृमणिहन्त्रीमुखसर्षपारुणच्यवनेभ्यः इति द्वितीयाहुतौ त्याग इत्यपि केचित् । अस्मिन्होमे कुशकण्डिका न भवति सचाग्निरुत्थानपर्यन्तं दशदिनावधि यथा निर्वापितो न भवति तथा कार्य्यम् । उत्थापनं च दशमदिन एव । एता आहुतयो दशदिनपर्यन्तं प्रत्यहं सायंप्रातराहुतिद्वयेन चत्वारिंशत्संख्याका भवन्ति अथ यदि कुमारनामा बालग्रहो रोदनादिना कुमारमुपद्रुतं कुर्यात्तदातदुपद्रवनिवृत्तये तं बालं मत्स्यजालेनोत्तरीयेण वा प्रच्छाद्याङ्के निधायेमं जपेत् ॐ कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर १ तत्सत्यम् यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर २ तत्सत्यम् यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर ३ न नामयति न रुदति न हृष्यति न ग्लायति । यत्र वयं वदामो यत्र चाभिमृशामसि ॥ इतिमन्त्रेणाभिमृश्य दक्षिणासङ्कल्पं कुर्यात् अद्येहामुकोहं जातस्य पुत्रस्य कृतैज्जातकर्मकर्मणः साङ्गताप्त्यै साद्गुण्यार्थं च इमां दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐ तत्सन्न मम ततो भूयसीं सङ्कल्प्य ब्राह्मणेभ्यो दद्यात् । "प्रथमेह्नि तथा षष्ठे दाता नाप्नोति सूतकम्" इतिवचनात्तत्र दानप्रतिग्रहो न दोषायेति । ततोऽष्टाङ्गुलं परित्यज्य नालच्छेदनं कुर्यात् अभिषेकतिलकमन्त्रपाठादि च कारयेत् ॥ ॥ इतिजातकर्मविधिः ॥

## अथ षष्ठीमहोत्सवः

जन्मदिनतः षष्ठदिने पिता प्रातरुत्थाय शुचिं शान्तं श्रौतस्मार्त्तक्रियापरं सपत्नीकं ब्राह्मणं विनयेनोपसृत्य अद्य षष्ठीमहोत्सवार्थं युवामहं निमन्त्रये इति तावुक्त्वा तथास्त्विति ताभ्यामुक्तः स्वगृहानागच्छेत् तौ चोपोषितौ तिष्ठेताम्। तयोस्तेन षष्ठीमहोत्सवं कारयेत् दक्षिणाशक्तौ स्वयं कार्य्यः ततोऽपराह्णसमये ब्राह्मणो गोमयमृत्तिकाभिः काष्ठपीठे स्कन्दप्रद्युम्नयोः मध्ये षष्ठीदेव्याः प्रतिमाः विधाय शुक्लतण्डुलैर्यवैर्वा पूरयित्वा षष्ठ्याः कर्णप्रदेशे दूर्वापल्लवैः कुण्डले सर्वाङ्गेषु षोडशकपर्दिका दद्यात् ततःप्रदोषसमये पुत्रपिता स्नात्वा सन्ध्यादि विधाय पूजासामग्रीं सम्पाद्य द्वारसमीपमागत्य द्वारमातृपूजनं कुर्य्यात्। आचम्य अर्घं संस्थाप्य पूजासंकल्पः अद्येहामुकराशिरमुकोहं अमुकराशेर्बालकस्य करिष्यमाणषष्ठीमहोत्सवकर्मणि पूर्वाङ्गत्वेन द्वारमातृणां पूजनं करिष्ये एतन्त इति प्रतिष्ठाप्य ॐभूर्भुवः स्वः द्वारमातरः सुप्रतिष्ठिता वरदा भवन्तु। ध्यानम् कुमारी धनदा नन्दा विपुला मङ्गलाऽचला। पद्मा चैव तु नामोक्ता सप्तैता द्वारमातरः॥ इतिध्यात्वा ॐकुमार्यै नमः ॐधनदायै नमः ॐनन्दायै नमः ॐविपुलायै नमः ॐमङ्गलायै नमः ॐअचलायै नमः ॐपद्मायै नमः इतिनाममंत्रैः आवाहनासनपाद्यादिनीराजनान्तं सम्पूज्य दक्षिणां दत्वा स्वस्तिवाचनं पठेत् अभ्यन्तरे गच्छेत् तत्र प्रथमं गव्यघृतसर्षपसैन्धवनिम्बपत्राहित्वग्भिः सूतिकासमीपे धूपो देयः ततो गणेशं पूजयेत् आचम्य अर्घं संस्थाप्य पूजासङ्कल्पः अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकराशिरमुकशर्माहं जातस्य पुत्रस्य करिष्यमाणषष्ठीमहोत्सवकर्म्मणि पूर्वाङ्गत्वेन निर्विघ्नतासिद्धये भगवतो गणेशस्य पूजनं करिष्ये इतिसंकल्प्य पूर्वोक्तप्रकारेण(पृ.१-३)गणेशं सम्पूज्य दक्षिणां दत्वा प्रार्थयेत् लम्बोदर महाभाग सर्वोपद्रवनाशन। त्वत्प्रसादादविघ्नेन चिरं जीवतु मे सुतः॥ अथ प्रधानसंकल्पः अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकगोत्रोऽमुकराशिरमुकशर्माहं अमुकराशेः बालकस्य दीर्घायुरारोग्यावाप्तये सर्वोपद्रवशान्तये श्रीपरमेश्वरप्रीत्यर्थं षष्ठीमहोत्सवकर्म्म करिष्ये तत्पूर्वाङ्गत्वेन सर्वाभ्युदयप्राप्तये गौर्य्यादिषोडशमातृणां पूजनं करिष्ये इतिसङ्कल्प्य पूर्वोक्तप्रकारेण ( पृ० ३-४ ) मातॄः पूजयित्वा वसोर्धाराः पातयित्वा दक्षिणां दद्यात् ततः पुण्याहवाचनसङ्कल्पः अद्येहामुकोहं जातस्य पुत्रस्य षष्ठीमहोत्सवकर्म्मणि सर्वाभ्युदयप्राप्तये ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तत्पूर्वाङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इतिसंकल्प्य वरणं कृत्वा उक्तप्रकारेण ( पृ० ७-८ ) पुण्याहं वाचयित्वा कलशं संस्थाप्य तत्र नवग्रहादीनावाह्य सम्पूज्य ( पृ०७-९ ) दक्षिणां दत्वा स्कन्दप्रद्युम्नपूजनं कुर्य्यात् अर्घं संस्थाप्य पूजासंकल्पः अद्येहामुकोहं जातस्य पुत्रस्यायुरारोग्यावाप्तये सर्वोपद्रवशान्त्यर्थं गोमयप्रतिमासु स्कन्दप्रद्युम्नषष्ठीनां जले जन्मदानां च षोडशोपचारैः पूजनं करिष्ये इति संकल्प्य एतन्त इति प्रतिष्ठाप्य ॐभूर्भुवः स्वः गोमयप्रतिमासु स्कन्ददेव प्रद्युम्नदेव षष्ठिदेवि जले जन्मदादेव्यः इहागच्छत इहतिष्ठत सुप्रतिष्ठिता वरदा भवत। अथ स्कन्दध्यानम् मयूरवरमारूढो द्विभुजो बालरूपधृक्। मुद्गरं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत्॥ वराभयकरः साक्षाद्द्विभुजः शिखिलाञ्छनः। किरीटी कुण्डली देवो दिव्याभरणभूषितः॥ अथ प्रद्युम्नध्यानम्—प्रद्युम्नस्तु महाबाहुः शङ्खचक्रगदाधरः। चक्रं दक्षिणहस्ते स्याद्वामहस्ते धनुस्तथा॥ शङ्खं च दक्षिणे दद्याद्गदां वामे प्रदापयेत्। प्रद्युम्नं कारयेद्देवं सर्वभूषणसंयुतम्॥ स्त्रियौ चैवास्य कर्त्तव्ये सर्वलक्षणसंयुते॥ इतिध्यात्वा ॐस्कन्दाय नमः इतिनाममंत्रेण ॐद्रप्सश्चस्कन्द पृथिवीमनु

धामिमं न योनिमनुयश्च पूर्व्वः । समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः ॥ इतिवैदमन्त्रेण च स्कन्दमावाह्य ॐप्रद्युम्नाय नमः इतिप्रद्युम्नं चावाह्य वक्ष्यमाणमन्त्रैर्नाममंत्रैश्च पूजयेत् आसनम्–षण्मुखाय नमस्तुभ्यं सेनाधिपतये नमः । पुष्पासनेन देवेश प्रसीद परमेश्वर । पाद्यम्–गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । पाद्यार्थं ते मया दत्तं गृह्यतां परमेश्वर । अर्घ्यम्–पञ्चरत्नसमेपेतं सर्षपैः परिपूरितम् । पञ्चपल्लवसंयुक्तमर्घ्यं मे प्रतिगृह्यताम् ॥ अर्घ्याङ्गमाचमनीयं नाममन्त्रेण । स्नानम्–नर्मदाचन्द्रभागादिगङ्गासङ्गमजैर्जलैः । स्नापितोसि मया देव प्रीत्यर्थं प्रतिगृह्यताम् । आचमनीयम्–गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । आचमनं स्कंददेव प्रीत्यर्थं प्रतिगृह्यताम् । वस्त्रम्–वेदसूत्रसमायुक्ते यज्ञतानसमन्विते । सर्ववर्णप्रभे देव वाससी प्रतिगृह्यताम् । वस्त्राङ्गमाचमनीयं नाममन्त्रेण । गन्धम्–मलयाद्रिसमुद्भूतं नानागन्धसमन्वितम् । सुरासुरनरानन्दं गन्धं मे प्रतिगृह्यताम् । अक्षताः शुक्लांश्चातीव हृद्यांश्च सुगन्धींश्च विशेषतः । अक्षतांश्च प्रयच्छामि गृहाण परमेश्वर । पुष्पाणि–जलजं स्थलजं वापि पुष्पं कालर्तुसम्भवम् । भक्त्या निवेदितं देव पुष्पं मे प्रतिगृह्यताम् । धूपः–गुग्गुलं घृतसंयुक्तं दशाङ्गेन समन्वितम् । धूपं गृहाण देवेश त्रैलोक्यानन्ददायकम् ॥ दीपम्–सद्वर्त्तिं घृतसंयुक्तमन्धकारविनाशनम् । मया निवेदितं देव गृहाण परमेश्वर ॥ नैवेद्यम्–सत्पात्रसिद्धं सुहविर्विविधानन्दलक्षणम् । भोजनार्थं मया दत्तं नैवेद्यं प्रतिगृह्यताम् । भूषणार्थे द्रव्यं च समर्प्य । नाममंत्रेण जपं कृत्वा समर्प्य । ताम्बूलम् मण्डनं सर्वभूतानां द्रव्यैःसौगन्धिकादिभिः । तांबूलं गृह्यतां देव प्रीतोस्माकं भव प्रभो ॥ नीराजनं कृत्वा पुष्पाञ्जलिं समर्प्य प्रार्थयेत् । तत्र प्रथमं स्कन्दप्रार्थना–नमः कुमाराय महाप्रभाय स्कन्दाय ते स्कन्दितदानवाय । नवार्कबिम्बद्युतये नमोस्तु नमोस्त्वमोघोद्यतशक्तिपाणये १ नमो विशालाय विचारिणेस्तु नमोस्तु ते षण्मुखकामरूपिणे । गुहाय गूढामरणाय धत्रे नमोस्तु ते दानवदारणाय २ नमोस्तु तेऽर्कप्रतिमप्रभाय नमोस्तु गुह्याय गुहाय तुभ्यम् । नमोस्तु ते लोकभयापहाय नमोस्तु ते बालपराक्रमाय ३ नमो विशालायतलोचनाय नमो विशालाय महाव्रताय । नमो नमस्तेस्तु मनोरमाय नमो नमस्तेस्तु करोत्कटाय ४ नमो मयूरोज्ज्वलवाहनाय नमो धृतोदग्रपताकिनेस्तु । नमोस्तु केयूरधराय तुभ्यं नमः प्रभावप्रणताय तुभ्यम् ५ सेनानये पावकिने नमोस्तु कृपापरीतामलदिव्यमूर्त्तये । कृपामयो यज्ञ इवामलस्त्वं नमोऽस्तु षष्ठीश नमो नमस्ते ६ एवं द्वात्रिंशन्नामभिः स्कंदं सम्प्रार्थ्य ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि एवा नो दूर्वे प्रतनु सहस्रेण शतेन च । इतिमन्त्रेण स्कन्दोपरि दूर्वां समर्प्य प्रद्युम्नं प्रार्थयेत्–भो प्रद्युम्न महाबाहो लक्ष्मीहृदयनन्दन । कुमारं रक्ष मे भीतेः प्रद्युम्नाय नमो नमः १ त्रैलोक्यपूजितः श्रीमान्सदा विजयवर्द्धनः । शांतिं कुरु गदापाणे प्रद्युम्नाय नमो नमः २ इति प्रद्युम्नं सम्प्रार्थ्य षट्कृत्तिकाः पूजयेत् तत्र पूजासङ्कल्पः अद्येहेत्यादि जातस्य पुत्रस्य षष्ठीमहोत्सवे सर्वोपद्रवशान्त्यर्थं दध्यक्षतपुञ्जेषु षट्कृत्तिकानां पूजनं करिष्ये एतन्त इतिप्रतिष्ठा ॐभूर्भुवःस्वः शिवे इहागच्छेहतिष्ठ सुप्रतिष्ठिता वरदा भव ॐसम्भूते इ० ॐसन्नते इ० ॐप्रीते इ०ॐअनुसूये इ० ॐक्षमे इ० नाममंत्रैर्गन्धादिभिःपूजनम् ॐशिवायै नमः ॐसम्भूत्यै नमः ॐसन्नत्यै नमः ॐप्रीत्यै नमः ॐअनुसूयायै नमः ॐक्षमायै नमः इति सम्पूज्य प्रार्थयेत् जगन्मातर्जगद्धात्रि जगदानन्दकारिणि । नमस्ते देवि कल्याणि प्रसीद मम कृत्तिके ॥ ॐकार्त्तिकेयाय नमः ॐकार्त्तिकेय महाबाहो गौरीहृदयनन्दन । कुमारं रक्ष मे भीतेःकार्त्तिकेय नमोस्तुते ॥ ततो

विष्णुं प्रार्थयेत्–त्रैलोक्यपूजितः श्रीमान्सदा विजयवर्द्धनः । शान्तिं कुरु गदापाणे नारायण नमोस्तु ते ॥ ॐखड्गाय नमः ॐशङ्खाय नमः ॐमन्थनाय नमः ॐवंशाय नमः इतिसम्पूज्य दक्षिणां दद्यात् अद्येहामुकोहं अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये कृतायाः स्कन्दप्रद्युम्नजन्मदानां पूजायाः साद्गुण्यार्थं श्रीस्कन्दप्रद्युम्नप्रीतये इमां सुवर्णनिष्कयिणीं दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् इति ॥ अथषष्ठीपूजनम् अर्घसंस्थाप्य प्राणानायम्य पूजासङ्कल्पः अद्येहामुकराशिरमुकशर्म्माहं अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये सर्वोपद्रवशान्त्यर्थं गोमयनिर्म्मितमूर्त्तिमायां षष्ठीदेव्याः पूजनं करिष्ये एतन्त इति प्रतिष्ठा ॐभूर्भुवःस्वः गोमयप्रतिमायां षष्ठीदेवि इहागच्छेहतिष्ठ सुप्रतिष्ठिता वरदा भव ॐआँह्रींक्रोंयँरँलँवँशँषँसँहँचँ हंसः सोहं षष्ठीदेव्याः प्राणा इहागत्य सुखं चिरं तिष्ठन्तु जीव इह तिष्ठतु सर्वेन्द्रियाणीह तिष्ठन्तु इति प्राणप्रतिष्ठां च विधाय आत्मनि देवे च न्यासं कुर्य्यात् ॐषाँ हृदयाय नमः ॐषीं शिरसे स्वाहा ॐषूँ शिखायै वषट् ॐषैं कवचायहुम् ॐषौं नेत्रत्रयाय वौषट् ॐषः अस्त्राय फट् इति न्यासं विधाय ध्यायेत्-चतुर्भुजां महादेवीं तुङ्गपीनस्तनीं शिवाम् । मयूरवरमारूढां रक्तवस्त्रधरां शुभाम् ॥ शूलशक्तिवराभीतिहस्तां ध्यायेन्महेश्वरीम् । प्रफुल्लपद्मवदनामर्द्धपद्मासनस्थिताम् ॥ सर्वाङ्गभूषितां देवीं पीनोन्नतपयोधराम् । स्रवत्पीयूषवदनां पीतकौशेयवाससाम् ॥ चतुर्भुजां दक्षिणेन घृतमन्थानवंशकाम् । नीलोत्पलं तु वामेन स्कन्दं तु दधतीं तथा ॥ अधःस्थितकराभ्यां तु महाषष्ठीं विचिन्तयेत् ॥ आवाहनम् । आयाहि पूज्यसे देवि महाषष्ठीति-विश्रुते । शक्तिरूपेण मे बालं रक्ष जागर वासरे ॐअम्बेऽअम्बिकेऽअम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पील-वासिनीम् ॐषष्ठीदेव्यैनमः इति नाममन्त्रेण च आसनं पाद्यं समर्प्य अर्घं दद्यात् अर्घमन्त्रः–पत्रपुष्पफलाम्भोभी रत्नैश्च बहुभिर्युतम् । षष्ठिदेवि मया दत्तमर्घं गृह्ण नमोस्तुते ॥ ततो वैदिकमन्त्रेण नाममंत्रेण च स्नानं स्नानाङ्गमाचमनीयं च समर्प्य वस्त्रम्–तन्तुसन्तानसं-युक्तं कलाकौशेयकल्पितम् । सर्वाङ्गाभरणं श्रेष्ठं वसनं परिधीयताम् ॥ वस्त्राङ्गमाचमनीयं गन्धम्–कुङ्कुमं चन्दनं चैव सुगन्धं सुमनो-हरम् । षष्टिदेवि मया दत्तं गन्धं गृह्ण नमोस्तु ते ॥ अक्षताः–सुगन्धा अतिशुभ्राश्च तण्डुलाः सुमनोहराः । अक्षतार्थं मया दत्ताः षष्ठि-देवि नमोस्तु ते ॥ पुष्पाणि–चतुर्वर्णानि पुष्पाणि सुगन्धीनि विशेषतः । मया नीतानि पूजार्थं गृहाण परमेश्वरि ॥ ॐसमख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा मा मऽआयुः प्रमोषीर्मोऽअहं तव वीरं विदेय तव देवि सन्दृशि ॥ ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् इष्णन्निषाणामुम्मऽइषाण ॥ सर्वलोकम्मऽइषाण ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि एवा नो दूर्व्वे प्रतनु सहस्रेण शतेन च ॥ इतिमन्त्रेण दूर्वां समर्प्य धूपं समर्पयेत्—गुग्गुलुं घृतसंयुक्तं दशाङ्गेन समन्वितम् । षष्ठिदेवि नमस्तुभ्यं धूपं मे प्रतिगृह्यताम् ॥ अष्टौ दीपान्प्रज्वलय्य गव्येनाज्येन संयुक्तान् वर्त्या कर्पूरगर्भया । दीपान्देवि मया दत्तानिमान् गृह्ण नमो-स्तुते ॥ ततो द्वारदेशे वटकापूपाष्टकमालायुतं अजासुतं कर्णताडनादिना भूतादिविद्रावणाय पुनः पुनः शब्दं कारयेत् ततो नैवेद्यम् मोदकानि विचित्राणि शुक्लतण्डुलकं दधि । विचित्रपक्वान्नयुतं तथापूपसमन्वितम् ॥ फेणिकाघृतपूराढ्यं नैवेद्यं प्रतिगृह्यताम् ॥ ॐषष्ठी-देव्यै नम इति नाममंत्रेण जपं विधाय गुह्यातीति समर्प्य नैवेद्याङ्गमाचमनीयं करोद्वर्त्तनार्थे गन्धं च समर्प्य नीराजनम्—अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् । आरार्त्तिकमिदं देवि गृहाण परमेश्वरि ॥ नमस्कारः—जयदेवि जगन्मातर्जगदानन्दकारिणि । प्रसीद

मम कल्याणि महाषष्ठि नमोस्तु ते ॥ ततः पुष्पाणि सङ्गृह्य प्रार्थयेत्—देवानां च ऋषीणां च मनुष्याणां च वत्सले । अमुं मम सुतं रक्ष षष्टिदेवि नमोस्तु ते ॥ पुरा देवैः पूजितासि ब्रह्मविष्णुशिवादिभिः । आवाभ्यामपि देवि त्वं पूज्यसे भक्तिपूर्वकम् । देह्यस्य बालकस्यायुर्दीर्घं तुभ्यं नमोस्तु ते ॥ ततः पिता बालकस्य षष्टीदेव्याःपुरःस्थितः । बद्धाञ्जलिर्भक्तिनम्रो वाक्यमुच्चारयेदिदम् ॥ त्वं देवमाता दितिरब्धिजा त्वं गौरी त्वमेवासि धृतिः क्षमा त्वम् । कीर्त्तिः समृद्धिर्भुवनस्य धात्री त्वमेव देवि प्रणतोस्मि तुभ्यम् ॥ यथा सर्व्वाणि भूतानि त्वयि स्यूतानि रत्नवत् । चराचराणि भूतानि त्वत्तो जातान्यनेकशः ॥ पुमान्साक्षी भवत्येष तेन सत्येन बुद्धिमान् । त्वं सृष्टिराद्या सृजसि प्रजास्त्वां स्थितिस्तथैताः सकला बिभर्षि । त्वामेव वाचा मनसा च कर्म्मणा समर्चयाम्यस्तु शिशुश्चिरायुः ॥ स्वस्ति मेऽस्तु गृहे नित्यं त्वत्प्रसादात्सुरेश्वरि । पुत्रोत्सवमहं नित्यं पश्येयं त्वदनुग्रहात् ॥ ततोऽर्भकस्य जननी प्रार्थयेत्तामतन्द्रिता । तव प्रसादात्तनयस्य वक्त्रं दृष्टं मया देवि नमोस्तु तुभ्यम् । सौभाग्यमारोग्यमभीष्टसिद्धिं देहि प्रजायाश्चिरजीवितं च ॥ गौर्य्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया । तथा ममाप्ययं बालो रक्षतां षष्ठिके नमः ॥ षष्ठिदेवि नमस्तुभ्यं सूतिकागृहवासिनि । पूजितासि मया भक्त्या सबालां रक्ष सूतिकाम् ॥ अथ तद्बान्धवाः सर्व्वे स्वस्तिवाक्यपुरःसरम् । कामयन्तोर्भकस्यायुः प्रार्थयेयुः सयोषितः ॥ ॐस्वस्ति ३ जननी सर्वसौख्यानां वर्द्धिनी कुलसम्पदाम् । साधनी सर्वसिद्धीनां जन्मदे त्वां नता वयम् ॥ पिता पुनः प्रार्थयेत् । जननी सर्वभूतानां बालानां च विशेषतः । नारायणीस्वरूपेण बालं मे रक्ष सर्व्वतः ॥ शक्तिस्त्वं सर्व्वदेवानां लोकानां हितकारिणी । मातृवद्रक्ष मे बालं महाषष्ठि नमोस्तु ते ॥ रुद्राणी रुद्ररूपेण महाविघ्नविनाशिनी । प्राणदे वरदे देवि रक्ष बालं स्वपुत्रवत् ॥ अमुं मम कुलोत्पन्नं रक्ष त्वं देवि बालकम् । पूजितासि महाभागे चिरंजीवतु बालकः ॥ रक्षोभूतपिशाचेषु डाकिनीशाकिनीषु च ॥ मातेव रक्ष मे बालं पन्नगश्वापदेषु च ॥ त्वमेव वैष्णवी देवी ब्रह्माणी च व्यवस्थिता । रुद्रशक्तिस्समाख्याता महाषष्ठि नमोस्तुते ॥ धात्री त्वं कार्तिकेयस्य स्त्रीरूपं मदनस्य च । त्वत्प्रसादादविघ्नेन चिरं जीवतु मे सुतः ॥ ततो बालकं मातुः सकाशादानाय्य भूमौ गोमूत्रेणाभ्युक्ष्य स्थापयित्वा हस्तेन स्पृष्ट्वा रक्षां पठेत् ॐयद्बलं वासुदेवस्य विष्णोरमिततेजसः । भीमस्य ब्रह्मणश्चैव सर्वं भवतु मे सुते ॥ ततोऽञ्जलिं बद्ध्वा प्रार्थयेत् चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च । निक्षेपार्थं मया दत्तं ते मे रक्षन्तु बालकम् ॥ अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा । रक्षन्तु सर्व्वदा सर्व्वे देवाः शक्रपुरोगमाः ॥ रक्ष त्वं वसुधे देवि सन्ध्ये च जगतः प्रिये । आयुः प्रमाणं सकलं देहि देवि नमोस्तु ते ॥ अन्तराह्यायुषस्तस्य ये केचित्परिपन्थिनः । विद्यारोग्यस्य वित्तानां निर्दहस्वाचिरेण तान् ॥ अथाथर्व्ववेदोक्तां रक्षां बालकसमीपे पठेत्–कृत्यानां परिरक्षार्थं तथा रक्षोभयस्य च । रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥ नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः । अभिभवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान्सदा ॥ पृथिव्यामन्तरिक्षे च ये चरन्ति निशाचराः । विदिक्षु दिक्षु ये चान्ये पान्तु त्वां ते नमस्कृताः ॥ पान्तु त्वामृषयो ब्रह्मा दिव्या राजर्षयस्तथा । पर्वताश्चैव नद्यश्च तथा सर्वे च सागराः ॥ अग्नी रक्षतु ते जिह्वां प्राणान् रक्षन्तु वायवः । सोमो व्यानमपानन्तु पर्जन्यः परिरक्षतु ॥ उदानं विद्युतः पान्तु समानं स्तनयित्नवः । बलमिन्द्रो बलं पातु वाचं वाचस्पतिस्तथा ॥ कामं ते पान्तु गन्धर्वाः सत्यमिन्द्रोऽभिरक्षतु । प्रज्ञां च वरुणो राजा समुद्रो नाभि-

मण्डलम् ॥ चक्षुः सूर्य्यो दिशः श्रोत्रं चन्द्रमाः पातु ते मनः। रेतस्ते पान्त्विमा आपो रोमाण्योषधयस्तथा ॥ आकाशं ते निशा पातु देहं तव वसुन्धरा। वैश्वानरस्तवशिरः पातु विष्णुः पराक्रमम् ॥ पौरुषं पुरुषश्रेष्ठो ब्रह्मा पातु भ्रुवौ तव। देहं देहविशेषेण तव पातु वसुन्धरा ॥ एतैर्वेदात्मकैर्मन्त्रैः कृता व्याधिविनाशिभिः। मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥ ब्रवीतु स्वस्ति ते ब्रह्मा विष्णुरुद्रौ तथैव च। स्वस्ति वायुस्तथा सूर्यः स्वस्ति देवा महोरगाः ॥ नारदश्च तथा स्वस्ति कुर्वन्त्वायुः सदैव ते ॥ इति रक्षां पठित्वा बालकं कङ्कणादिभिर्विभूष्य स्वाङ्के निधाय सपत्नीकमाचार्य्यं वस्त्रालंकारादिभिः सम्पूज्य दक्षिणासङ्कल्पं कुर्य्यात् अद्येहेत्यादिसंकीर्त्तनान्ते अमुकोहं अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये कृतायाः षष्ठीदेव्याः पूजायाः साद्गुण्यार्थं षष्ठीदेव्याः प्रीतये इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् दक्षिणां दत्वा भूयसीं संकल्पयेत् अद्येहेत्यादि अमुकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्याभ्युदयप्राप्तये षष्ठीमहोत्सवकर्म्मणि कृतायाः स्कन्दप्रद्युम्नयोः जन्मदानां षट्कृत्तिकानां षष्ठीदेव्याश्च पूजायाः साद्गुण्यार्थं स्कन्दादीनां नवग्रहाणां च प्रीतये इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यः तथान्येभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यश्च विभज्य दातुमहमुत्सृजे ॐतत्सत् न मम इति भूयसीं विभज्य सिद्धान्नेन ब्राह्मणांश्च भोजयित्वा अभिषेकतिलकमन्त्रपाठादि कारयेत् ॥ अथकुलाचाराद्देशाचाराद्वा सुलग्ने समागते अर्द्धरात्रे वा राहोर्वेधनं कुर्य्यात् आचम्यार्घं संस्थाप्य पूजासङ्कल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य षष्ठीमहोत्सवकर्म्मणि उत्तराङ्गत्वेन एतस्य बालकस्य परिरक्षार्थं आयुर्वृद्धये सर्व्वोपद्रवशान्त्यर्थं राहोर्वेधनं करिष्ये तदङ्गत्वेन धनुर्वाणयोः पूजनं करिष्ये इतिसङ्कल्प्य हरिद्राद्रव्यपूगीफलगौरसर्षपादिभिर्मङ्गलद्रव्यैर्दृढां पोटलिकां विधाय गृहाधारदारुणि बध्वा वेधयेत् एतन्त इतिपोटलिकां प्रतिष्ठाप्य ॐभूर्भुवःस्वर्धनुर्वाणौ सुप्रतिष्ठितौ वरदौ भवेताम् इतिधनुर्वाणौ प्रतिष्ठाप्य धनुःपूजामन्त्रः—धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च। त्रयीमूर्तिगतं देवं धनुःशस्त्रं नमाम्यहम् ॥ धनुषे नमः। अथ वाणपूजामन्त्रः। कामदेवस्य ये वाणाः सफलाश्चार्जुनस्य च रामस्य च यथा वाणास्तथास्माकं भवन्त्विह ॥ वाणाय नमः इतिमन्त्राभ्यां धनुर्वाणौ सम्पूज्य बालकमङ्के गृहीत्वा स्वस्तिवाचनं पठन् धनुर्गृहीत्वा वाणेन संयोज्य घण्टाशङ्खवाद्यपुरस्सरं पोटलिकां वाणेन वेधयेत् ततो दक्षिणासङ्कल्पः अद्येहेत्यादि अमुकराशेः पुत्रस्य सर्वोपद्रवशान्तये कृतस्य राहुवेधनकर्म्मणः साद्गुण्यार्थं इमां दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् इतिदक्षिणां दत्वा तिलकमन्त्रपाठादि कारयेत् ततो गव्यघृतसर्षपैः सैन्धवनिम्बपत्रैश्च सूतिकागृहे धूपो देयः। सुराऽहिकृत्तिनिर्गुण्डीवचाः कुष्टं च सर्षपाः। विल्वपत्रमयो धूपः कुमारायुःप्रपोषकृत् ॥ ततो यवप्ररोहणं सुवासिनीनां पूजनं यजमानस्य बालकस्य च महानीराजनं च विधाय बालकं मातृहस्ते समर्प्पयेत्। ततो गृहद्वारि रक्षकान् अपूपमालायुक्तच्छागमुशलादिशस्त्रपाणीन् स्थापयेत् ॥ इतिषष्ठीमहोत्सवपूजा ॥ अथ कथा ॥ ॐनारायणं नमस्कृत्य नरं चैव नरोत्तमम्। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ युधिष्ठिर उवाच। पुत्रजन्मनि कन्याया उत्सवः को विधीयते। किंदानं कस्य पूजा च तन्मे ब्रूहि जनार्दन ॥ श्रीकृष्ण उवाच। शृणु पाण्डव यत्नेन सुतोत्पत्तिमहोत्सवम्। जन्मषष्ठदिने कार्या षष्ठीनाम्ना त्रिशूलिनी ॥ पीठेऽपराह्णसमये गोमयीं प्रतिमां लिखेत्। कपर्दिकाः प्रदातव्याश्चाङ्गे चाङ्गे विशेषतः ४ कर्णे कुण्डलकौ देयौ दूर्वापल्लवशोभितौ। दिव्यवस्त्रपरीधानां तां देवीं पूज-

येत्ततः ५ अग्रे दीपाष्टकं देयं नैवेद्यैर्विविधैः शुभैः। नालिकेरादिकं तद्देशकालोद्भवैः फलैः ६ कलशं स्थापयेत्तत्र अग्रतः पल्लवान्वितम्। द्विजन्मानं सपत्नीकं सदाचारसमन्वितम् ७ आहूय कारयेत्तस्यास्तयोर्हस्तेन पूजनम्। शुक्लतण्डुलवेद्यां तु तस्योपरि समाहिनाम् ८ नृत्यगीतविनोदेन वाद्येन च युधिष्ठिर। रात्रौ जागरणं कार्य्यं दैवज्ञैन द्विजैः सह ९ वटकाष्टकमालाभिर्बद्धग्रीवमजासुतम्। पुनः पुनर्महाशब्दं कारयेत्कर्णताडनात् १० डाकिन्यो यातुधानाश्च भूतप्रेतपिशाचकाः बालग्रहाश्च नश्यन्ति तच्छब्दाकर्णनाद्ध्रुवम् ११ तत्र दानानि देयानि ब्राह्मणेभ्यो विशेषतः। प्रथमेहनि षष्ठे वा दाता नाप्नोति सूतकम् १२ दानं प्रतिग्रहं तत्र श्राद्धं च क्रियते यतः। प्रभाते दीयते दानं नटनर्त्तकगायकान् १३ स्त्रियः सभर्तृकाः पूज्या वस्त्रालङ्करणादिभिः। अनेन विधिना यस्तु षष्ठीदेवीं प्रपूजयेत्। आयुर्वृद्धिर्भवेत्तस्य संततेरपिपाण्डव १४ ॥ इतिषष्ठी महोत्सवपूजा कथा च ॥

## अथ नामकरणम्

तत्र पारस्करसूत्रम्। दशम्यां सूतिकामुत्थाप्य त्रीन्ब्राह्मणान्भोजयित्वा पिता नाम करोति। दशम्यामिति सूतकान्तोपलक्षणम् एकादशे दिवस इत्यर्थः। सूतकान्ते नामकुर्य्यादिति शङ्खः। तच्च सूतकं ब्राह्मणस्य दशाहं क्षत्रियस्य द्वादशाहं वैश्यस्य पञ्चदशाहं शूद्रस्य मासम् इतिवर्णक्रमः सर्व्ववर्णानां दशाहमेव वा देशाचारात् वर्णक्रमपक्षे आनुपूर्व्येण एकादशे त्रयोदशे षोडशे एकत्रिंशत्तमे दिवसे नामकरणम्। सर्व्ववर्णानां दशाहपक्षे सर्व्वेषामेकादशे एव। प्रचेताः—सूतिका सर्व्ववर्णानां दशाहेन विशुद्ध्यति। ऋतौ च न पृथक्धर्म्मः सर्व्ववर्णेष्वयं विधिः॥ मनुः—नामधेयं दशम्यां च द्वादश्यां वास्य कारयेत्। पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते॥ दशमे दिवसे स्नायाच्छुद्ध्यर्थं सा सबालिकेति सर्व्ववर्णसाधारणम्। असम्भवेऽष्टादशे एकोनविंशे दिने शतरात्रे व्युष्टे अयने सँवत्सरे गते वा नामकरणं भवति। पूर्वपूर्वासम्भवे सति एते व्यवस्थितविकल्पाः। तच्च नाम द्व्यक्षरं चतुरक्षरं कवर्गादिपञ्चवर्गाद्यक्षरत्रयहकाराद्यन्तर्गतान्तस्थं कृत्प्रत्ययान्तमदीर्घसमाप्तिकं पुरुषस्य नाम विषमाक्षरं तद्धितप्रत्ययान्तककारादिपञ्चवर्गाद्यक्षरत्रयहकाराद्यन्तर्गतान्तस्थं स्त्रीनामकुर्य्यात्। कुलसंबद्धं नक्षत्राक्षरसंबद्धं वा नाम कर्त्तव्यमितिशंखोक्तिः। केचित्तु मासनामकुर्य्यादिति वदन्ति सम्भवे समुच्चयं कुर्य्यादसम्भवेऽन्यतरत्स्वेच्छया कुर्यादिति॥

## अथ नामकर्म्मप्रयोगः

तत्र नामकर्म्मदिवसे प्रातः सबालां सूतिकां संस्नाप्य कर्त्ता पिता पूर्व्वं गणेशपूजनं कुर्य्यात् दीपं प्रज्वाल्य शुभासन उपविश्याचम्य अर्घं संस्थाप्य प्राणानायम्य पूजासंकल्पः अद्येहेत्यादिदेशकालौ संकीर्त्त्य अमुकराशिरमुकशर्म्माहं अमुकराशेः पुत्रस्य कन्याया वा करिष्यमाणनामकर्म्मणि निष्क्रमणादिकर्म्मणि च निर्विघ्नतया कार्य्यसिद्ध्ये पूर्वाङ्गत्वेन भगवतो गणेशस्य पूजनं करिष्ये इतिसंकल्प्य उक्तविधिना(पृ.१-२)गणेशं सम्पूज्य प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादिदेशकालौ संकीर्त्त्य अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं अमुकराशेरस्य बालकस्य आयुर्वृद्ध्ये व्यवहारसिद्ध्ये बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीतये नामकर्म्म करिष्ये

तथास्य पुत्रस्य श्रीवृद्धये बीजगर्भसमुद्भवैनोनिवर्हणाय निष्क्रमणकर्म्म करिष्ये तथास्य बालकस्यायुर्वृद्धये धनप्राप्तये सूर्य्यावलोकनं भूम्युपवेशनं च करिष्ये करिष्यमाणनामकर्म्मनिष्क्रमणसूर्य्यावलोकनभूम्युपवेशनकर्म्मणां पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि तन्त्रेण करिष्ये इति संकल्प्य पूर्वोक्तविधिना(पृ.३-८)मातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय वेदीं कृत्वा तत्र पञ्चभूसंस्कारपूर्वकमग्निसंस्थाप्य वेद्या ईशानदिग्भागे कलशविधिना (पृ.८) कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य रक्षासूत्रं च प्रतिष्ठाप्य आचार्य्यब्रह्मणोर्वरणं कुर्य्यात् तत्र संकल्पः अद्येहेत्यादि अमुकराशेः पुत्रस्य करिष्यमाणनामकर्म्माङ्गहोमकर्म्मणि आचार्य्यब्रह्मणोः पूजनं वरणं च करिष्ये तथा नामकर्म्माधिकारसिद्धये त्रीन् ब्राह्मणान्भोजयिष्ये इतिसंकल्प्य आचार्य्यब्रह्मणोर्वरणं कृत्वा त्रीन्ब्राह्मणान् भोजयित्वा ब्रह्मासनादि पर्य्युक्षणान्तं कर्म्म (पृ.११-१२) समाप्य पञ्चगव्यहोमार्थं पानार्थं च पञ्चगव्यं कुर्य्यात्। अथ पञ्चगव्यविधिः—अथातः संप्रवक्ष्यामि पञ्चगव्यं यथाविधि। पावनार्थे द्विजातीनामिह लोके परत्र च१ गोमूत्रं गोमयं क्षीरं दधि सर्प्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् २ गोमूत्रे वरुणो देवो हव्यवाहस्तु गोमये। क्षीरे चन्द्रश्च भगवान्वायुर्दध्नि समाश्रितः ३ भानुराज्ये स्थितस्तद्वज्जले हरिरुदाहृतः। दर्भे देवाः स्थिताः सर्व्वे पवित्रं तेन नित्यशः ४ मूत्रं तु नीलवर्णायाः कृष्णाया गोमयं स्मृतम्। पयश्च ताम्रवर्णायाः श्वेताया दधि उच्यते ५ कपिलाया घृतं ग्राह्यं महापातकनाशनम्। अलाभे सर्व्ववर्णानां कपिलैका प्रशस्यते ६ मूत्रस्यैकपलं दद्यात्तदर्द्धं गोमयं स्मृतम्। क्षीरं सप्तपलं दद्याद्दधित्रिपलमुच्यते ७ आज्यस्यैकपलं दद्यात्पलमेकं कुशोदकम्। सर्प्पिः कुशोदकं चैव पृथङ्मन्त्रैर्विधीयते ८ सर्व्वेषामलाभे सर्पिः कुशोदकं पयइतिनिर्णयः। गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि॥ तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम्। सप्तपत्राश्च ये दर्भा अच्छिन्नाग्राः शुकत्विषः। एतैर्गृहीत्वा होतव्यं पञ्चगव्यं यथाविधि॥ इरावती इदं विष्णुर्मानस्तोके च शंवती। गायत्री प्रजापतेनत्वैता आहुतयः स्मृताः॥ आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु। उद्धृत्य प्रणवेनैव त्रिःपिबेत्प्रणवेन तु॥ यद्यदस्थिगतं पापं देहे तिष्ठति देहिनाम्। ब्रह्मकूर्चोदहेत्सर्व्वं तत्तदग्निरिवेन्धनम्॥ पालाशेनाथ पर्णेन स्वर्णपात्रेण वा पुनः। रौप्यपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पिबेत्॥ अथमन्त्राः। ॐतत्सवितुरित्यादिकया गायत्र्या गोमूत्रं गृह्य वरुणं ध्यायन् ताम्रपात्रे स्थापयेत् ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्॥ इति गोमयं संगृह्य अग्निं ध्यायन् तत्रैव स्थापयेत् ॐआप्यायस्व समेतु ते विश्वतःसोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥ इति दुग्धं संगृह्य सोमं ध्यायन् तत्रैव स्थापयेत् ॐदधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः सुरभि णो मुखा करत्प्रण आयुᳪंषि तारिषत्॥ इति दधिगृह्य वायुं ध्यायँस्तत्रैव स्थापयेत् ॐतेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि॥ इति घृतं संगृह्य रविं ध्यायँस्तत्रैव स्थापयेत् ॐदेवस्य त्वा सवितुःप्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ इति कुशोदकं संगृह्य हरिं ध्यायँस्तत्रैव स्थापयेत् ॐआपोहिष्ठेति तिसृभिरालोड्य ॐकारेण कुशत्रयं साग्रं समूलं गृहीत्वा पुनरोङ्कारेण तद्गृहीत्वा जुहुयात् पञ्चगव्यहोमं तु केचिच्छुद्ध्यर्थं पूर्व्वमामनन्ति पश्चाच्चतुर्दशाहुतिहोमं तद्यथावधारितं कर्त्तव्यम् इतिपञ्चगव्यविधिः॥

अथ द्रव्यत्यागसंकल्पः । अद्येह नामकर्माङ्गहोमकर्म्मणाहं यक्ष्ये तत्र आघाराज्यभागदेवताभ्य इदमाज्यं अग्नये विष्णवे रुद्राय अद्भ्यः सवित्रे प्रजापतये अग्नये स्विष्टकृते च इदं पञ्चगव्यं महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः अग्नये प्रजापतये च इदमाज्यं मया परित्यक्तं यथादैवतमस्तु । ततः पार्थिवनामाग्निमावाह्य एतन्त इति प्रतिष्ठाप्य ॐ भूर्भुवःस्वः पार्थिवनामाग्ने सुप्रतिष्ठितो भव ॐतदेवाग्निरितिध्यात्वा ॐपार्थिवनामाग्नये नम इति नाममंत्रेण पाद्यादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य मनसा प्रजापतिं ध्यात्वा ब्रह्मणान्वारब्धो जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय इत्याघारावाज्यभागौ हुत्वा पञ्चगव्यहोमं कुर्यात् तत्र मन्त्राः सर्वमन्त्राणामादिभूतत्वात्प्रथमं गायत्र्या होमः ॐतत्सवितुः० स्वाहा इदंसवित्रे ॐइरावती धेनुमती हि भूतꣳसूयवसिनी मनवे दशस्या व्यस्कभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा । इदं विष्णवे । ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा । इदं विष्णवे । ॐमा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽश्वेषु रीरिषः । मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे । इदं रुद्राय । ॐशन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये शंय्योरभि स्रवन्तु नः स्वाहा । इदमद्भ्यः । ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव यत्कामास्ते जुहुमस्तन्नोऽअस्तु·वयꣳस्याम पतयो रयीणां स्वाहा । इदं प्रजापतये । ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । इति पञ्चगव्यहोमं विधाय हुतशेषं पञ्चगव्यं सूतिकायै दद्यात् । सा च ब्रह्मतीर्थेन त्रिःप्राश्नाति अत्राचारात् स्रुवं गन्धाक्षतपुष्पद्रव्यादिभिः सम्पूज्य ब्रह्मा स्रुवेणान्वारम्भं कारयित्वा सूतिकां भर्त्तुः समीपमानयति सा च बालकमङ्के गृहीत्वाऽग्निं प्रदक्षिणीकृत्य भर्त्तुर्वामत उपविशेत् गणेशाय नवग्रहेभ्यश्च पुष्पाञ्जलिं समर्पयेत् ततो ब्रह्मणान्वारब्धः आज्येन भूराद्या नवाहुतीर्जुहुयात् स्विष्टकृतं च हुत्वा संश्रवप्राशनादि पूर्णपात्रदानान्तं कर्म्म(पृ.११-१२)समापयेत् ॥ ततो दैवज्ञबोधिते सुलग्ने समागते नव्यवस्त्रे कुङ्कुमपिष्टातकेन बालकनाम लिखित्वा एतन्ते० ॐभूर्भुवः स्वः बालकनाम सुप्रतिष्ठितो भवेति प्रतिष्ठाप्य लग्नदानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशेर्बालकस्य नामकर्म्मलग्नाद्यत्रकुत्रस्थानस्थितानां आदित्यादिनवग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टफलोपशान्त्यर्थं इमां सुवर्णनिष्क्रयिणीं दक्षिणां दैवज्ञाय तुभ्यमहं संप्रददे, इतिदक्षिणां दत्वा ततः सुनवांशे समागते लिखितनामकं तन्नव्यवस्त्रं शंखे वेष्टयित्वा तेन बालकस्य दक्षिणे कर्णे पञ्चघोषपुरःसरं अमुकशर्म्मासि दीर्घायुर्भवेति नाम श्रावयेत् । शर्म्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य दासान्तं शूद्रस्य नाम कुर्य्यात् । ततो होमदक्षिणासङ्कल्पः अद्येहेत्यादि अमुकराशेर्बालकस्य नामकर्माङ्गहोमकर्म्मणः साद्गुण्यार्थमिमां सुवर्णदक्षिणां आचार्याय तुभ्यमहं सम्प्रददे इतिहोमदक्षिणां दत्वा नामकर्म्मदक्षिणां दद्यात् अद्येहेत्यादि अमुकराशेर्बालकस्य बैजिकगार्भिकदुरितोपशान्तये दीर्घायुरारोग्यावाप्तये कृतस्य नामकरणकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् ॥ ततो निष्क्रमणं कुर्यात् । तत्र विशेषः अद्येहेत्यादि अमुकराशेरस्य बालकस्य करिष्यमाणनिष्क्रमणकर्म्मणि सर्वारिष्टनिवृत्तिपूर्वकदीर्घायुरारोग्यावाप्तये जले दिगीशानां दिशां चन्द्रस्य अर्कस्य वासुदेवस्य गगनस्य च पूजनं करिष्ये एतन्ते० ॐभूर्भुवःस्वः जले दिगीशादिदेवा गगनपर्य्यन्ताः सुप्रतिष्ठिता वरदा भवन्तु एवं

प्रतिष्ठाप्य नाममन्त्रेण ध्यानादि ॐदिगीशेभ्यो नमः ॐदिग्भ्यो नमः ॐचन्द्राय नमः ॐअर्काय नमः ॐवासुदेवाय नमः ॐगग-
नाय नमः इतिनाममन्त्रैः पाद्यादिभिः सम्पूज्य प्रार्थयेत्—चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च। निक्षेपार्थमिमं दद्मि ते मे
रक्षन्तु बालकम् ॥ अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा। रक्षन्तु सर्व्वदा सर्व्वे देवाः शक्रपुरोगमाः ॥ इतिसम्प्रार्थ्य दक्षिणां दत्वा
शाकुनसूक्तमपि तत्र पठेत् इतिनिष्क्रमणम् ॥ अथसूर्य्यावलोकनम्। तत्र स्वस्तिवाचनपूर्वकं मातुरङ्कस्थितं बालकं बहिरानीय आदित्यं
पूजयेत् यथा आचम्य अर्घं संस्थाप्य भूमौ रक्तचन्दनेन सूर्य्यं लिखित्वा पूजासङ्कल्पः अद्येहेत्यादि देशकालौ संकीर्त्य अमुकराशेः
बालकस्य बैजिकगार्भिकदुरितोपशान्तये आदित्यस्य पूजनं करिष्ये ध्यानम् ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजा-
सनसन्निविष्टः। केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः। इतिध्यात्वा ॐआकृष्णेन रजसा वर्त्तमानो निवेशयन्न-
मृतम्मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ इतिवेदमन्त्रेण ॐआदित्याय नमः इति नाममन्त्रेण च आवा-
हनादिनीराजनान्तं सम्पूज्य बालकाय सूर्य्यं प्रदर्शयेत् ( ॐतच्चक्षुरिति दध्यङ्ङाथर्वणऋषिरनुष्टुप्छन्दः सूर्यो देवता सूर्य्योदीक्षणे
विनियोगः ) ॐतच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम शरदः
शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इति मन्त्रेण बालकाय सूर्य्यं प्रदर्श्य दक्षिणां दद्यात् ॥ इतिसूर्य्यावलोकनम् ॥
अथभूम्युपवेशनम्। तत्र गोमयेन सुलिप्तायां भूमौ ॐपृथिव्यै नमः ॐवाराहाय नमः ॐकुलदेवतायै नमः इतिनाममन्त्रैर्भूमौ पृथिवीं
वाराहं कुलदेवतां च प्रतिष्ठाप्यावाह्य उपचारैः सम्पूज्य भूमिं प्रार्थयेत्—रक्षैनं वसुधे देवि सदा सर्वगते शुभे। आयुःप्रमाणं निखिलं
निक्षिपस्व हरिप्रिये ॥ अचिरादायुषस्तस्य ये केचित्परिपन्थिनः। जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥ धारिण्यशेषभूतानां
मातस्त्वमधिका ह्यसि। अजरा चाप्रमेया च सर्वभूतनमस्कृते ॥ त्वमेवाशेषजगतां प्रतिष्ठा चाश्रयो ह्यसि। कुमारं पाहि मातस्त्वं ब्रह्मा
तदनुमन्यताम् ॥ इतिसम्प्रार्थ्य शङ्खघण्टानादपूर्वकं बालकं भुवावुपवेशयेत् आचाराद्द्रव्ये पादस्थापनम् ततस्तं बालं देवब्राह्मणेभ्यः
प्रणमय्य तैराशीर्वादादिभिरभिनन्दितं प्रदक्षिणमार्गेण गृहाभ्यन्तर्नयेत् ॥ अथ तत्र जीवमातृणां पूजनं कुर्य्यात् आचम्य अर्घं संस्थाप्य
पूजासंकल्पं कुर्यात् अद्येहेत्यादिसंकीर्त्य अमुकराशेरमुकनाम्नः पुत्रस्य नामकर्मादिकर्म्मणामुत्तराङ्गत्वेन भित्तिलिखितानां कल्याण्यादिजीव-
मातृणां पूजनं करिष्ये एतं ते० ॐभूर्भुवःस्वः कल्याण्यादिसप्तजीवमातरः इहागच्छन्तु इहतिष्ठन्तु सुप्रतिष्ठा वरदा भवन्तु इतिप्रतिष्ठाप्य ध्यायेत्
कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा। जया च विजया चैव सप्तैता जीवमातरः ॥ इतिध्यात्वा ॐकल्याण्यै नमः ॐ-
भद्रायै नमः ॐपुण्यायै नमः ॐपुण्यमुख्यै नमः ॐजयायै नमः ॐविजयायै नमः इतिनाममन्त्रैरावाहनादिनीराजनान्तं सम्पूज्य गुड-
सर्पिर्भ्यां वसोर्धाराः पातयेत् अद्येहामुकोऽहं जीवमातृणां प्रीतये गुडसर्पिर्भ्यां वसोर्धाराः पातयिष्ये ॐवसोः पवित्रमसि शतधारं वसोः
पवित्रमसि सहस्रधारं देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः इतिमन्त्रेण भित्तौ मातृणामुपरि वसोर्धाराः
पातयित्वा प्रार्थयेत् ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया। कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ॥ वाराही घन-
घोरघर्घरमुखी चैन्द्री च वज्रायुधा। चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ दक्षिणासंकल्पः अद्येहामुकोऽहं अमुकराशेर्बाल-

कस्य नामकर्माङ्गजीवमातृकापूजनकर्म्मणः सद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॥ अथ भूयसीदक्षिणा अद्येहेत्याद्युच्चार्य्य

द० प० अमुकोहं अमुकराशेरमुकनाम्नो ऽस्य बालकस्य दीर्घायुरारोग्यावाप्तये बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृतानां नाम- अन्न०

करणनिष्क्रमणसूर्य्यावलोकनभूम्युपवेशनजीवमातृकापूजनकर्म्मणां साद्गुण्यार्थं कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां

प्रीतये इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यस्तथान्येभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यो विभज्य दास्ये ॐतत्सत् दक्षिणां ३२

दत्वा तत्राचारान्महानीराजनादि कारयित्वा अभिषेकतिलकमन्त्रपाठादिकारयेत् ब्राह्मणान् स्वेष्टबन्धुवर्गादीन्भोजयित्वा स्वयं भुञ्जीतेति ॥

इतिनामकरणनिष्क्रमण-सूर्य्यावलोकन-भूम्युपवेशन-जीवमातृपूजनविधानम् ॥

## अथान्नप्राशनविधिः

षष्ठेऽष्टमे वा मासि संवत्सरे पूर्णे वा पुरुषस्यान्नप्राशनं कुर्यात् । स्त्रीणां तु पञ्चमे वा मासि । तत्र ज्योतिःशास्त्रोक्ते चन्द्र-ताराऽनुकूले दिवसे कर्त्ता कृतनित्यक्रियः शुचिः शुक्लवासाः प्रथमं गणेशं पूजयेत् । स्वासन उपविश्याचम्यार्घं संस्थाप्य पूजासंकल्पः अद्येहेत्यादिसंकीर्त्य अमुकराशिरमुकशर्माहं अमुकराशेरमुकस्य पुत्रस्य करिष्यमाणान्नप्राशनकर्म्मणि निर्विघ्नतया कार्य्यसिद्ध्यै पूर्वाङ्ग-त्वेन भगवतो गणेशस्य पूजनं करिष्ये । पूर्वोक्तप्रकारेण(पृ.१-३)गणेशं सम्पूज्य प्रधानसंकल्पः अद्येहेत्याद्युच्चार्य अमुकोहं अमुकराशेरस्य बालकस्य मलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्ध्ये बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीतये अन्नप्राशन-कर्म्मकरिष्ये तत्पूर्वाङ्गत्वेन गौर्य्यादिषोडशमातॄणां पूजनं नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये । इतिसंकल्प्य पर्वोक्तविधिना (पृ.३-८) मातृ-पूजननान्दीश्राद्धपुण्याहवाचनानि विधाय होमार्थं वेदीं कृत्वा तत्र पञ्चभूसंस्कारपूर्व्वकमग्निं संस्थाप्य(पृ.११) आचार्य्यब्रह्मणोर्वरणं कुर्य्यात् अद्येहामुकोहं अमुकराशेः पुत्रस्य अन्नप्राशनाङ्गहोमकर्म्मणि आचार्य्यब्रह्मणोः पूजनपूर्व्वकं वरणं करिष्ये इतिसंकल्प्य आचार्य्यब्रह्मणो-र्वरणं कृत्वा कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य तत्र ब्रह्मोपवेशनादि आसादनान्ते (पृ.११-१२) विशेषोप-कल्पनीयान्यासादयेत् अन्नं सव्यञ्जनं रसाश्च उद्धरणपात्रं मधुसक्तुघृतानि पुस्तकशस्त्रादिस्ववृत्तिचिह्नानि इति स्थापयित्वा ततः पर्युक्षणान्तं (पृ.१२)कर्म्म कृत्वा द्रव्यत्यागसंकल्पः अद्येहामुकोहं अमुकराशेः पुत्रस्यान्नप्राशनहोमकर्म्मणि यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोमं देवीं वाचं वाजं आज्येन प्राणमपानं चक्षुःश्रोत्रं च चरुणा शेषेणाज्यचरुणा स्विष्टकृतम् आज्येन महाव्याहृतिदेवताः सर्वप्रायश्चित्तदेवताः प्रजापतिं च यक्ष्ये इदंचर्वाज्यं मया परित्यक्तं ॐतत्सत् तत्तद्देवताभ्यो यथादैवतमस्तु इतित्यागं विधाय शुचिनामानमग्निं संस्थाप्य एतन्ते० ॐ भूर्भुवः स्वः शुचिनामाग्ने इहागच्छेहतिष्ठ सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य ततः तदेवाग्निरित्यादिना ध्यात्वा ॐशुचिनामाग्नये नम इति नाममन्त्रेणावाहनादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो मनसा प्रजापतिं ध्यात्वा जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय ततो द्वे आज्याहुती जुहोति ( देवींवाचमिति भार्गवऋषिस्त्रिष्टुप्छन्दो देवीवाग्देवता आज्याहुतिहोमे विनियोगः ) ॐदेवीं वाचमजनयन्त देवास्तां विश्व-रूपाः पशवो वदन्ति सा नो मन्द्रेषमूर्ज्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा । इदं वाचे । ( वाजोन इति देवा ऋषयस्त्रिष्टुप्छन्दः

अन्नं देवता आज्याहुतिहोमे विनियोगः ) ॐदेवीं वाचमिति पुनः पठित्वा ॐवाजो नोऽअद्य प्रसुवाति दानं वाजो देवाँ २॥ ऋतुभिः कल्पयाति व्वाजो हि मा सर्व्ववीरं जजान विश्वाऽआशा व्वाजपतिर्जयेयꣳस्वाहा। इदं वाचे वाजाय। ततः स्रुवेण चरुमभिघार्य्य आज्यप्लुतेन स्थालीपाकेन जुहोति ( प्राणेत्यादीनां चतुर्णां प्रजापतिर्ऋषिर्यजुश्छन्दोऽन्नं देवता होमे विनियोगः ) ॐप्राणेनान्नमशीय स्वाहा। इदं प्राणाय। ॐअपानेन गन्धानशीय स्वाहा। इदमपानाय। ॐचक्षुषा रूपाण्यशीय स्वाहा। इदं चक्षुषे। ॐश्रोत्रेण यशोऽशीय स्वाहा। इदं श्रोत्राय। तत आज्यचरुभ्यां ब्रह्मणान्वारब्धो जुहुयात् ॐअग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते। तत आज्येन भूराद्या नवाहुतीर्जुहुयात्ॐ ॐभूः स्वाहा इदमग्नये। ॐभुवः स्वाहा इदं वायवे। ॐस्वः स्वाहा इदꣳसूर्य्याय। ॐ त्वन्नोऽग्ने० इदमग्नीवरुणाभ्याम् ॐसत्वन्नोऽअग्ने० इदमग्नीवरुणाभ्याम् ॐअयाश्चाग्ने० इदमग्नये ॐ ये ते शतं० इदं वरुणाय। ॐउदुत्तमं० इदं वरुणायादित्यै ॐअग्नये प्रजापतये स्वाहा इदमग्नये प्रजापतये ततः संश्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानं तत्र संकल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्यान्नप्राशनाङ्गहोमकर्म्मणः साद्गुण्यार्थम् अपूर्णपूर्णार्थं च इदं पूर्णपात्रं सद्रव्यं ब्रह्मन् तुभ्यं सम्प्रददे। ब्रह्मा गृहीत्वा अक्रन्कर्म्मेति मन्त्राशिषं दद्यात्॥ ततः सुलग्ने समागते लग्नदानसंकल्पः अद्येहाद्युच्चार्य अमुकोहं अमुकराशेः पुत्रस्यान्नप्राशनलग्नाद्यत्रकुत्रस्थितानाम् आदित्यादिनवग्रहाणां दुष्टानां दुष्टफलोपशान्त्यर्थं शुभानां शुभफलाधिक्यप्राप्तये इदं सुवर्णम् इमां दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् दक्षिणां दत्वा सर्व्वान् रसान् सर्व्वमन्नं मध्वाज्यसक्तुसहितं एकस्मिन्पात्रे कृत्वा सुवर्णान्तर्हितया मुद्रिकया मातुरुत्सङ्गे स्थितं बालकं स्वाङ्के स्थितं वा देवतापुरतोऽनामिकाङ्गुष्ठाभ्यां हन्तहन्तेतिमन्त्रेण पञ्चवारं प्राशयेत् "हन्तकारं मनुष्या" इतिश्रुतेः। ततो मत्स्यजलेन त्रिवारं मुखं शोधयेत् ततो माता बालकं स्वाङ्कादुत्सृजेत् तदा स बालको वस्त्रशस्त्रलेखनीपुस्तकादि यत् प्रथमं गृह्णाति तेन तस्य जीविका भवेदिति ज्ञातव्यम्। अथ काम्यं प्राशनम्। भारद्वाज्या माꣳसेन वाक्प्रसारकामस्य कपिञ्जलमाꣳसेनान्नाद्यकामस्य मत्स्यैर्जवनकामस्य कृकषायाऽ आयुःकामस्य आट्या ब्रह्मवर्चसकामस्य सर्व्वैः सर्व्वकामस्यान्नपर्य्याय वा॥ भारद्वाजी लाटेति प्रसिद्धा पक्षिणी। वाक्प्रसारो वाग्मित्वम्। कपिञ्जलः कृष्णतित्तिरिः मयूरो वेति केचित्। अन्नाद्यत्वं बहुतमोक्तृत्वम्। जवनो वेगः। कृकषा गृहगोधिका। कलौ गोधांविवर्जयेदितिवचनात्सा कलौ त्याज्या। आट्या स्वनाम्नैव प्रसिद्धा अन्नपर्य्याय वा अन्नवदेकीकृत्यप्राशनमिति वा। अन्नपर्य्यायेत्यत्रविभक्तिकश्छान्दसो निर्देशः। ततो दक्षिणासङ्कल्पः अद्येहामुकोहं अमुकराशेः पुत्रस्यान्नप्राशनाङ्गहोमकर्म्मणः तथान्नप्राशनकर्म्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं चेमां दक्षिणां आचार्य्याय अन्येभ्यो ब्राह्मणेभ्यश्च विभज्य दास्ये तथेमां भूयसीदक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यः तथान्येभ्यो नटनर्त्तकगायकादिदीनानाथेभ्यश्च विभज्य दास्ये तथा यथोपपन्नेनान्नेन यथासंख्याकान् ब्राह्मणांश्च भोजयिष्ये ॐतत्सत् इतिसंकल्प्य दक्षिणां दत्वा रक्षाबन्धनघृतच्छायात्र्यायुषकरणाभिषेकतिलकमन्त्रपाठादि कारयित्वा जीवमातृपूजनं महानीराजनं च कृत्वा ब्राह्मणान्भोजयित्वा इष्टबन्धुसहितः स्वयं भुञ्जीत॥ इत्यन्नप्राशनविधिः॥

---

ॐ द्रष्टव्य कुशकण्डिकाप्रकरण पृष्ठ १२

# अथ जन्मोत्सवविधिः

ब्राह्मे मुहूर्त्त उत्थाय तिलकल्कोदकेन स्नायात् । स्नानसंकल्पः अद्येहेत्याद्युच्चार्य्य अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं आयुरभिवृद्धये संवत्सरावच्छिन्नसुखप्राप्तिकामस्तिलकल्कमिश्रितशीतलोदकेन स्नानं करिष्ये इति स्नात्वा सन्ध्यादिनित्यकर्म्म विधाय जन्मदिने शनिभौमवासरसत्वे तत्सूचितदोषपरिहाराय किञ्चित् ब्राह्मणाय दत्वा अष्टमुष्टिभवेत्किञ्चिदिति किञ्चिद्धान्यम् । ततो नवीनवस्त्रधारणं कुर्य्यात् (परिधास्यै इत्याथर्वणऋषिः पंक्तिश्छन्दो वासोदेवता वस्त्रपरिधाने विनियोगः) ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ इति नवं धौतं वस्त्रं परिधाय उत्तरीयधारणं कुर्य्यात् (यशसामेत्याथर्वणऋषिः पंक्तिश्छन्दः लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः) ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च मा विन्दद्यशो मा प्रतिपद्यताम् । असति वस्त्रान्तरे यदश्वेतिपरिधाय निम्बगुग्गुलुसिद्धार्थदूर्वागोरोचनादिभिः पोटलिकां कृत्वा एतन्त इति प्रतिष्ठाप्य ॐभूर्भुवः स्वः पोटलिके सुप्रतिष्ठिता वरदा भवेति च प्रतिष्ठाप्य दक्षिणहस्ते बध्नीयात् तत उक्तविधिना गणेशं सम्पूज्य सति संभवे कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य अर्घं संस्थाप्य प्रधानसङ्कल्पं कुर्यात् अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं ममायुष्याभिवृद्धये वर्षवृद्धिकर्म करिष्ये तदङ्गत्वेन दध्यक्षतपुञ्जेषु आवाहितानां कुलदेवतादिषष्ठीदेवीपर्य्यन्तानां कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां च पूजनं करिष्ये तत्र स्थाल्यां नूतनं श्वेतवस्त्रं प्रसार्य्य दध्यक्षतान् गृहीत्वा उत्तरवृद्ध्या स्थापयेत् ॐभूर्भुवःस्वः कुलदेवते इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि १ ॐभूर्भुवःस्वः स्वनक्षत्रेश अमुक इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि २ ॐभूर्भुवःस्वः प्रकृतिपुरुषात्मकमातापितरौ इहागच्छतं इहतिष्ठतं पूजार्थं युवामावाहयामि ३ ॐभू० ब्रह्मन् इहागच्छेहतिष्ठ पू० ४ ॐभूः० भानो इहा० ५ ॐ भूः० विघ्नेश इहा० ६ ॐभूः० मार्कण्डेय इहा० ७ ॐभूः० बले इहा० ८ ॐभूः० व्यास इहा० ९ ॐभूः० जामदग्न्य राम इहा० १० ॐ भूः० अश्वत्थामन् इहा० ११ ॐभूः० कृपाचार्य्य इहा० १२ ॐभूः० प्रह्लाद इहा० १३ ॐभूः० हनुमन् इहा० १४ ॐभूः० विभीषण इहा० १५ ॐभूर्भुवःस्वः षष्ठीदेवि इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि १६ इत्यावाह्य एतन्त इति ॐभूर्भुवःस्वः कुलदेवतादिदेवताः षष्ठीदेवीपर्य्यन्ताः इहागच्छन्तु इहतिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु ॐवरदाभयपाणय इति सर्वेषां ध्यानं मार्कण्डेयध्याने विशेषः ॐद्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् । मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतः शुचिः ॥ इति ध्यात्वा नाममंत्रेण पूजनम् ॐकुलदेवतायै नमः ॐजन्मनक्षत्रेशाय अमुकाय नमः ॐप्रकृतिपुरुषात्मकमातापितृभ्यां नमः ॐब्रह्मणे नमः ॐभास्वते नमः ॐविघ्नेशाय नमः ॐमार्कण्डेयाय नमः ॐबलये नमः ॐव्यासाय नमः ॐअश्वत्थाम्ने नमः ॐकृपाचार्याय नमः ॐप्रह्लादाय नमः ॐहनुमते नमः ॐविभीषणाय नमः ॐषष्ठीदेव्यै नमः इतिनाममन्त्रैः आवाहनासनपाद्यार्घस्नानाचमनीयवस्त्रगन्धाक्षतपुष्पधूपदीपनैवेद्यभूषणादिभिः सम्पूज्य नाममंत्रेण जपं विधाय नीराजनं कृत्वा ब्रह्मामुरारिरिति नवग्रहेभ्यः पुष्पाञ्जलिं समर्प्य मार्कण्डेयं प्रार्थयेत्—मार्कण्डेय महाभाग सप्तकल्पान्तजीवन । आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव १ चिरजीवी यथा त्वं भो भविष्यामि तथा मुने । रूपवान्वित्तवाँश्चैव श्रिया युक्तश्च सर्वदा २ मार्कण्डेय नमस्तेस्तु सप्तकल्पान्तजीवन ।

आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने ३ चिरजीवी यथा त्वं तु मुनीनां प्रवर द्विज । कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ४
ततःषष्ठीं प्रार्थयेत्—जय देवि जगन्मातर्जगदानन्दकारिणि । प्रसीद मम कल्याणि महाषष्ठि नमोस्तु ते १ रूपं देहि यशो देहि भगं
भगवति देहि मे । पुत्रान् देहि धनं देहि सर्वान्कामाँश्च देहि मे २ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः
सार्द्धं रक्षां कुर्वन्तु तानि मे ३ इतिसम्प्रार्थ्य ततोऽञ्जलिना मार्कण्डेयाय निवेदितं पयः पञ्चवारं पिबेत् तत्र मन्त्रः—सतिलं गुडसम्मिश्र-
मञ्जल्यर्द्धमितं पयः । मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुःप्रवृद्धये ॥ इति पीत्वा मुखं प्रक्षाल्य दक्षिणासंकल्पः अद्येहेत्यादि अमुकराशिर-
मुकशर्म्माहं आयुरभिवृद्धये कृतायाः कुलदेवतादीनाम् आदित्यादिनवग्रहाणां च पूजायाः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणेभ्यो
विभज्य दास्ये ॐतत्सत् तथा यथोपपन्नेनान्नेन ब्राह्मणाँश्च भोजयिष्ये इतिसंकल्प्य दक्षिणां दत्वा अभिषेकतिलकमन्त्रपाठादिकं
कारयित्वा घृतच्छायां विधाय ब्राह्मणान्भोजयित्वा स्वयं भुञ्जीत । खण्डनं नखकेशानां मैथुनाध्वगमौ तथा । आमिषं कलहं हिंसां
वर्षवृद्धौ विवर्ज्जयेत् ॥ जन्मतिथिरौदयिकी ग्राह्या । इतिजन्मोत्सवविधिः ॥

## अथ कर्णवेधः

तत्र व्यासः—कृतचूडेऽव्रते बाले कर्णवेधो विधीयते । तद्देशाचारकुलाचारतोऽवगन्तव्यम् । वर्षे तृतीये पञ्चमे वेति अयुग्मवर्षे कर्ण-
वेधः तत्र चन्द्रतारानुकूले शुभदिने कर्णवेधोक्तनक्षत्रे पिता प्रातरुत्थाय स्वकीयं प्रातःकृत्यं निर्वर्त्य गणेशपूजनं कुर्यात् आचम्य
अर्घं संस्थाप्य पूजासंकल्पः अद्येहेत्यादि अमुकोऽहममुकराशेः पुत्रस्य करिष्यमाणकर्णवेधकर्मणि निर्विघ्नताप्राप्तये पूर्वाङ्गत्वेन गणेशस्य
पूजनं करिष्ये उक्तविधिना गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् अद्येहेत्याद्युच्चार्य्य अमुकराशिरमुकशर्म्माहं अमुकराशेः पुत्रस्य
बीजगर्भसमुद्भवैनोनिवर्हणद्वारापुष्ट्यायुःश्रीवृद्धये श्रीपरमेश्वरप्रीतये कर्णवेधकर्म्म करिष्ये तत्पूर्वाङ्गत्वेन गणपतिगौर्य्यादिषोडशमातॄणां
पूजनं नान्दीश्राद्धं पुण्याहवाचनं करिष्ये इतिसंकल्प्य उक्तविधिना मातृपूजानान्दीश्राद्धपुण्याहवाचनानि कृत्वा कलशं संस्थाप्य तत्र
नवग्रहानावाह्य जले केशवादिदेवानां पूजनं कुर्यात् तत्रसंकल्पः अद्येहेत्यादि अमुकराशेः पुत्रस्य कर्णवेधकर्म्मणि कलशे आदित्यादिनव-
ग्रहाणां जले केशवादिदेवानां च पूजनं करिष्ये इति संकल्प्य एतन्ते इति ॐभूर्भुवःस्वः कलशे आदित्यादिनवग्रहाः जले केशवादिदेवाः
सुप्रतिष्ठिता वरदा भवन्तु नाममन्त्रेण पाद्यादिभिःपूजयेत् ॐकेशवाय नमः ॐहरायनमः ॐब्रह्मणे नमः ॐचंद्राय नमः ॐसूर्य्याय
नमः ॐदिगीशेभ्यो नमः ॐनासत्याभ्यां नमः ॐसरस्वत्यै नमः ॐगवे नमः ॐगुरुभ्यो नमः इतिनामन्त्रैर्ध्यानावाहनासनपाद्यार्घ-
स्नानाचमनवस्त्रगन्धाक्षतपुष्पधूपदीपनैवेद्यभूषणादिभिःसंपूज्य जपं विधाय समर्प्य नीराज्य पुष्पाञ्जलिं समर्प्य ततः स्वेष्टदेवं भिषग्वरं
ब्राह्मणान् सौचिकं च नमस्कृत्य मातुरुत्सङ्गस्थितं भूषणवस्त्रादिभिरलंकृतं बालकं प्राङ्मुखं गुडमोदकादि भोजनार्थं दत्वा अद्येहेत्यादि
अमुकराशेरस्य बालकस्य कर्णवेधलग्नादमुकस्थानस्थितेनामुकग्रहेण सूचितारिष्टनिवृत्त्यर्थं ग्रहाणां प्रीतये इमां दक्षिणां ब्राह्मणाय दास्ये
इतिलग्नदानं विधाय ततो दैवज्ञबोधिते शुभे लग्ने पिता सौचिकोऽन्यो वा सुवर्णसूच्या रजतसूच्या वा अष्टाङ्गुलया बालकस्य दक्षिणं
कर्णं वेधयेत् तत्रमन्त्रः ( भद्रंकर्णेभिरिति प्रजापतिऋषिस्त्रिष्टुप्छन्दः लिंगोक्तादेवता दक्षिणकर्णाभिमंत्रणे विनियोगः ) ॐभद्रं कर्णेभिः-

शृणुयाम देवा भद्रं पश्येमाक्षभिर्य्यजत्राः स्थिरैरङ्गैस्तुष्टुवा॑ᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ अथ वामकर्णाभिमन्त्रणम् ( वक्ष्यन्तीवेति देवा ऋषयस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता वामकर्णाभिमंत्रणे विनियोगः ) ॐवक्ष्यन्ती वेदागनीगन्ति कर्णं प्रियᳬ सखायं परिषस्वजानाः योषेव शिङ्क्ते विततािधिधन्वन् ज्याऽइयᳬसमने पारयन्ती ॥ इत्यभिमन्त्र्य कर्णौ वेधयित्वा दक्षिणासंकल्पं कुर्यात् अद्येहामुकोहं अमुकराशेरस्य बालकस्य कर्णवेधकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं चेमां दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् तथा यथोपपन्नेनान्नेन ब्राह्मणांश्च भोजयिष्ये इति संकल्प्य दक्षिणां दत्वा अभिषेकतिलकरक्षाबन्धनघृतच्छायामन्त्रपाठादि कारयित्वा जीवमातृपूजनं महानीराजनं च कुर्यात् । इतिकर्णवेधविधिः ॥



## अथाक्षरस्वीकारविद्यारम्भौ

बालकस्य पञ्चमवर्षे कुम्भादित्यविवर्जिते उदगयने चन्द्रतारानुकूले शुभे दिने अक्षरस्वीकारं विद्यारम्भं च कारयेत् । मार्कण्डेयः– अभ्यङ्गस्नानपूर्वन्तु गन्धाद्यैश्च विभूषितः । शुक्लवस्त्रं समास्तीर्य्य तण्डुलोपरि पूजयेत् ॥ एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् । पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ॥ स्वविद्यासूत्रकारं च स्वविद्यां च विशेषतः । एतेषामेव देवानां नाम्ना च जुहुयाद्घृतम् ॥ दक्षिणाभिर्द्विजाग्रयाणां कर्त्तव्यं चात्र पूजनम् । प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् । अध्यापयीत प्रथमं द्विजाशीर्भिः सपूजितम् ॥ अथप्रयोगः ॥ स्वस्तिवाचनं पठित्वा अर्घं संस्थाप्य प्राणानायम्य उक्तविधिना गणेशं सम्पूज्य प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहम् अमुकराशेः पुत्रस्य सर्वविद्याप्राप्तये व्यवहारसिद्धये च अक्षरारम्भं विद्यारम्भं च करिष्ये तत्पूर्वाङ्गत्वेन गणपतिसहितगौर्य्यादि-षोडशमातॄणां पूजनं नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये इतिसंकल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य रक्षासूत्रं च कल्पयित्वा वेदिकायां ताम्रपीठे वा नवं शुक्लं धौतं वस्त्रं समास्तीर्य्य दध्यक्षतपुञ्जेषु गणेशहर्य्यादीन्पञ्चाशद्देवानावाहयेत् तत्रसंकल्पः अद्येहामुकोहं अमुकराशेरस्य बालकस्य अक्षरस्वीकारविद्यारम्भकर्म्मणि पूर्वाङ्गत्वेन दध्यक्षतपुञ्जेषु गणेशहर्य्यादिदेवानां तथा यजुर्विद्यादीनां च आवाहनपूर्वकं पूजनं करिष्ये इतिसंकल्प्य ॐभूर्भुवःस्वःगणेश इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि इत्युक्त्वा स्वदक्षिणतः स्वाभिमुखं स्थापयेत् १ ॐभूर्भुवःस्वः विष्णो इहा. २ ॐभूः० लक्ष्मि इहा. ३ ॐभूः० देवि इहा. ४ ॐभूः० सरस्वति इहा. ५ ॐभूः० स्वविद्ये यजुर्विद्ये इहा. ६ ॐभूः० स्वविद्यासूत्रकार कात्यायन इहा. ७ ॐभूः० ब्रह्मन् इहा. ८ ॐभूः० व्यास इहा. ९ ॐभूः० गौतम इ. १० ॐभू० जैमिने इ. ११ ॐभूः० मनो इ. १२ ॐभूः० पाणिने इ. १३ ॐभूः० कात्यायन इ. १४ ॐभूः० पतञ्जले इ. १५ ॐभूः० यास्क इहागच्छेह. १६ ॐभूः० पिङ्गल इ. १७ ॐभूः गर्ग इ. १८ ॐभूः० कणाद इ. १९ ॐभूः० कपिल इ. २० ॐभूः० वाल्मीके इ. २१ ॐभूः० वामन इ. २२ ॐभूः० धन्वन्तरे इ. २३ ॐभूः० कृशाश्व इ. २४ ॐभूः० भरत इ. २५ ॐभूः० विश्वकर्म्मन् इ. २६ ॐभूः० वेदाः इहागच्छन्तुइहतिष्ठन्तु पूजार्थं युष्मानावाहयामि २७ ॐभूः० पुराणानि इहा. २८ ॐभूः० न्याय इ. २९ ॐभूः० मीमांसे इ. ३० ॐभूः० धर्म्मशास्त्र इहा. ३१ ॐभूः० शिक्षे इ. ३२ ॐभूः० कल्प इ. ३३ ॐभूः० निरुक्त इ. ३५ ॐभूः० छन्दांसि इहागच्छन्तु० ३६ ॐभूः ज्योतिष इ. ३७ ॐभूः० वैशेषिक इ. ३८ ॐभूः०

वेदान्त इ. ३९ ॐभूः० सांख्य इ. ४० ॐभूः० पातञ्जल इ. ४१ ॐभूः० काव्य इ. ४२ ॐभूः० अलङ्कार इ. ४३ ॐभूः० वैद्यशास्त्र इ. ४४ ॐभूः० धनुर्व्वेद इ. ४५ ॐभूः० गान्धर्ववेद इ. ४६ ॐभूः० शिल्पशास्त्र इ. ४७ ॐभूः० पालकाचार्य्य इ. ४८ ॐभूः शालिहोत्राचार्य्य इ. ४९ ॐभूः० शौनिकाचार्य्य इ. ५० इतिसम्बुद्ध्यन्तनाममन्त्रैः क्रमेणावाह्य एतन्त इति प्रतिष्ठाप्य ॐभूर्भुवः स्वः गणेशादिशौनिकान्तदेवताः सुप्रतिष्ठिता वरदा भवन्तु अथ सरस्वत्यावाहने विशेषः भूमौ गोचर्ममात्रं विलिप्य पालाशदण्डोद्धृतां मृदमानीय सैकतं स्थण्डिलं निर्माय तस्योपरि तया मृदा पञ्चकोणं षट्कोणं वा सरस्वतीयन्त्रं विलिख्य तस्मिन्सरस्वतीमावाहयेत् ॐभूर्भुवःस्वः भुवनमातः सर्ववाङ्मयरूपे सरस्वति इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि इत्यावाह्य ॐएतन्ते० ॐभूर्भुवःस्वः अस्यां मृण्मयमूर्तौ सरस्वति सुप्रतिष्ठिता वरदा भव इति प्रतिष्ठापयेत् । अथ ध्यानम् । तत्र पूर्वं गणेशध्यानम् । धृतपाशाङ्कुशकल्पलतासुरदश्च बीजपूरयुतः । शशिशकलकलितमौलिस्त्रिलोचनोऽरुणवपुश्च गजवदनः ॥ भास्वरभूषणदीप्तो बृहदुदरः पद्मविष्टरोल्लसितः । ध्येयोऽनायतदोःपदसरसिरुहः सदा मनुजैः १ अथ विष्णोर्ध्यानम् । उद्यत्कोटिदिवाकराभमनिशं शंखं गदां पङ्कजं । चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ॥ कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजेत् २ अथ लक्ष्मीध्यानम् । कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ॥ बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलाम् । क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम्३ अथदेवीध्यानम् । अध्यारूढां मृगेन्द्रे सजलजलधरश्यामलां हस्तपद्मैः । शूलं बाणं कृपाणं त्वरिजलजगदाचापबाणान्वहन्तीम् ॥ चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरभितः खेटकं बिभ्रतीभिः । कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि ४ अथ सरस्वतीध्यानम् । अङ्कोन्मुक्तशशाङ्ककोटिसदृशीमापीनतुङ्गस्तनीम् । चन्द्राद्धाङ्कितशेखरां मधुमदामालोलनेत्रत्रयाम् ॥ बिभ्राणामनिशं वरं जपवटीं विद्यां कपालं करैराद्यां यौवनगर्विताां लिपितनुं वागीश्वरीमाश्रये ५ इतिध्यात्वा ॐवरदाभयपाणय इति सर्वेषां ध्यानम् ततश्चतुर्थ्यन्तैर्नाममन्त्रैः सर्वेषां पूजनम् ॐगणेशाय नमः ॐविष्णवे नमः ॐलक्ष्म्यै. ॐदेव्यै, ॐसरस्वत्यै. ॐस्वविद्यायै यजुर्विद्यायै. ॐस्वविद्यासूत्रकाराय कात्यायनाय. ॐब्रह्मणे. ॐव्यासाय. ॐगौतमाय. ॐगर्गाय. ॐकणादाय. ॐकपिलाय. ॐवाल्मीकये. ॐवामनाय. ॐधन्वन्तरये. ॐकुशाश्वाय. ॐभरताय. ॐविश्वकर्म्मणे. ॐवेदेभ्यः. ॐपुराणेभ्यः. ॐन्यायाय. ॐमीमांसायै. ॐधर्मशास्त्राय. ॐशिक्षायै. ॐकल्पाय. ॐव्याकरणाय. ॐनिरुक्ताय. ॐछन्दोभ्यो नमः ॐज्योतिषाय नमः ॐवैशेषिकाय नमः ॐवेदान्ताय. ॐसांख्याय. ॐपातञ्जलाय. ॐकाव्याय. ॐअलङ्काराय. ॐवैद्यशास्त्राय. ॐधनुर्वेदाय. ॐगान्धर्ववेदाय. ॐशिल्पशास्त्राय. ॐपालकाचार्याय. ॐशालिहोत्राचार्याय. ॐशौनिकाचार्याय नमः इतिनाममंत्रैः ॐगणनान्त्वा. ॐतद्विष्णोः. ॐश्रीश्चते. ॐसमख्ये. ॐसरस्वती योन्यां गर्भमन्तरश्विभ्यांम्पत्नी सुकृतं बिभर्ति अपाᳫँरसेन वरुणो न साम्नेन्द्रᳫँश्रियै जनयन्नप्सु राजा । इति वैदिकमन्त्रैश्च सर्वेषामासनपाद्यार्घस्नानाचमनवस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलभूषणनीराजनान्तं पूजनं विधाय नाममन्त्रैः पुष्पाञ्जलिं समर्प्य ॐसर्ववाङ्मयरूपिण्यै श्रीसरस्वत्यै नमः इति सरस्वत्यै पुष्पाञ्जलिं समर्प्य नमस्कारप्रदक्षिणाः कुर्यात् ततो वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य आचार्यब्रह्मणोर्वरणं कृत्वा ब्रह्मोपवेशनादिपर्युक्षणान्तं

कर्म्म समाप्य द्रव्यत्यागं कुर्यात् अद्येहामुकराशेरस्य बालकस्याक्षरारम्भविद्यारम्भहोमकर्म्मणाहं यक्ष्ये तत्रेदमाज्यं आघाराज्यभागदेवताभ्यो गणेशादिदेवताभ्यो महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः अग्नये स्विष्टकृते च मया परित्यक्तं यथादैवतमस्तु ॐएतन्ते ॐभूर्भुवः स्वः पुष्टिवर्द्धननामाग्ने सुप्रतिष्ठितो वरदो भवेति अग्निं प्रतिष्ठाप्य ॐतदेवाग्निरिति ध्यात्वा ॐपुष्टिवर्द्धननामाग्नये नमः इतिमन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य ॐप्रजापतये स्वाहा इदं प्रजापतये इत्याद्याघारावाज्यभागौ हुत्वा प्रधानहोमं कुर्यात् ॐगणेशाय स्वाहा इत्यादिश्यैनिकान्तं चतुर्थ्यन्तस्वाहान्तमंत्रैरेकैकामाज्याहुतिं हुत्वा ततो भूरादिनवाहुतिहोमं स्विष्टकृतं च हुत्वा संश्रवप्राशनादिपूर्णपात्रदानान्तं विधाय होमदक्षिणा अद्येहामुकराशेः पुत्रस्य अक्षरारम्भविद्यारम्भकर्म्मणि एतद्धोमकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणां आचार्य्याय दास्ये इति दत्वा धात्रीं वस्त्रभूषणादिभिः सन्तोष्य आचार्य्यं वस्त्रालंकारादिभिःसम्पूज्य लग्नदानं कुर्य्यात् अद्येहामुकराशेः पुत्रस्याक्षरस्वीकारविद्यारम्भलग्नाद्यत्रकुत्रस्थानस्थितानां ग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टफलनिवारणार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये इति लग्नदानं विधाय ब्राह्मणान् सन्तोष्य अभ्यङ्गस्नानपूर्वकवस्त्रसुगन्धालंकारादिभिर्भूषितं बालकं गणेशादिदेवेभ्यः प्रणमय्य प्राङ्मुखो गुरुः पश्चिमाभिमुखं बालकं प्रणवपूर्वकं अक्षरस्वीकारं कारयेत् तत्र प्रथमं गुरुनमस्कारः ॐअज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः । ततः पालाशदण्डोद्धृतशुभधूलिसंयुते शुभपीठे पञ्चकोणं षट्कोणं वा सरस्वतीयन्त्रं विलिख्य तत्र सरस्वतीं प्रणमेत् ॐसरस्वति नमस्तुभ्यं वरदे कामरूपिणि । विश्ववन्द्ये विशालाक्षि विद्यान्देहि नमोस्तु ते ॥ इति प्रणम्य गन्धाक्षतपुष्पपूगीफलादिभिःसम्पूज्य सुवर्णशलाकया रौप्यशलाकया वा अकारादिक्षकारान्तान्वर्णान् लिखित्वा वाचयेत् यथा ॐनमःसिद्धम् अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह क्ष इत्यक्षराणि त्रिवारं वाचयित्वा विद्यारम्भं कारयेत् यस्य ज्ञानदयासिन्धोरिति वागर्थाविवेति च पाठयित्वा गुरुं दक्षिणादिभिः सन्तोष्य प्रणम्य भूयसीं कल्पयेत् अद्येहामुकराशेर्बालकस्य अक्षरस्वीकारविद्यारम्भकर्म्मणोरङ्गत्वेन अक्षतपुञ्जेषु गणेशादिदेवानां पूजनस्य होमकर्म्मणश्च साद्गुण्यार्थं सांगफलप्राप्त्यर्थं चेमां दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् तथा यथोपपन्नेनान्नेन ब्राह्मणांश्च भोजयिष्ये इति संकल्प्य दक्षिणां दत्वा रक्षाबन्धनत्र्यायुषकरणाभिषेकतिलकमन्त्रपाठादिकारयित्वा ब्राह्मणान्भोजयित्वा स्वयं भुक्त्वा यथासुखं विहरेत् ॥ इत्यक्षरस्वीकारविद्यारम्भौ ॥

## अथोपनयनाङ्गत्वेन ग्रहयागपद्धतिर्लिख्यते

तत्रावश्यकं भूमिसंशोधनं शालानिर्माणप्रकारः शालासंस्कारः तत्प्रतिष्ठापूजाविधिश्च सर्वं परिशिष्टप्रकरणे द्रष्टव्यम् ।

तत्र शालायां मण्डपे वा हस्तखातविस्तारं समचतुरस्रं योन्यादियुतं कुण्डं कुर्यात् तदशक्तौ स्थण्डिलं निर्माय तदीशानदिग्भागे नवग्रहस्थापनाय हस्तविस्तृतां वितस्त्युच्छ्रितां वप्रद्वयावृतां समचतुरस्रां उदक्प्रवणां ग्रहवेदिं कुर्य्यात् तस्याः प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायो द्वितीयस्त्र्यङ्गुलोच्छ्रायो द्वावपि द्व्यङ्गुलविस्तारौ कर्त्तव्यौ तत्र वेदिमध्येऽष्टदलकमलं निर्माय तत्तद्वर्णचूर्णेन पूरयित्वा कर्णिकायां पत्रेषु यथोक्तमण्डलेषु प्रतिमासु दध्यक्षतपुञ्जेषु वा तदाकारेण ग्रहाणामावाहनं कुर्य्यात् ॥

तत्र सर्वे शुक्राद्य आदित्याभिमुखाः आदित्यश्च स्वाभिमुखः स्वयं च प्राङ्मुख इतिक्रमः ॥




॥ ग्रहस्थापनवेदीयम् ॥

तत्र कर्त्ता कर्म्मदिवसे प्रातरुत्थाय स्नानसन्ध्यादिनित्यकर्म्म समाप्य सर्वां नवग्रहपूजासामग्रीं सम्पाद्य दीपं प्रज्वलय्य प्राङ्मुख उपविश्याचम्य स्वस्तिवाचनं ( शान्तिपाठं ) पठित्वा प्रथमं गणेशपूजनं कुर्य्यात् । अर्घं संस्थाप्य सूर्य्यायार्घं दत्वा पुनरर्घं संस्थाप्य प्राणायामत्रयं विधाय पूजासंकल्पं कुर्य्यात् ॐविष्णुः ३ अमुकगोत्रोऽमुकराशिरमुकर्माहं अमुकराशेरस्य कुमारस्य बीजगर्भसमुद्भवैनोनिवर्हणायुर्वर्चोऽभिवृद्धिद्वारा श्रीपरमेश्वरप्रीतये अद्य श्वो वा करिष्यमाणचूडाकरणोपनयनवेदारम्भसमावर्त्तनकर्म्मनिमित्तक ग्रहयागकर्मणः पूर्वाङ्गत्वेन निर्विघ्नतया कार्य्यसिद्धये श्रीभगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इतिसंकल्प्य उक्तविधिना गणेशं सम्पूज्य ( पृ० १–३ ) प्रधानदीपं प्रज्वलयेत् ततः प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादिसंकीर्त्तनान्ते अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं अमुकराशेरमुकशर्म्मणोऽस्य बालकस्य बीजगर्भसमुद्भवैनोनिवर्हणद्वारा आयुर्वर्चोमेधाभिवृद्धये श्रीपरमेश्वरप्रीतये च अद्य श्वः परश्वो वा उपनयनात्प्राक् चौलसंस्कारं करिष्ये ( कर्णवेधाक्षरस्वीकारयोरप्यत्रैव कर्तव्यत्वे तु—तथास्य बीजगर्भसमुद्भवैनोनिवर्हणपुष्टयायुः—श्रीवृद्धिद्वारा श्रीपरमेश्वरप्रीतये कर्णवेधं करिष्ये तथास्य सकलविद्याविशारदत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीतये अक्षरारम्भं विद्यारम्भं च करिष्ये ) तथास्य द्विजत्वसिद्ध्या वेदाध्ययनाधिकारसिद्ध्यर्थमुपनयनं करिष्ये तथास्य श्रौतस्मार्त्तकर्म्मानुष्ठानाधिकारसिद्धये वेदारम्भं करिष्ये तथास्य गृहस्थाश्रमार्हतासिद्धिद्वारा श्रीपमेश्वरप्रीतये समावर्त्तनाख्यं कर्म्म करिष्ये ( सति संभवे विवाहेऽपि ग्रहयागः करणीयः तत्र तु कन्याविवाहे ममास्याः कन्यायाः बीजगर्भसमुद्भवैनोनिवर्हणपूर्वकं भर्त्रा सह धर्म्यप्रजोत्पादनद्रव्यपरिग्रहेषु अधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीतये विवाहसंस्कारं करिष्ये इति पुत्रविवाहे ममास्य पुत्रस्य देवपित्रर्णापाकरणहेतुधर्म्यप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वरप्रीतये विवाहसंस्कारं करिष्ये इति च संकल्पः । ) तत्पूर्वाङ्गत्वेन तत्कर्मनिमित्तककरिष्यमाणग्रहयागकर्मणश्च पूर्वाङ्गत्वे सकलमङ्गलाभिवृद्धये गौर्य्यादिषोडशमातृणां पूजनमाभ्युदयिकश्राद्धं पुण्याहवाचनं च सकृत् करिष्ये इति संकल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय ( पृ० ३-८ ) आचार्य्यब्रह्मर्त्विक्सदस्यद्वारपालानां वरणं कुर्य्यात् तत्र संकल्पः अद्येहेत्यादिसंकीर्त्तनान्ते अमुकराशिरमुकशर्म्माहं मम तथास्य कुमारस्य दशा विदशान्तदशास्थितादित्यादिग्रहजनितदुष्टफलोपशान्तिपूर्वकशुभफलप्राप्तये सर्वोपद्रवशान्तिपूर्वकदीर्घायुरारोग्यहर्षविजयप्राप्तये श्रीपरमेश्वरप्रीत्यर्थं चौलोपनयनादिकर्म्मपूर्वाङ्गीभूतं ग्रहयागं करिष्ये तत्पूर्वाङ्गत्वेन आचार्य्यब्रह्मणोः ऋत्विक्सदस्यद्वारपालादीनां च पूजनपूर्वकं वरणं करिष्ये इतिसंकल्प्य आचार्य्याय भूमिदेवाग्रजन्मासि त्वं विष्णुः पुरुषोत्तमः । प्रत्यक्षो यज्ञपुरुषः अर्घोऽयं प्रतिगृह्यताम् ॥ इति । अर्घं निवेद्य गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियमिति नमोस्त्वनन्तायेति च गन्धाक्षतपुष्पैः सम्पूज्य वरणसामग्रीं करे गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यधौतवस्त्रोत्तरीययज्ञोपवीतपुष्पमालाभिः अस्मिन् ग्रहयागकर्म्मणि आचार्य्यकर्म्म कर्त्तुं आचार्य्यत्वेन त्वामहं वृणे इति वरणसामग्रीं आचार्य्यहस्ते दद्यात् वृतोस्मीति प्रत्युक्तिः प्रार्थनायाम् आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन् आचार्यो भव सुव्रत ॥ अस्य यज्ञस्य निष्पत्यै भवन्तोऽभ्यर्थिता मया । सुप्रसन्नेन कर्तव्यं शान्तिकं विधिपूर्वकम् ॥ इति पठित्वा अस्य ग्रहयज्ञकर्म्मणः प्रतिष्ठापनार्थे त्वं मे आचार्यो भव अहं भवानीति प्रत्युक्तिः । तथैव ब्रह्माणं सम्पूज्य एभिर्गन्धाक्षतादिभिः

अस्मिन्नवग्रहयागे कृताकृतावेक्षणाय ब्रह्मकर्म्म कर्त्तुं ब्रह्मत्वेन त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः प्रार्थनायां यथा चतुर्मुखो ब्रह्मा सर्ववेदधरो विभुः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ॥ अस्य यज्ञस्य० इति तु पूर्ववत् पठित्वा अस्य ग्रहयागकर्म्मणः प्रतिष्ठापनार्थे त्वं मे ब्रह्मा भव अहं भवानीति प्रत्युक्तिः यथाभिहितं कर्म्म कुरु करवाणि । ततश्चतुर्णाम् ऋत्विजां वरणम् तान् सम्पूज्य एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयज्ञकर्म्मणि ऋत्विककर्म्म कर्त्तुं ऋत्विक्त्वेन युष्मानहं वृणे वृताःस्मः इति प्रत्युक्तिः । ततः सदस्यं वृणुयात् एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयागकर्म्मणि सदस्यकर्मकर्त्तुं सदस्यत्वेन त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः । अथ द्वारपालानां वरणं तत्र प्रथमं पूर्वदिग्द्वारपालं गन्धाक्षतैः सम्पूज्य एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयागकर्म्मणि द्वारपालत्वेन त्वामहं वृणे वृतोस्मीति प्र० ॐऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ ममास्मिन्यज्ञे त्वम् ऋग्वेदी भव अहं भवानीति प्र० मन्त्रपाठः ॐअग्निमीळे० ॥ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः । काश्यपेयस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ ममास्मिन्यज्ञे त्वं यजुर्वेदी भव अहं भ० मन्त्रपाठः ॐइषेत्वा० ॥ सामवेदस्तु पिङ्गाक्षो जागतः सूर्य्यदैवतः । भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ ममास्मिन्यज्ञे त्वं सामवेदी भव अहं भ० मन्त्रपाठः ॐअग्नऽआयाहि० ॥ बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैखानसस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ ममास्मिन्यज्ञे त्वमथर्ववेदी भव अहं भ० मन्त्रपाठः ॐशन्नोदेवी रभिष्टयऽ आपो० ॥ ऋग्वेदं स्थापयेत्पूर्वे यजुर्वेदं तु दक्षिणे । पश्चिमे सामवेदं तु उत्तरे च ह्यथर्वणम् इति ॥ ततः गायत्रीजपार्थं गणेशमन्त्रजपार्थं ग्रहमन्त्रजपार्थं वेदपारणार्थं च अन्यान्ब्राह्मणांश्च वृणुयादिति वरणविधिः ॥ ततःशुक्लाम्बरधरः शुक्लमाल्यानुलेपनः सपत्नीकः साचार्य्यो यजमानः ऋत्विक्सदस्यसहितः पूर्णकलशहस्तो मङ्गलघोषपुरःसरं भद्रंकर्णेभिरितिमन्त्रेण मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । तत्र स्वासने प्राङ्मुख उपविश्याचम्य अर्घं संस्थाप्य प्राणानायम्य अपक्रामन्त्वित्ति गौरसर्षपान् सर्वतो विकीर्य ततः पञ्चगव्येन आपोहिष्ठेतित्रिभिर्मन्त्रैः कुशैः सर्व्वत्र प्रोक्षणम् ततो ग्रहवेद्या नैर्ऋत्यकोणे पश्चिमे वा होमवेदीं आचार्यहस्तेन हस्तमात्रीं चतुरङ्गुलोच्छ्रितां निर्माय शालामध्ये शिशुहस्तेन हस्तपरिमाणं स्थण्डिलचतुष्टयं विधाय होमवेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य आचार्यः प्राङ्मुख उपविश्याचम्य गणेशं विष्णुं स्मृत्वा वेद्या ईशानभागे अव्रणं बहिर्दध्यक्षतचन्दनोपशोभितं कलशस्थापनविधिना कलशं संस्थाप्य प्रधानदीपं पूर्वस्यां दिशि पूर्वाभिमुखं संस्थाप्य ततो वेद्युपरि यथोक्तलक्षणासु सुवर्णादिप्रतिमासु दध्यक्षतपुञ्जेषु वा आदित्यादिनवग्रहाणां साधिप्रत्यधिदेवतानां स्थापनं कुर्य्यात् । प्रतिमालक्षणम् ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ । रजतादयसः सीसात्कांस्यात्कार्य्या ग्रहाः क्रमात् इति ॥ स्थापनप्रकारश्च–मध्ये स्थाप्यो रवी रक्तः सोमः श्वेतोग्निकोणके । दक्षिणेऽङ्गारको रक्तः पीत ईशानके बुधः ॥ बृहस्पतिरुदक्पीतः शुक्रः श्वेतस्तु पूर्वके । पश्चिमे तु शनिः कृष्णो राहुः कालश्च नैर्ऋते ॥ वायव्ये केतवो धूम्रा एतच्च ग्रहवर्णकम् ॥ सर्व्वे आदित्याभिमुखा आदित्यश्च प्राङ्मुखः स्थाप्यः । तत्र प्रतिमानामग्न्युत्तारणं कुर्य्यात् मन्त्रः ॐहिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावकोऽअस्मभ्यꣳशिवो भव । इति प्रतिमानामग्न्युत्तारणं विधाय पञ्चामृतेन क्षालयेत् ॐपयःपृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् इति पयसा स्नापयेत् ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः

सुरभि नो मुखा करत्प्र ण्ऽआयूꣳषि तारिषत् । इति दध्ना । ॐघृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा द्यावापृथिवी वरुणस्य धर्मणा विष्कभितेऽअजरे भूरिरेतसा । इति घृतेन । ॐमधु व्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । इति मधुना । ॐआप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् भवा वाजस्य सङ्गथे । इति शर्करया । ॐआपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्ज दधातन महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः । तस्माऽअरं गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः ॥ इति शीतलोदकेन च प्रतिमाः संस्नाप्य अष्टदलनिहितेषु पीठेषु स्थापयेत् तत्र संकल्पः ॐअद्येहामुकोहं ग्रहयागकर्मणि यथोक्तफलावाप्तये सुवर्णप्रतिमासु आदित्यादिनवग्रहाणां दध्यक्षतपुञ्जेषु अधिदेवताप्रत्यधिदेवतादीनां स्थापनं करिष्ये इति (ॐकारस्य ब्रह्मा ऋषिर्गायत्रीछन्दः परमात्मा देवता व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजा ऋषयः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्य्या देवताः सूर्य्यादिनवग्रहादिस्थापने विनियोगः ) तत्रायंक्रमः रक्तपुष्पाक्षतैः ॐभूर्भुवःस्वः कलिङ्गदेशोद्भव काश्यपगोत्र रक्तवर्ण सूर्य्य इहागच्छ ॐआकृष्णेनेतिमंत्रेणेह तिष्ठेति स्थापयेत् इति मध्ये वर्तुले द्वादशाङ्गुले रक्तमंडले प्राङ्मुखं सूर्य्यं स्थापयेत् ॥१॥ तत आग्नेये चतुरस्रे श्वेतमंडले चतुरङ्गुले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः ॥ ॐभूर्भुवःस्वः यमुनातीरोद्भव आत्रेयगोत्र शुक्लवर्ण सोम इहागच्छ ॐइमंदेवाऽअसपत्नꣳ इतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥ २ ॥ ततो दक्षिणे त्रिकोणे त्र्यंगुले रक्तमंडले रक्तं भौमं रक्तगंधाक्षतैः ॐभूर्भुवःस्वः अवंतिदेशोद्भव भारद्वाजगोत्र रक्तवर्ण भौम इहागच्छ ॐअग्निर्मूर्द्धेतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥३॥ ईशाने बाणाकारे चतुरंगुले पीतमंडले पीतं बुधं उदङ्मुखं पीतपुष्पाक्षतैः ॥ ॐभूर्भुवःस्वः मगधदेशोद्भव आत्रेयगोत्र पीतवर्ण बुध इहागच्छ ॥ ॐउद्बुध्यस्वाग्नेइतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥ ४ ॥ उत्तरे दीर्घचतुरस्रे षडङ्गुले पीतमंडले पीतं गुरुं पीतपुष्पाक्षतैः ॐभूर्भुवःस्व सिंधुदेशोद्भव आंगिरसगोत्रपीतवर्ण गुरो इहागच्छ ॐबृहस्पतेतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥ ५ ॥ ततः पूर्व्वे पंचकोणे नवांगुले श्वेतमंडले श्वेतं शुक्रं श्वेतपुष्पगन्धाक्षतैः ॐभूर्भुवःस्वर्भोजकटदेशोद्भव भार्गवगोत्र शुक्लवर्ण शुक्र इहागच्छ ॐअन्नात्परिस्रुतऽइतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥ ६ ॥ ततः पश्चिमे धनुराकारे द्व्यंगुले कृष्णमंडले प्राङ्मुखं कृष्णं शनिं कृष्णपुष्पाक्षतैः ॥ ॐभूर्भुवःस्वः सौराष्ट्रदेशोद्भव काश्यपगोत्र कृष्णवर्ण शनैश्चर इहागच्छ ॐशन्नोदेवीरितिमंत्रेणेहतिष्ठेतिस्थापयेत् ॥ ७ ॥ ततो नैर्ऋत्ये शूर्पाकारे द्वादशाङ्गुले कृष्णमंडले दक्षिणाभिमुखं राहुं कृष्णगंधाक्षतपुष्पैः ॐभूर्भुवःस्वः वैराटिनपुरोद्भव पैठीनसिगोत्र कृष्णवर्ण राहो इहागच्छ ॐकयानश्चित्रेतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥ ८ ॥ वायव्ये ध्वजाकारे धूम्रे षडंगुले मंडले दक्षिणाभिमुखं धूम्रं केतुं धूम्रगंधाक्षतपुष्पैः ॥ ॐभूर्भुवःस्वः अंतर्वेदीसमुद्भव जैमिनिगोत्र धूम्रवर्णकेतो इहागच्छ ॐकेतुं कृण्वन्नकेतव इतिमंत्रेणेहतिष्ठेति स्थापयेत् ॥९॥ अथाधिदेवतावाहनम् ॥ दध्यक्षतपुञ्जेषु सूर्यदक्षिणपार्श्वे ॐभूर्भुवः स्वःईश्वर-इहागच्छ० ॥१॥ ॐभूर्भुवःस्वः इतिसर्वत्रोच्चार्य्यः ॥ सोमस्य दक्षिणपार्श्वे ॐभू० उमे इहागच्छ० ॥२॥ भौमदक्षिणपार्श्वे ॐभू० स्कन्द इहागच्छ० ॥३॥ बुधस्य दक्षिणपार्श्वे ॐभू० विष्णो इहागच्छ० ॥ ४ ॥ गुरुदक्षिणे ॐभू० ब्रह्मन् इहागच्छ० ॥ ५ ॥ शुक्रदक्षिणे ॐभू० इंद्र इहागच्छ० ॥ ६ ॥ शनिदक्षिणे ॐभू० यम इहागच्छ० ॥७॥ राहुदक्षिणे ॐभू० काल इहागच्छ० ॥८॥ केतोर्दक्षिणे ॐभू० चित्रगुप्त इहागच्छ इहतिष्ठेति स्थापयेत् ॥ ९ ॥ अथप्रत्यधिदेवतावाहनम् ॥ सूर्यवामपार्श्वे ॐभूर्भुवःस्वः अग्ने इहागच्छ० ॥१॥

सोमवामे ॐभू० भूमे इहागच्छ० ॥ ३ ॥ बुधवामे ॐभू० विष्णो इहागच्छ० ॥ गुरोर्वामे ॐभू० इंद्र इहागच्छ० ॥ ५ ॥ शुक्रवामे ॐभू० इंद्राणि इहागच्छ० ॥ ६ ॥ शनेर्वामे ॐभू० प्रजापते इहागच्छ० ॥ ७ ॥ राहोर्वामे ॐभू० सर्पाः इहागच्छत ॥ ८ ॥ केतोर्वामे ॐभू० ब्रह्मन् इहा० ॥९॥ ततो विनायकादीन्पञ्चलोकपालानावाहयेत् ॥ राहोरुत्तरे भू० विनायक इहा० ॥१॥ शनेरुत्तरे ॐ भू० दुर्गे इहा० ॥२॥ रवेरुत्तरे ॐभू० वायो इहागच्छेह० ॥३॥ राहोर्दक्षिणे ॐभू० आकाश इहागच्छ० ॥४॥ केतोर्दक्षिणे ॐभू० अश्विनौ इहागच्छतम् इहतिष्ठतम् ॥५॥ सर्वेषामुत्तरे ॐभू० क्षेत्राधिपते इहागच्छेहतिष्ठ १ वास्तोष्पतिं चावाहयेदित्येके ॥ पूर्वे ॐभूर्भुवःस्वः इन्द्र इहागच्छेहतिष्ठ ॥१॥ एवं सर्वत्र ॥ आग्नेये ॐभू० अग्ने इहागच्छेहतिष्ठ ॥२॥ दक्षिणे ॐभू० यम इहागच्छे० ॥३॥ नैर्ऋत्ये ॐभू० निर्ऋते इहाग० ॥४॥ पश्चिमे ॐभू० वरुण इहाग० ॥५॥ वायव्ये ॐभू० वायो इहाग० ॥६॥ उत्तरे ॐभू० कुबेर इहाग० ॥७॥ ईशाने ॐभू० ईश इहागच्छे० ॥८॥ ऊर्ध्वं ब्रह्मन् इहागच्छेहतिष्ठ ॥९॥ अधः ॐभू० अनंत इहागच्छेहतिष्ठेति स्थापयेत् ॥१०॥ एवंसंस्थाप्य अक्षतान् गृहीत्वा ॥ ॐएतन्तेदेवसवितः० इतिपठित्वा आदित्यादिनवग्रहाः सांगाः सायुधाः सवाहनाः सपरिवारा अधिदेवताप्रत्यधिदेवताविनायकादिपंचलोकपालवास्तोष्पतिक्षेत्राधिपतींन्द्रादिदशदिक्पालसहिताः सुप्रतिष्ठिता वरदा भवन्तु इतिप्रतिष्ठाप्य ॥ तदीशाने वरुणावाहनार्थं कलशविधिना कलशं स्थापयेत् रक्षाविधानं च कुर्यात् ( पृ० ८-९ ) ततो ग्रहपूजनसंकल्पः अर्घं संस्थाप्य प्राणानायम्य कुशतिलयवजलपाणिः अद्येहेत्यादि संकीर्त्य अमुकोहममुककामः ग्रहवेद्युपरि स्थापितासु सुवर्णप्रतिमासु दध्यक्षतपुञ्जेषु वा आवाहितानामादित्यादिनवग्रहाणामधिदेवताप्रत्यधिदेवताविनायकादिपंचलोकपालानामिंद्रादिदशदिक्पालानां वास्तोष्पतेः क्षेत्रपालस्य च यथामिलितोपचारैः पूजनं करिष्ये । इति संकल्प्य ध्यायेत्—पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरंगवाहनः । दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः १ श्वेतांबरः श्वेतविभूषणश्च श्वेतद्युतिर्दंडधरो द्विबाहुः । चंद्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं विदधातु देवः ॥२॥ रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् । धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः ॥३॥ पीतांबरः पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी । चर्मासिधृक्सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधः स्यात् ॥४॥ पीतांबरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः । दधाति दंडं च कमंडलुं च तथाक्षसूत्रं वरदोस्तु मह्यम् ॥५॥ श्वेतांबरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः । तथाक्षसूत्रं च कमंडलुं च दंडं च बिभ्रद्वरदोस्तु मह्यम् ॥६॥ नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् । चतुर्भुजः सूर्य्यसुतः प्रशान्तः सदास्तु मह्यं वरमंदगामी ॥७॥ नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली । चतुर्भुजश्चर्मधरश्च राहुः सिंहादिरूढो वरदोस्तु मह्यम् ॥ ८ ॥ धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च । किरीटकेयूरविभूषितांगः सदास्तु मे केतुगणः प्रशान्तः ॥९॥ अन्ये किरीटिनः कार्या वरदाभयपाणयः इति ध्यानम् ॥ अधिदेवतादींश्च एवं ध्यात्वा वैदिकमंत्रैर्नाममंत्रैर्वा पूजां कुर्यात् ॥ वैदिकमंत्राः ॥ आकृष्णेनेत्यादिप्रसिद्धाः ॥ नाममंत्रा यथा ॥ ॐआदित्याय नमः ॥ ॐसोमाय नमः ॥ ॐभौमाय नमः ॥ ॐबुधाय नमः ॥ ॐबृहस्पतये नमः ॥ ॐशुक्राय नमः ॥ ॐशनैश्चराय नमः ॥ ॐराहवे नमः ॥ ॐकेतुभ्यो नमः ॥९॥ ॐईश्वराय नमः ॥ ॐउमायै नमः॥ ॐस्कन्दाय नमः॥ ॐविष्णवे नमः ॥ ॐब्रह्मणे नमः ॥ ॐइंद्राय नमः ॥ ॐयमाय

नमः ॥ ॐकालाय नमः ॥ ॐचित्रगुप्ताय नमः ॥ ६ ॥ ॐअग्नये नमः ॥ ॐअद्भ्यो नमः ॥ ॐभूम्यै नमः ॥ ॐविष्णवे नमः ॥ ॐइंद्राय नमः ॥ ॐइन्द्राण्यै नमः ॥ ॐप्रजापतये नमः ॥ ॐसर्पेभ्यो नमः ॥ ॐब्रह्मणे नमः ॥ ६ ॥ ॐविनायकाय नमः ॥ ॐ दुर्गायै नमः ॥ ॐवायवे नमः ॥ ॐआकाशाय नमः ॥ ॐअश्विभ्यां नमः ॥५॥ ॐक्षेत्राधिपतये नमः ॥ ॐवास्तोष्पतये नमः ॥१॥ ॐइंद्राय नमः ॥ ॐयमाय नमः ॥ ॐनिर्ऋतये नमः ॥ ॐवरुणाय नमः ॥ ॐवायवे नमः ॥ ॐकुबेराय नमः ॥ ॐईशानाय नमः ॥ ॐब्रह्मणे नमः ॥ ॐअनन्ताय नमः ॥ इतिनाममंत्रैर्वा आवाहनासनपाद्यार्घस्नानाचमनवस्त्रगंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूलभूषण-नीराजनाद्युपचारैर्यथासंभवं संपूज्य ॥ पुष्पाञ्जलिः ॥ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः शनि-राहुकेतवः सर्वे ग्रहाः शांतिकरा भवन्तु ॥ सूर्यः शौर्यमथेंदुरुच्चपदवीं सन्मङ्गलं मङ्गलः । सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः ॥ राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं । नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥ २ ॥ इतिपुष्पांजलिं समर्प्य आयुश्च वित्तं च तथा सुखं च धर्मार्थलाभौ बहुपुत्रतां च ॥ शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः क्षेमकरा भवन्तु ॥ इतिप्रार्थ्य वेद्युपरि फलपुष्पोपशोभितं वितानं दत्वा वेदीसमीपे पूजांते किंवा होमान्ते यथोक्तबलीन्दद्यात् । यथोक्तबल्यभावे पायसबलिं तदभावे दध्यक्षतबलिं दद्यात् अथाचार्यो ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म(पृ.११-१२)कृत्वा वरदनामानमग्निमावाह्य संपूज्य यजमानो द्रव्यत्यागं कुर्यात् ॥ अद्येह नवग्रहयागेनाहं यक्ष्ये तत्रप्रजापतींद्राग्निसोमेभ्यः आज्येन सवितृसोमभौमबुधगुरुशुक्रशनिराहुकेत्वीश्वरोमास्कंदविष्णु-ब्रह्मेन्द्रयमकालचित्रगुप्ताग्न्यापोधराविष्ण्विंद्रेंद्राणीप्रजापतिसर्पब्रह्मविनायकदुर्गावाय्वाकाशाश्विभ्यः इंद्रादिदशदिक्पालेभ्यः समिच्चर्वा-ज्यतिलादिद्रव्यैः प्रत्येकमष्टोत्तरशताद्यष्टसंख्यांतसंख्यया यक्ष्ये शेषेण स्विष्टकृतम् अग्निं वायुं सूर्यमग्नीवरुणावग्नीवरुणावग्निं वरुणं सवि-तारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं स्विष्टकृतं चाज्येनाहं यक्ष्ये । एतावत्संख्याकं संपादितमिदं समिच्चर्वा-ज्यादि द्रव्यं पूर्वोक्तदेवताप्रीतये मया परित्यक्तं यथादैवतमस्तु । इति द्रव्यत्यागान्ते आचार्यो जुहुयात् । होमार्थे समिधः । अर्कः-पलाशःखदिरस्त्वपामार्गोथ पिप्पलः । उदुम्बरःशमी दूर्वा कुशाश्च समिधः क्रमात् ॥ एताः समिधः सूर्यादीनां क्रमाद्भवन्ति न तु सर्वेषाम् । अर्काद्यभावे पालाश्य एव शम्यभावे खदिरो ग्राह्यः उदुंबराभावे तिलोदुंबरो ग्राह्यः तिलोदुंबराभावे काकोदुंबरो ग्राह्यः । अधिदेवता-दीनां तु पालाश्य एव । दूर्वासमिधस्तु दूर्वांकुरत्रयपरिमिता ग्राह्याः । नवग्रहाणां क्रमेणाग्नयः—कपिलः पिङ्गलो धूम्रकेतुर्जाठरनामकः । शिखी च हाटकश्चैव महातेजा हुताशनः ॥ रोहितश्चैव विज्ञेया रव्यादीनां हुताशन इति ॥ ततो ब्रह्मणान्वारब्धः आघारावाज्यभागौ हुत्वा यथोक्तसमिद्धोमंकुर्यात् । यथोक्तसमिदभावे पलाशसमिदभावे च घृताक्तैस्तिलैर्होमं कुर्यात् ॥ तत्र होममंत्राः ॥ ( आकृष्णेनेति हिरण्यस्तूपऋषिस्त्रिष्टुप्छन्दः सविता देवता सूर्यप्रीतये कपिलाग्नौ अर्कसमिद्धोमे विनियोगः ) ॐआकृष्णेन रजसा वर्तमानो निवेशयन्न-मृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा । इदं सवित्रे इतित्यागः ॥ १ ॥ ( इमंदेवेति गौतमऋषि-स्त्रिष्टुप्छन्दः सोमो देवता सोमप्रीतये पिङ्गलाग्नौ पलाशसमिद्धोमे विनियोगः) ॐइमं देवाऽअसपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेंद्रस्येंद्रियाय ॥ इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳराजा स्वाहा । इदं

सोमाय ॥२॥ (अग्निर्मूर्द्धेति विरूपाक्ष ऋषिः गायत्री छंदः भौमो देवता भौमप्रीतये धूम्रकेत्वग्नौ खदिरसमिद्धोमे विनियोगः ) ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳪंरेताᳪंसि जिन्वति स्वाहा । इदं भौमाय ॥ ३ ॥ (उद्बुध्यस्वेति परमेष्ठी ऋषिस्त्रिष्टुप्छंदः बुधो देवता बुधप्रीतये जाठराग्नौ अपामार्गसमिद्धोमे विनियोगः ) ॐउद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्त्ते सᳪंसृजेथामयं च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत स्वाहा । इदं बुधाय ॥ ४ ॥ ( बृहस्पत इति गृत्समद ऋषिस्त्रिष्टुप्छंदः बृहस्पतिर्देवता बृहस्पतिप्रीतये शिख्यग्नौ अश्वत्थसमिद्धोमे विनियोगः ) ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रᳪंस्वाहा । इदं बृहस्पतये ॥ ५ ॥ ( अन्नात्परिस्रुत इति प्रजापत्यश्विसरस्वतींद्रा ऋषयः अतिजगती छंदः शुक्रो देवता शुक्रप्रीतये हाटकाग्नौ उदुम्बरसमिद्धोमे विनियोगः ) ॐअन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिंद्रियं विपानᳪं शुक्रमन्धसऽइंद्रस्येंद्रियमिदं पयोऽमृतं मधु स्वाहा । इदं शुक्राय ॥६॥ ( शन्नोदेवीरिति दध्यङ्ङाथर्वणऋषिः गायत्रीछंदः शनिर्देवता शनिप्रीतये महातेजोग्नौ शमीसमिद्धोमे विनियोगः ) ॐशन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंयोरभिस्रवन्तु नः स्वाहा । इदं शनये ॥ ७ ॥ ( कयानश्चित्र इति वामदेवऋषिः गायत्री छन्दः राहुर्देवता राहुप्रीतये हुताशनाग्नौ दूर्वासमिद्धोमे विनियोगः ) ॐकयानश्चित्रऽआभुवदूती सदावृधः सखा कया शचिष्ठया वृता स्वाहा । इदं राहवे ॥ ८ ॥ ( केतुं कृण्वन्निति मधुच्छन्दा ऋषिः गायत्री छंदः केतुर्देवता केतूनां प्रीतये रोहिताग्नौ कुशसमिद्धोमे विनियोगः ) ॐकेतुं कृण्वन्नकेतवे पेशो मर्य्याऽअपेशसे । समुषद्भिरजायथाः स्वाहा । इदं केतुभ्यः ॥ ६ ॥ एभिर्मंत्रैः स्वाहांतैः समिद्धोमं विधाय एतैरेव मंत्रैः संस्कृतेनाज्येन हुत्वा ततश्चरुणा जुहुयात् ॥ समिदाज्यचरुद्रव्यैः प्रत्येकं जुहुयात्तत इतिवचनात् । समिदाज्यचरून् हुनेदिति च ॥ अथाधिदेवतानां पलाशसमिद्भिः पलाशाभावे घृताक्ततिलैर्होमःकार्य्यः ॥ यथा—(त्र्यंबकमिति वसिष्ठऋषिः अनुष्टुप्छन्दः रुद्रो देवता रुद्रप्रीतये पलाशसमिद्धोमे विनियोगः) ॥ ॐत्र्यंबकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय माऽमृतात्स्वाहा । इदं रुद्राय ॥ १ ॥ ( श्रीश्चते इत्युत्तरनारायण ऋषिस्त्रिष्टुप्छन्दः उमा देवता उमाप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐश्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण स्वाहा । इदमुमायै ॥ २ ॥ ( यदक्रंद इति भार्गवजमदग्निदीर्घतमस ऋषयस्त्रिष्टुप्छन्दः स्कन्दो देवता स्कंदप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐयदक्रंदः प्रथमं जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यं महि जातं तेऽअर्वन्त्स्वाहा । इदं स्कंदाय ॥३॥ ( विष्णोरराटमिति प्रजापतिऋषिः यजुश्छन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा । इदं विष्णवे ॥४॥ ( ब्रह्मजज्ञानमिति ब्रह्मा ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विव स्वाहा । इदं ब्रह्मणे ॥५॥ ( सजोषाऽइन्द्र इति परमेष्ठी ऋषिः जगती छन्दः इंद्रो देवता इंद्रप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐसजोषाऽइन्द्र सगणो मरुद्भिःसोमं पिब वृत्रहा शूर विद्वान् । जहि शत्रूँ २॥ रप मृधो

नुदस्वाथाभयं कृणुहि विश्वतो नः स्वाहा । इदमिन्द्राय ॥६॥ ( असियम इति भार्गवजमदग्निर्दीर्घतमस ऋषयस्त्रिष्टुप्छन्दः यमो देवता
द० ब० यमप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐअसि यमोऽअस्यादित्योऽअर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्तऽ
आहुस्ते त्रीणि दिवि बंधनानि स्वाहा । इदं यमाय ॥७॥ उदकस्पर्शः ॥ ( कार्षिरसीति दध्यङ्ङाथर्वणऋषिः अनुष्टुप्छन्दः कालो देवता ग्रहया०
कालप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐकार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः ४७.
स्वाहा । इदं कालाय ॥ ८॥ (चित्रावसोरिति प्रजापतिर्ऋषिः जगती छंदः चित्रगुप्तो देवता चित्रगुप्तप्रीतये पलाशसमिद्धोमे विनियोगः)
ॐचित्रावसो स्वस्ति ते पारमशीय स्वाहा । इदं चित्रगुप्ताय ॥९॥ अथ प्रत्यधिदेवतानाम् ॥ (अग्निर्दूतमिति विरूपाक्ष ऋषिः अनुष्टुप्छंदः
अग्निर्देवता अग्निप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐअग्निंदूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवाँ२ ॥ आसादयादिह स्वाहा । इद-
मग्नये ॥१॥(अप्स्वन्तरिति बृहस्पतिऋषिः उष्णिक्छन्दः आपो देवता अपां प्रीतये पलाशसमिद्धोमे विनियोगः) ॐअप्स्वंतरमृतमप्सु भेषज-
मपामुत प्रशस्तिष्वश्वा भवत वाजिनः । देवीरापो यो वऽऊर्मिः प्रतूर्त्तिः ककुन्मान् वाजसास्तेनायंवाज॑सेत्स्वाहा । इदमद्भ्यः ॥२॥
( स्योनापृथिवीति मेधातिथिऋषिः गायत्री छन्दः पृथिवी देवता पृथिवीप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐस्योना पृथिवि नो
भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः स्वाहा । इदं पृथिव्यै ॥ ३ ॥ ( इदंविष्णुरिति मेधातिथिऋषिः गायत्री छंदः विष्णुर्देवता
विष्णुप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पा॑सुरे स्वाहा । इदं विष्णवे ॥ ४ ॥
( त्रातारमिंद्रमिति गार्ग्यऋषिस्त्रिष्टुप्छंदः इंद्रो देवता इन्द्रप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐत्रातारमिंद्रमवितारमिंद्र॑हवेहवे
सुहव॑ शूरमिंद्रं ह्वयामि शक्रं पुरुहूतमिंद्र॑ स्वस्ति नो मघवा धात्विंद्रः स्वाहा । इदमिंद्राय ॥ ५ ॥ ( ॐअदित्यै रास्नासीति
दध्यङ्ङाथर्वणऋषिर्यजुश्छंदः इन्द्राणी देवता इंद्राणीप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐअदित्यै रास्नासींद्राण्याऽउष्णीषः
पूषासि घर्माय दीष्व स्वाहा । इदमिंद्राण्यै ॥ ६ ॥ ( प्रजापते इति हिरण्यगर्भ ऋषिस्त्रिष्टुप्छंदः प्रजापतिर्देवता प्रजापतिप्रीतये पलाश-
समिद्धोमे विनियोगः ) ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पिताऽ
सावस्य पिता वय॑स्याम पतयो रयीणा॑स्वाहा । इदं प्रजापतये ॥ ७ ॥ ( नमोस्तु सर्पेभ्य इति देवा ऋषय अनुष्टुप्छंदः सर्पा देवताः
सर्पाणां प्रीतये पलाशसमिद्धोमे विनियोगः ) ॐनमोस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽअंतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः
स्वाहा । इदं सर्पेभ्यः ॥ ८ ॥ ( ब्रह्मजज्ञानमिति प्रजापतिऋषिस्त्रिष्टुप्छंदः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐ
ब्रह्मयज्ञानम्० स्वाहा । इदंब्रह्मणे ॥ ९ ॥ अथविनायकादीनाम् । ( गणानान्त्वेति प्रजापतिऋषिः यजुश्छन्दः गणपतिर्देवता गणपति-
प्रीतये पलाशसमिद्धोमे विनियोगः ) ॐगणानान्त्वा गणपति॑ हवामहे प्रियाणां त्वा प्रियपति॑ हवामहे निधीनां त्वा निधिपति॑
हवामहे वसो मम । आहमजानि गर्भधमात्वमजासि गर्भधं स्वाहा । इदं गणपतये ॥ १ ॥ ( अंबे अंबिके इति प्रजापतिऋषिः
अनुष्टुप्छंदः दुर्गा देवता दुर्गाप्रीतये पलाशसमिद्धोमे विनियोगः) ॐअंबेऽअंबिकेऽअम्बालिके नमा नयति कश्चन ससस्त्यश्वकः सुभद्रिकां
काम्पीलवासिनीं स्वाहा । इदं दुर्गायै ॥ २ ॥ (वातोवेति गंधर्वा ऋषयःउष्णिक्छंदः वातो देवता वायुप्रीतये पलाशसमिद्धोमे विनियोगः)

दे० प० ॐवातो वा मनो वा गंधर्वाः सप्तवि७ंशतिः तेऽअग्नेऽश्वमयुंजँस्ते अस्मिन् जवमादधुः स्वाहा । इदं वायवे ॥ ३ ॥ ( ऊर्ध्वा अस्येति प्रजापतिऋर्षिरुष्णिक्छंदः आकाशो देवता आकाशप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐऊर्ध्वाऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोची७ंष्यग्नेः द्युमत्तमा सुप्रतीकस्य सूनोःस्वाहा । इदमाकाशाय ॥ ४ ॥ ( यावांकशेति मेधातिथिऋर्षिः गायत्रीछंदः अश्विनौ देवते अश्विनोःप्रीतये पलाशसमिद्धोमे विनियोगः) ॐया वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतं उपयामगृहीतोस्यश्विभ्यां वैष ते योनिर्माध्वीभ्यां त्वा स्वाहा । इदमश्विभ्याम् ॥ ५ ॥ अथेन्द्रादित्रयस्य । ( त्रातारमिंद्रमिति गार्ग्य ऋषिस्त्रिष्टुप्छंदः इंद्रो देवता इंद्रप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐत्रातारमिति (पृ० ४६) ॥ १ ॥ ( अवतत्यधनुरिति परमेष्ठीऋषिः अनुष्टुप्छंदः रुद्रो देवता रुद्रप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐअवतत्य धनुष्ट्व७ं सहस्राक्ष शतेषुधे । निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव स्वाहा । इदं रुद्राय ॥ २ ॥ ( मरुतोयस्येति गौतमऋषिः गायत्रीछंदः मरुतो देवता मरुत्प्रीतये पलाशसमिद्धोमे विनियोगः ) ॐमरुतो यस्य हि क्षये पाथादिवो विमहसः । स सुगोपातमोजनः स्वाहा । इदं मरुताय ॥ ३ ॥ अथेंद्रादिलोकपालमंत्राः ॥ ॐत्रातारमिंद्रमिति पूर्ववत् ॥ १ ॥ ( अग्निंदूतमिति विरूपाक्ष ऋषिः अनुष्टुप्छंद अग्निर्देवता अग्निप्रीतये पलाशसमिद्धोमे विनियोगः ) ॥ ॐअग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ २आसादयादिह स्वाहा । इदमग्नये ॥ २ ॥ ( असि यम इति भार्गवजमदग्निदीर्घतमसः ऋषयःत्रिष्टुप्छन्दः यमो देवता यमप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐअसियमोऽअस्यादित्योऽअर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्तऽआहुस्ते त्रीणि दिवि बंधनानि स्वाहा । इदं यमाय ॥ ३ ॥ ( एषते निर्ऋते इति वरुणऋषिःयजुश्छन्दः निर्ऋतिर्देवता निर्ऋतिप्रीतये पलाशसमिद्धोमे विनियोगः ) ॥ ॐएष ते निर्ऋते भागस्तं जुषस्व स्वाहा । इदं निर्ऋतये ॥ ४ ॥ ( इमं मे वरुण इति शुनःशेफऋषिर्गायत्रीछन्दः वरुणो देवता वरुणप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराच के स्वाहा । इदं वरुणाय ॥ ५ ॥ ( वातोवा मनोवेति गंधर्वा ऋषयःउष्णिक्छन्दः वातो देवता वायुप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐ वातो वा मनो वा गंधर्वाः सप्तवि७ंशतिः तेऽअग्रेऽश्वमयुंजँस्तेऽअस्मिन् जवमादधुः स्वाहा । इदं वायवे ॥ ६ ॥ ( वय७ंसोमेति बंधुऋषिः गायत्रीछन्दः कुबेरो देवता कुबेरप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐवय७ंसोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावंतः सचेमहि स्वाहा । इदं कुबेराय ॥७॥ (तमीशान-मिति गौतमऋषिः जगती छन्दः ईशो देवता ईशप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐतमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये स्वाहा ॥ इदमीशाय ॥ ८ ॥ ( ब्रह्मजज्ञानमिति प्रजापतिऋषिः त्रिष्टुप्छन्दः ब्रह्मादेवता ब्रह्मप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽ आवः सबुध्न्याऽ उपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विव स्वाहा । इदं ब्रह्मणे ॥ ९ ॥ ( नमोस्तु सर्पेभ्य इति देवा ऋषयः अनुष्टुप्छन्दः सर्पा देवता सर्पप्रीतये पलाशसमिद्धोमे विनियोगः ) ॐनमोस्तु सर्पेभ्यो ये के च पृथिवीमनु येऽअंतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा । इदं सर्पेभ्यः ॥ १० ॥ ( विश्वकर्मन्निति भारद्वाजःशासऋषिः त्रिष्टुप्छन्दः विश्वकर्मा देवता विश्वकर्मप्रीतये पलाशसमिद्धोमे

विनियोगः ) ॐ विश्वकर्मन्हविषा वर्द्धनेन त्रातारमिंद्रमकृणोरवध्यम् । तस्मै विशः समनमंत पूर्वीरयमुग्रो विहव्यो यथासत्स्वाहा । इदं विश्वकर्मणे ॥ विश्वकर्मन्हविषेति वा वास्तोष्पतिमंत्रः ॥ ॐ क्षेत्राधिपतये स्वाहा । इदं क्षेत्राधिपतये । ॐ वास्तोष्पतये स्वाहा । इदं वास्तोष्पतये ॥ क्षेत्राधिपतिवास्तोष्पत्योर्बलिदानमत्र न होम इति केचिद्वदन्ति । एभिरेवमंत्रैराज्यचरू जुहुयात् । ततः कामानुसारेण सर्पिर्यवव्रीहितिलाद्यन्यतमं च जुहुयात् । तत अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते इति हुत्वा ॥ आज्येन भूराद्या नवाहुतीर्हुत्वा संश्रवप्राशनादिपूर्णपात्रदानांतं कर्म कृत्वा प्रणीताविमोकं च कृत्वा वेदीसमीपे उत्तरतः यथोक्तद्रव्यैः पायसेन वा बलिदानं च कुर्यात् । पायसाभावे सदीपदध्यक्षतैर्वा बलिदानं कार्यम् । ग्रहाणां बलिप्रकारः । सूर्याय गुडौदनम् । सोमाय घृतपायसम् । भौमाय मसूरान्नं यावकं वा । बुधाय क्षीरोदनम् । बृहस्पतये दध्यौदनम् । शुक्राय घृतौदनम् । शनैश्चराय कृसरान्नम् । राहवे आजं मांसं चुक्रं वठोदनं वा । केतवे चित्रौदनम् ॥ एवं ब्राह्मणेभ्योऽपि भोजनार्थं दद्यात् । हस्ते जलं गृहीत्वा ॥ भो भो सूर्य एनं सदीपं गुडौदनबलिं पायसबलिं दध्यक्षतबलिं वा गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥ इति बल्युपरि जलं विसृजेत् ॥१॥ भो भो सोम एनं सदीपं घृतपायसबलिं गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥ इति जलं विसृजेत् ॥२॥ भो भो भौम एनं सदीपं मसूरान्नबलिं गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥३॥ भो भो बुध एनं सदीपं क्षीरौदनबलिं गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥४॥ भो भो गुरो एनं सदीपं दध्यौदनबलिं गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥५॥ भो भो शुक्र एनं सदीपं घृतौदनबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० तुष्टि० पुष्टिकर्ता भव ॥६॥ भो भो शनैश्चर एनं सदीपं कृसरबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टि० भव ॥७॥ भो भो राहो एनं सदीपं अजमांसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥८॥ भो भो केतो एनं सदीपं चित्रौदनबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥९॥ यथोक्तबल्यभावे सदीपं पायसबलिं तदभावे सदीपं दध्यक्षतबलिं दद्यात् । अधिदेवतादिभ्यः सर्वेभ्यः पायसबलिं दद्यात् । भो भो ईश्वर एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥१॥ भो भो उमे एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्त्री भव ॥२॥ भो भो स्कंद एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ३ ॥ भो भो विष्णो एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ४ ॥ भो भो ब्रह्मन् एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ५ ॥ भो भो इंद्र एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टि० भव ॥ ६ ॥ भो भो यम एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ७ ॥ भो भो काल एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ८ ॥ भो भो चित्रगुप्त एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टि-

कर्ता भव ॥ ६ ॥ भो भो अग्ने एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ १ ॥
भो भो आपः एनं सदीपं पायसबलिं गृह्णत सपरिवारस्य मम आयुःकर्त्र्यः क्षेमकर्त्र्यः शांतिकर्त्र्य तुष्टिकर्त्र्यः पुष्टिकर्त्र्यो भवत
॥ २ ॥ भो भो भूमे एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुःकर्त्री क्षेमकर्त्री शांतिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री भव
॥ ३ ॥ भो भो विष्णो एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ४ ॥
भो भो इंद्र एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ५ ॥ भो भो इन्द्राणि
एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुःकर्त्री क्षेमकर्त्री शांतिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री भव ॥ ६ ॥ भो भो प्रजापते
एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शांति० तुष्टि० पुष्टिकर्ता भव ॥ ७ ॥ भो भो सर्पाः एनं सदीपं
पायसंबलिं गृह्णत सपरिवारस्य मम आयुःकर्तारः क्षेम० शान्ति० तुष्टि० पुष्टिकर्तारो भवत ॥ ८ ॥ भो भो ब्रह्मन् एनं सदीपं
पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ६ ॥ भो भो विनायक एनं सदीपं पायसबलिं
गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टि० भव ॥ १ ॥ भो भो दुर्गे एनं सदीपं पायसबलिं गृहाण सपरि-
वारस्य मम आयुःकर्त्री क्षेमकर्त्री शान्तिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री भव ॥ २ ॥ भो भो वायो एनं सदीपं पायसबलिं गृहाण सपरि-
वारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ३ ॥ भो भो आकाश एनं सदीपं पायसबलिं गृहाण सपरिवारस्य
मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ४ ॥ भो भो अश्विनौ एनं सदीपं पायसबलिं गृह्णतम् सपरिवारस्य मम
आयुःकर्तारौ क्षेमकर्तारौ शान्तिकर्तारौ तुष्टिकर्तारौ पुष्टिकर्तारौ भवतम् ॥ ५ ॥ भो भो इन्द्र एनं सदीपं पायसबलिं गृहाण सपरि-
वारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ १ ॥ भो भो अग्ने एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम
आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ २ ॥ भो भो यम एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः०
क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ३ ॥ भो भो निर्ऋते एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम०
शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ४ ॥ भो भो वरुण एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति०
तुष्टि० पुष्टिकर्ता भव ॥ ५ ॥ भो भो वायो एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि०
पुष्टिकर्ता भव ॥ ६ ॥ भो भो कुबेर एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता
भव ॥ ७ ॥ भो भो ईश एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ८ ॥
भो भो ब्रह्मन् एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ ९ ॥ भो भो
अनन्त एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ १० ॥ भो भो क्षेत्रा-
धिपते एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुः० क्षेम० शान्ति० तुष्टि० पुष्टिकर्ता भव ॥ १ ॥ भो भो वास्तोष्पते
एनं सदीपं पायसबलिं गृहाण सपरिवारस्य मम आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव ॥ एवं सर्वेभ्यः पायसबलिं

दत्वा क्षेत्रपालाय सचतुर्बर्तिकादीपं सद्रव्यं सताम्बूलं कृसरान्नबलिं दद्यात् । अद्येहेत्यादि देशकालौ संकीर्त्य अमुकोहं कृतस्यामुक-होमस्योत्तराङ्गत्वेन सर्वारिष्टनिवृत्त्यर्थं क्षेत्रपालाय बलिदानं करिष्ये तदङ्गत्वेन पूजनं च करिष्ये इति संकल्प्य कृसरबल्युपरि चतुर्वर्त्तिसंयुक्तं दीपं प्रज्वलय्य बलिं संप्रोक्ष्य रक्तचन्दनादिभिः संपूजयेत् । ध्यानम् । आजद्वक्त्रजटाधरं त्रिनयनं नीलांजनाद्रिप्रभं दोर्दण्डांतगदाकपालमरुणस्रग्गंधवस्त्रावृतम् । घंटाघुर्घुरमेखलाध्वनिमिलद्धुंकारभीमं विभुं वंदे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥ इति ध्यात्वा रक्तचन्दनादिभिः संपूज्य पुटकोपरि ताम्बूलं दक्षिणां च निधाय क्षौं क्षेत्रपालाय भूतप्रेतपिशाचडाकिनीशाकिनीवेतालादि-परिवारयुताय एषः सदीपः सतांबूलः सदक्षिणः कृसरान्नबलिर्नमः भो भो क्षेत्रपाल दिशो रक्ष बलिं भक्ष्य मम सपुत्रसपरिवारस्या-युःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव इत्युक्त्वा हस्तस्थजलं तदुपरि विसृज्य तत इमं बलिं शूद्रेण दुर्ब्राह्मणेन वा चतुष्पथे क्षेपयेत् । ततः आचम्य द्यौः शान्तिरिति तत्स्थानं संप्रोक्षयेत् ॥ ततः पूर्णाहुतिहोमः ॥ अद्येह अमुकोहममुकस्य मम सर्वाभ्युदयप्राप्तये एतद्धोमकर्मणः न्यूनातिरिक्तपरिपूर्त्यर्थं पूर्णाहुतिहोमं करिष्ये इतिसंकल्प्य पूर्ववत् मृडनामाग्नेः पूजनपूर्वकं तत्र मूर्द्धानं-दिव इति मंत्रेण पूर्णां जुहुयात् (पृष्ठ १३ ) ततः श्रद्धां मेधामित्यग्निपूजनं कृत्वा तनूपाऽग्ने० इत्यादिभिरङ्गान्यालभेत ( पृ० १४ ) ततस्त्र्यायुषाणि कुरुते भस्मना ॥ ॐ त्र्यायुषं जमदग्नेः इति ललाटे कश्यपस्य त्र्यायुषमिति ग्रीवायां यद्देवेषु त्र्यायुषम् इति दक्षिणांसे तन्नो अस्तु त्र्यायुषमिति हृदि इति त्र्यायुषधारणं कृत्वा पुनरग्निं संपूज्य आचार्यादिभ्यो वरं दद्यात् । आदित्याय कपिलां सोमाय शङ्खं भौमाय रक्तं वृषं बुधाय सुवर्णं बृहस्पतये पीतवस्त्रं शुक्राय श्वेताश्वं शनये कृष्णां गां राहवे खड्गं केतवे छागम् । इति यथोक्तदक्षिणां दद्यात् यथोक्तालाभे सर्वेषां गां सुवर्णं वा दद्यात् । अद्येह अमुकोहं अमुकस्य अमुककामनया कृतस्यास्य ग्रहयागकर्मणः सांगफलप्राप्त्यर्थं साद्गुण्यार्थं ग्रहाणां प्रीतये इदं सुवर्णमाचार्याय दास्ये तथा कृतस्यास्य ग्रहयागकर्मणः साङ्गता-सिद्ध्यर्थमिदं सुवर्णं ब्रह्मणे तुभ्यं संप्रददे ॐतत्सन्न मम । इति संकल्प्य आचार्यब्रह्मभ्यां दत्वा उत्तराङ्गत्वेन ग्रहपूजनं कृत्वा भूयसीं संकल्पयेत् अद्येहेत्यादि अमुकोहं कृतस्यास्य ग्रहयागकर्मणः सांगफलप्राप्त्यर्थं साद्गुण्यार्थं न्यूनातिरिक्तदोषपरिहारार्थं च इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् तथा एतद्ग्रहयागकर्मणः साद्गुण्यार्थं ग्रहाणां प्रीत्यै सिद्धान्नेन ब्राह्मणांश्च भोजयिष्ये इतिसंकल्पयेत् । ततः सपत्नीकं सपुत्रं भद्रासनोपविष्टं यजमानं आचार्यादयः कलशोदकेन वैदिकैः पौराणिकैश्च मन्त्रैरभिषिक्तं कुर्युः । तत्र वैदिकमन्त्राः ॥ ॐदेवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥ १ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे । ब्रह्मवर्चसायाभि-षिंचामि ॥ सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिंचामि ॥ इन्द्रस्येन्द्रियेण बलाय श्रिये यशसेऽभिषिंचामि ॥ कोऽसि कतमोऽसि कस्मै त्वा काय त्वा सुश्लोक सुमङ्गल सत्य राजन् । शिरो मे श्रीर्यशो मुखं त्विषिः केशाः श्मश्रूणि । राजा मे प्राणोऽमृतꣳसम्राट् चक्षुर्विराट् श्रोत्रम् । जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः । मोदाः प्रमोदाऽअंगुलीरंगानि मित्रं मे सहः ॥ बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्य्यम् । आत्मा क्षत्रमुरो मम पृष्ठीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणीऽऊरूऽअरत्नी जानुनी विशो मेऽङ्गानि सर्व्वतः ॥ नाभिर्मे

चित्तं विज्ञानं पायुर्मेपचितिर्भमत् ॥ आनंदनंदावांडौ मे भगः सौभाग्यं यशः। जंघाभ्यां पद्भ्यां धर्मोस्मिन्विशि राजा प्रतिष्ठितः।
प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रति-
तिष्ठामि यज्ञे ॥ त्रया देवाऽएकादश त्रयस्त्रिꣳशाःसुराधसः बृहस्पतिपुरोहिता देवस्य सवितुः सवे देवा देवैरवंतु मा ॥ प्रथमा द्वितीयै-
र्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः सामान्यृग्भिरृचः पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभि-
र्याज्या वषट्कारैर्वषट्काराऽआहुतिभिराहुतयो मे कामान्समर्द्धयंतु ॥ ॐसर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयांतु यजमानस्य
दुरितक्षयकारकाः ॥ ॐस्वस्ति नऽइंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु
॥१॥ ॐपयः पृथिव्यां पयऽओषधीषु पयो दिव्यंतरिक्षे पयोधाः। पयस्वतीः प्रदिशः संतु मह्यम् ॥ २ ॥ ॐविष्णो रराटमसि विष्णोः
श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ ३ ॥ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो
देवता रुद्रो देवताऽऽदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥ मूर्द्धासि राट् ध्रुवासि
धरुणा धर्त्र्यसि धरणी ॥ आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥५॥ ॐद्यौः शान्तिरंतरिक्षꣳशांतिः पृथिवी शांतिरापः शान्ति-
रोषधयः शांतिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि सुशान्तिर्भवतु
॥ ६ ॥ अथपौराणिकमन्त्राः ॥ सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानि-
रुद्धश्च भवंतु विजयाय ते। आखण्डलोग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणा सहितः शेषो
दिक्पालाः पांतु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥ एता-
स्त्वामभिषिंचन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च पूजिताः।
देवदानवगंधर्वा यक्षराक्षसपन्नगाः। ऋषयो मनवो गावो देवमातर एवच ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः। अस्त्राणि
सर्वशस्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये। सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते
त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ विश्वानि देवसवितर्दुरितानि परासुव। यद्भद्रं तन्नऽआसुव ॥ शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु
अमृताभिषेकोस्तु यच्छ्रेयस्तदस्तु यत्पापं रोगः शोकः कष्टं दुःखं दारिद्र्यं तत् दूरे प्रतिहतमस्तु। ॐभूर्भुवः स्वः अमृताभिषेकोस्तु
शान्तिर्भवतु ॥ इत्यभिषेकमन्त्राः ततः तिलककरणम्—भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु। रक्षंतु त्वां सदा देवाः
संपदः संतु सर्वदा ॥ सपत्ना दुर्ग्रहाः पापाः दुष्टसत्वाद्युपद्रवाः। तमालपत्रमालोक्य निष्प्रभावा भवंतु ते ॥ आभ्यां मन्त्राभ्यां तिलका-
क्षतारोपणं विधाय ॐयुञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः रोचन्ते रोचना दिवि ॥ अक्षताः पान्तु। ततो रक्षाबंधनम्। मंत्रो-
यथा—येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वामनुबध्नामि रक्षे मा चल मा चल ॥ त्वं यविष्ठ दाशुषो नॄंः पाहि शृणुधी
गिरः। रक्षातोकमुत त्मना ॥ रक्षा सुरक्षां कुर्यात्। आभ्यां मन्त्राभ्यां पुंसां दक्षिणकरे। स्त्रीणां वामकरे रक्षासूत्रं बध्नीयात्। तत
आशीर्मंत्रपाठः ॥ ॐगणानान्त्वा गणपतिꣳहवामहे प्रि० गमेधम् ॥ १ ॥ ॐआकृष्णेनेत्यादि नव मन्त्रान्पठित्वा ॥ ॐकामं कामदुघे

धुच्व मित्राय वरुणाय च इंद्रायाश्विभ्यां पूष्णे प्रजाभ्यां ओषधीभ्यः ॥ १ ॥ ॐऋतं च मेऽमृतं च मेऽयक्ष्मश्च मेऽनामयश्च मे
ह० प० जीवातुश्च मे दीर्घायुष्ट्वं च मेऽनमित्रं च मे अभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥ २ ॥
ॐतीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयंतः ॥ अवक्रामंतः प्रपदैरमित्रान् क्षिणंति शत्रूँ १॥ रनपव्ययंतः ॥ ३ ॥ चू० कं०
ॐदीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहितात् ॥ ४ ॥ सहस्रस्य प्रमासि ५३
सहस्रस्य प्रतिमासि सहस्रस्योन्मासि सहस्रोसि सहस्राय त्वा ॥ ५ ॥ ॐपुनस्त्वा रुद्द्रादित्या वसवः समृद्ध्यतां पनर्ब्रह्माणो वसुनीथ
यज्ञैः । घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥६॥ युवꣳसुराममश्विना नमुचावासुरे सचा ॥ विपिपाना शुभस्पती
इंद्रं कर्मस्वावतम् ॥ पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः यत्सुरामंव्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥
शतं जीव शरदो वर्द्धमानः शतं हेमंतान् शतसंवत्सरान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ इत्याशीर्वाद-
मंत्राः ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ इति स्त्रीणां तु विशेषः ॥ श्रीश्चते
लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ आयष्मती पुत्रवती
धनवती सौभाग्यवती भव इति ॥ इत्याशिषो गृहीत्वा अग्निं प्रदक्षिणीकृत्य यांतु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकाम-
समृद्ध्यर्थं पुनरागमनाय च ॥ इतिदेवान्विसृज्य गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने त्वं सुरेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुता-
शन ॥ इत्यग्निं विसृज्य ब्राह्मणान्परितोष्य भोजयित्वा सुहृद्भिः सह भुञ्जीत ॥ इतिग्रहयागविधिः ॥

## अथ चूड़ाकरणम्

तत्र पारस्करः सँव्वत्सरिकस्य चूड़ाकरणं तृतीये वाऽप्रतिहते इति ज्योतिःशास्त्रेषु चूडाकर्म्म तृतीयेब्दे पञ्चमे सप्तमेपि वेति तत्र उपनीत्या सहैववेति स्मृतिपक्षमादाय विधिर्लिख्यते—चूड़ाकर्म्मदिवसात्पूर्व्वेह्नि रात्रौ गणपतिपूजनपूर्व्वकं केशाधिवासनं कुर्य्यात् पीतवस्त्रनवखण्डेषु हरिद्रादूर्वासर्षपाक्षतादिमङ्गलद्रव्याणि क्षिप्त्वा सूत्रेण त्रिगुणेन दृढं बद्ध्वा नवपोटलिका निर्ममेत् तथैकां दशमीं च निर्माय स्थापयेत् ततः स्वस्तिवाचनपूर्वकं शुभासने उपविश्याचम्य गणेशपूजनं कुर्य्यात् तत्र सङ्कल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य करिष्यमाणचूडाकरणोपयोगिकेशलतिकाधिवासनकर्म्मणि निर्विघ्नतासिद्धये भगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इति सङ्कल्प्य गणेशपूजनविधिना गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्यात् यथा अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य श्वः करिष्यमाणचूडाकर्म्मसिद्ध्यर्थं केशाधिवासनं करिष्ये इति सङ्कल्प्य निर्म्मिताः पोटलिका आदाय एकैकया पोटलिकया एकैकां जुटिकां केशेषु बध्नीयात् तत्र क्रमः पूर्वं शिरोदक्षिणतस्तिस्रः ततः पश्चात्तिस्रः तत उत्तरतोपि तिस्रः तत एकया मध्ये यथोचितां शिखां मङ्गलघोषपुरस्सरं बध्नीयात् आचारादन्ये पोटलिके अन्ये निर्माय तयोरेकां क्षुरे एकां शलल्यां च बध्नीयात् ततः एतन्ते० ॐ भूर्भुवः स्वः चूडाकर्म्मजुटिकाः सुप्रतिष्ठिता भवन्त्वितिप्रतिष्ठाप्य ताम्रपात्रे कांस्यपात्रे वा आनडुहं गोमयं गव्यं नवनीतं घृतं दधि वा

ताम्रपरिष्कृतं तिग्मधारं क्षुरं त्र्येणी शलली कुशपत्रत्रयनिर्मितानि त्रिगुणितसूत्रवेष्टितानि नव कुशतरुणानि च स्थापयेत् ततो दक्षिणा-सङ्कल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य केशाधिवासनकर्म्मणः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् इति दक्षिणां दत्वा पोटलिका उष्णीषादिना बध्वा संवेशयेदिति केशाधिवासनम् ॥



अथ पिता चूडाकर्म्मदिवसे प्रातरुत्थाय स्वकीयं नित्यकर्म्म समाप्य गीतवादित्रादिपञ्चघोषपूर्व्वकं पश्चिमद्वारेण शालां प्रविशेत् सा च शाला नवग्रहयागसिद्धैव तत्र स्वासन उपविश्याचम्य अर्घं सम्पाद्य प्राणायामं विधाय गणेशपूजनविधिना गणेशपूजनं विदध्यात् तत्र प्रधानसङ्कल्पः ॐविष्णुः ३ अद्येहेत्यादि अमुकोहममुकस्य करिष्यमाणचूडाकरणोपनयनवेदारम्भसमावर्त्तनकर्म्मसु निर्विघ्नताप्राप्तये पूर्वाङ्गत्वेन भगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इतिसङ्कल्प्य गणेशं सम्पूज्य दक्षिणां दद्यात् ततो मातृपूजनं कुर्य्यात् तत्र सङ्कल्पः अद्येहेत्यादि अमुकोहममुकस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनकर्म्मसु सर्वाभ्युदयप्राप्तये पूर्वाङ्गत्वेन गणपतिसहितगौर्य्यादिषोडशमातॄणां पूजनं करिष्ये इतिसङ्कल्प्य मातॄः पूजयित्वा वसोर्धाराः पातयित्वा दक्षिणां दद्यात् । तत आभ्युदयिकं कुर्य्यात् तत्र सङ्कल्पः देशकालस्मरणान्ते अमुकोहम् अमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाम् अमुकामुकी-देवीनां तथामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकदेवानां तथामुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममु-कामुकदेवानाममुकस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनकर्म्मसु सर्वाभ्युदयप्राप्तये पूर्व्वाङ्गत्वेन सत्यवसुसञ्ज्ञकविश्वेदेवापूर्व्वकं नान्दीमुखश्राद्धं करिष्ये इतिसङ्कल्प्य आसनदानादि दक्षिणादानान्तं कुर्य्यात् । एवं पुण्याहवाचनं च समापयेत् । साम्प्रतिकाचारात्तु गणेशपूजनमात्रं विधाय चूडाकरणवेदीसमीपमागत्योपविश्याचम्यार्घं संस्थाप्य प्रधानसंकल्पं कुर्यात् यथा अद्येहेत्यादिसङ्कीर्त्तनान्ते अमुकोहममुकराशेः पुत्रस्य बीजगर्भसमुद्भवैनोनिवर्हणबलायुर्व्वर्चोऽभिवृद्धिद्वारा ॐतत्सत् श्रीपरमेश्वरप्रीतये उपनयनात्प्राक् चूडाकर्म्म-संस्कारं करिष्ये तत्र आचार्य्यब्रह्मकर्मकर्त्तुम् आचार्य्यब्रह्मणोरुक्तविधिना पूजनपूर्व्वकं वरणं कुर्य्यात् । एषु कर्म्मसु ब्राह्मणानामाचार्य्यः पितैव "उपनीय ददद्वेदमाचार्य्यः स उदाहृत" इति याज्ञवल्क्यस्मरणात् । पितुरसन्निधाने पितृव्यभ्रात्रादीनामधिकारः क्षत्रियादीनां वेदा-ध्यापनाभावादन्यो ब्राह्मणोऽभिक्रियते । पुनः संकल्पः अद्येहामुकोऽहं कुमारस्य करिष्यमाणचूडाकर्मणः पूर्वाङ्गत्वेन त्रीन् ब्राह्मणान् भोज-यिष्ये भोजनपर्याप्तं मिष्टान्नं तन्निष्क्रयद्रव्यं वा दास्ये इति त्रिभ्यो ब्राह्मणेभ्यो दद्यात् । तत आचार्य्यः चूडाकरणवेद्यां पञ्चभूसंस्कारपूर्व्व-कमग्निं स्थापयेत् अत्रावसरे माता कुमारं मङ्गलद्रव्यैः संस्नाप्य अहते वाससी परिधाप्य स्वयं च नवीनवस्त्राणि परिधाय कुमारमङ्के निधाय पञ्चघोषपुरस्सरं पश्चिमद्वारेण शालां प्रविश्य अग्नेः पश्चात्पत्युर्व्वामत उपविशति ततः पिता ब्रह्मोपवेशनादिपर्य्युक्षणान्तं कर्म्म समाप्य आसादनान्ते विशेषवस्तूनि स्थापयेत् शीतोष्णोदकमिश्रणार्थमेकं पात्रं शीतं जलम् उष्णं जलं नवनीतपिण्डं घृतपिण्डं दधिपिण्डं वा त्र्येणी शलली त्रिषु स्थानेषु श्वेतेत्यर्थः सप्तविंशतिदर्भपिञ्जूलयः पवित्रलक्षणाः ताश्च सौकर्य्याय तिस्रस्तिस्रः सूत्रवेष्टिताः क्रियन्ते क्षुरस्ताम्रमयः ताम्रपरिष्कृतो लौहो वा आनडुहं गोमयं नापितश्चेति । ततः पवित्रच्छेदनादिपर्य्युक्षणान्तं कर्म्म कृत्वा द्रव्यत्यागं कुर्य्यात् अद्येहेत्यादि अमुकोहम् अमुकराशेः पुत्रस्य चूडाकर्म्मणा यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममग्निं वायुं सूर्य्यं अग्नीवरुणावग्नीवरुणावग्निं वरुणं

सवितारं विष्णुं विश्वान्मरुतः स्वर्कान् वरुणमदितिं प्रजापतिमग्निं स्विष्टकृतं चाज्येनाहं यक्ष्ये इदमाज्यं तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु तथा सभ्यनामाग्नेः पूजनं करिष्ये ॐएतन्त इति प्रतिष्ठा ॐभूर्भुवः स्वः सभ्यनामाग्ने सुप्रतिष्ठितो वरदो भव। तदेवाग्निरिति चत्वारिशृंगा इति च ध्यानावाहनपाद्यादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यायन् जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय इत्याघाराज्यभागौ हुत्वा भूरादिहोमं कुर्य्यात् (व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्यादेवताः सर्वप्रायश्चित्तहोमे विनियोगः) ॐभूः स्वाहा इदमग्नये ॐभुवः स्वाहा इदं वायवे ॐस्वः स्वाहा इदꣳसूर्याय (त्वन्नोअग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते चूडाहोमे विनियोगः) ॐत्वन्नोऽअग्ने व्वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा। इदमग्नीवरुणाभ्याम् (सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते चूडाहोमे विनियोगः) ॐसत्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ अवयक्ष्व नो व्वरुणꣳरराणो व्वीहि मृडीकꣳसुहवो नऽएधि स्वाहा। इदमग्नीवरुणाभ्याम् (अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता चूडाहोमे विनियोगः) ॐअयाश्चाग्नेस्यनभिशस्तिपाश्च सत्त्वमित्त्वमयाऽअसि अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा। इदमग्नये (ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणसवितृविष्णुविश्वेमरुतः स्वर्का देवता चूडाहोमे विनियोगः) ॐये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः (उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दः वरुणो देवता चूडाहोमे विनियोगः) ॐउदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमध्यमं श्रथाय अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा। इदं वरुणायादित्यै। ॐअग्नये प्रजापतये स्वाहा। इदमग्नये प्रजापतये ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते। संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानम्। अद्येहामुकोऽहममुकराशेरमुकनाम्नः पुत्रस्य चूडाकर्म्माङ्गहोमकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मणे तुभ्यमहं संप्रददे ॐअक्रन्कर्म्मकर्म्मकृत इतिमन्त्रपाठः॥ ततो दैवज्ञबोधिते शुभे लग्ने लग्नदानं कुर्यात् तत्र सङ्कल्पः अद्येहामुकराशेरस्य कुमारस्य चूडाकर्म्मलग्नाद्यत्रकुत्रस्थानस्थितानाम् आदित्यादिनवग्रहाणां दुष्टानां दुष्टफलोपशान्तये शुभानां विशेषतः शुभफलप्राप्तये इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा दैवज्ञाय दातुमहमुत्सृजे ॐतत्सत् दैवज्ञं सम्पूज्य दद्यात्। तत उपकल्पितपात्रे शीतासु अप्सु उष्णा आप आनिश्चति अनेन मन्त्रेण (उष्णेनवाय इति परमेष्ठी ऋषिः प्रतिष्ठाछन्दो लिङ्गोक्ता देवताः उष्णोदकासेचने विनियोगः) ॐउष्णेन वायऽउदकेनेह्यदिते केशान्वप इति। तत्र तूष्णीं नवनीतपिण्डं घृतपिण्डं दधिपिण्डं वा प्रक्षिपति। तत अप आदाय पूर्व्वमधिवासितं दक्षिणं गोदानमुन्दयति (क्लेदयति आर्द्रीकरोतीत्यर्थः) तत्र मन्त्रः (सवित्रेति प्रजापतिर्ऋषिर्गायत्रीछन्द आपो देवता उन्दने विनियोगः) ॐसवित्रा प्रसूता दैव्याऽआप ऽउदन्तु ते तनूम्। दीर्घायुष्ट्वाय बलाय वर्च्चसे इति। ततस्त्रेण्या शलल्या तूष्णीं छेत्तुमिष्टान्केशान्विनीय (पृथक्कृत्य) तेष्वेव केशेषु कुशतरुणान्यन्तर्दधाति। तत्र मन्त्रः (ओषध इति प्रजापतिर्ऋषिर्यजुश्छन्द ओषधि-

दुर्देवता कुशतरुणान्तर्द्धाने विनियोगः ) ॐओषधे त्रायस्व स्वधिते मैनꣳहिꣳसीः । इति सकुशतरुणान्केशान्सव्यहस्ते धृत्वा दक्षिण-हस्तेन क्षुरमादत्ते । तत्र मन्त्रः ( शिवोनामेति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे विनियोगः ) ॐशिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा माहिꣳसीः इति । ततः सकुशतरुणेषु केशेषु क्षुरं प्रवपति निदधाति संलग्नीकरोतीत्यर्थः । तत्र मंत्रः ( निवर्त्तयामीति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता प्रवपने विनियोगः ) ॐनिवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय इति । ततस्तान्केशान्क्षुरेण च्छिनत्ति अनेन मन्त्रेण ( येनावपदिति आलंबायन ऋषिः पङ्क्तिश्छन्दः सविता देवता केशच्छेदने विनियोगः) ॐयेनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन ब्रह्माणो वपतेदमस्यायुष्यञ्जरदष्टि-र्य्यथाऽसत् । इति सकेशानि कुशतरुणानि प्रच्छिद्य उत्तरतो ध्रियमाणे आनडुहे गोमयपिण्डे निक्षिपेत् । तत्र विशेषः पिता सकेशानि पिञ्जुलानि छित्त्वा प्रागग्राणि शिशुमातृहस्ते निदधाति सा प्रागग्राण्यानडुहे गोमयपिण्डे निदधाति अथ पश्चिमगोदाने उन्दनं विनयनं कुशतरुणान्तर्धानं च पूर्वोक्तैर्स्वमन्त्रैः कुर्यात् क्षुरस्तु मन्त्रेण गृहीतत्वात्पुनर्म्मन्त्रसंस्कारमर्हति द्रव्याभेदात् प्रवपनं च पूर्वोक्त-मन्त्रेण कुर्यात् छेदने मन्त्रविशेषः (त्र्यायुषमिति नारायणऋषिरनुष्टुप्छन्दोग्निर्देवता केशच्छेदने विनियोगः ) ॐत्र्यायुषञ्जमदग्नेः कश्य-पस्य त्र्यायुषं यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥ इति छित्त्वा पूर्ववद्गोमयपिण्डे निदध्यात् एवं पुनर्वारद्वयं इतरयोः पश्चिम-गोदानयोः उन्दनं विनयनं कुशतरुणान्तर्धानं क्षुरादानं प्रवपनं गोमये प्रासनं च तूष्णीं कुर्यात् । अथोत्तरगोदाने उन्दनविनयनकुश-तरुणान्तर्धानक्षुरादानप्रवपनानि पूर्ववत्कुर्य्यात् छेदने तु मन्त्रविशेषः ( येनेति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता केशच्छेदने विनि-योगः ) ॐयेन भूरिश्चरा दिवञ्ज्योक्च पश्चाद्धि सूर्य्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये । इतिमंत्रेण छित्त्वा गोमयप्रासनं पूर्ववत् एवं पुनर्वारद्वयं इतरयोरुत्तरगोदानयोः उन्दनं विनयनं कुशतरुणान्तर्धानं क्षुरादानं छेदनं गोमयप्रासनं च तूष्णीं कुर्यात् । अथ त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति शिरसः समंतात्प्रदक्षिणं परिभ्रामयतीत्यर्थः । सकृन्मंत्रेण द्विस्तूष्णीं तत्र मंत्रः ( यत्क्षुरेणेति वामदेवऋषिर्यजुश्छन्दः क्षुरोदेवता क्षुरपरिहरणे विनियोगः ) ॐयत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति केशा-ञ्छिन्धि शिरो माऽस्यायुः प्रमोषीः । इति अथोन्दनशेषेण जलेन सर्वं शिर आर्द्रीकृत्य सुखवपनार्थं नापिताय क्षुरं प्रयच्छत्यक्षुण्णं परिवपेति ( अक्षुण्णमिति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरप्रदाने विनियोगः ) ॐअक्षुण्णं परिवप इति । परिवपामीति नापितो वदेत् अथ यथाकुलाचारं शिखावर्ज्जं वपनं कृत्वा ततः सकेशं गोमयपिण्डं पल्वले गोष्ठे उदकान्ते वा निधापयेत् ततः सुस्नातं पर्य्युक्षितशिरसं पुष्पमालाभिश्चालङ्कृतं माणवकं आचार्य्यसमीपमानीय अग्नेः पश्चादवस्थापयेत् अथ पिता स्वाचार्य्याय वरं ददाति कुमारस्याचार्याभावात् अद्येहेत्यादि अमुकराशेरमुकनाम्नः पुत्रस्य चूडाकर्माङ्गहोमकर्म्मणः चूडाकर्म्मणश्च साङ्गफलप्राप्तये साद्गु-ण्यार्थं च इदं सुवर्णं अग्निदैवतं आचार्य्याय तुभ्यमहं सम्प्रददे ॐतत्सन्नममेति सङ्कल्प्य दद्यात् आचार्य्यश्च मन्त्राशिषं दद्यात् । यदि पूर्वं कर्णवेधसंस्कारो न कृतश्चेत् अत्र कर्तव्यः ( पृ० ३५ ) । इति चूडाकर्म्मपद्धतिः ॥

## अथोपनयनम्

 तत्र पारस्करसूत्रम्—अष्टवर्षं ब्राह्मणमुपनयेत् गर्भाष्टमे वा, एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यं एतद्द्विगुणितवर्षपर्य्यन्तं 
गौण उपनयनकालः तदूर्ध्वं सावित्रीपतिता व्रात्याः संस्कारहीना भवन्ति । तत्रोपनेता स्वस्योपनेतृत्वसिद्धये प्रथमं प्रायश्चित्तं कुर्यात्
तत्र सङ्कल्पः अद्येहेत्यादि अमुकोहं स्वस्योपनेतृत्वयोग्यतायै कृच्छ्रत्रयगोत्रयनिष्क्रयीभूतं ससुवर्णं तिलपात्रं ब्राह्मणाय दास्ये तथोपने- 
योऽपि प्रायश्चित्तसङ्कल्पं कुर्यात् अद्येहेत्यादि अमुकोहं स्वस्योपनेयत्वयोग्यतायै कृच्छ्रत्रय—गोत्रय—निष्क्रयीभूतं ससुवर्णं तिलपात्रं ब्राह्मणाय दास्ये ॐतत्सन्न ममेति दद्यात् । अथाचार्य्यः पिता उपनयनवेदीसमीपमागत्य वेद्यां पञ्चभूसंस्कारपूर्व्वकं समुद्भवनामाग्निमावाह्य संस्थाप्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकराशिरमुकशर्म्माहम् अमुकराशेरस्य पुत्रस्य बीजगर्भसमुद्भवैनोनिवर्हणद्वारा ॐतत्सत् श्रीपरमेश्वरप्रीत्यर्थं वेदाध्ययनादिकर्म्माधिकारसम्पादकद्विजत्वसंसिद्धिकाम उपनयनाख्यं कर्म्म करिष्ये तत्पूर्वाङ्गत्वेन त्रीन्ब्राह्मणान्सहानेन वटुना भोजयिष्ये इति संकल्प्य ब्राह्मणान्भोजयित्वा तैः सह कुमारं च भोजयेत् । अथाचार्य्यो ब्रह्मोपवेशनादि स्रुवेणमध्ये दीर्घाकाराहुतीरित्यन्तं विधाय विशेषोपकल्पनीयान्यासादयेत् तानि च कौपीनम् मेखला यज्ञोपवीतम् अजिनं दण्डः समिधस्तिस्रः भिक्षापात्रं चेति। अथ पर्युप्तशिरसं कुमारं मङ्गलद्रव्यैः स्नापयित्वा पुष्पमालादिभिश्चालंकृत्य वेदगीतवादित्रघोषपुरस्सरं प्रदक्षिणमग्निं परिक्रममाणमाचार्य्यसमीपमानयन्त्याचार्य्यपुरुषाः। अथाचार्य्यो माणवकं स्वस्य दक्षिणतोऽग्नेःपश्चात् उदङ्मुखमुपवेश्य ॐब्रह्मचर्य्यमागाः इति ब्रूयात् ॐब्रह्मचर्यमागाम् इति माणवको वदेत् । पुनराचार्य्यः ब्रह्मचार्य्यसीति पृच्छति माणवकोपि ब्रह्मचार्य्यसानि इति ब्रूयात् अथाचार्य्यो माणवकं कौपीनं वासः परिधापयति वक्ष्यमाणमन्त्रेण ( येनेन्द्रायेत्यङ्गिरा ऋषिर्बृहतीछन्दो बृहस्पतिर्देवता वासः परिधापने विनियोगः) ॐयेनेन्द्राय बृहस्पतिर्व्वासः पर्य्यदधादमृतम् तेन त्वा परिदधाम्यायुषे दीर्घायुत्त्वाय बलाय वर्च्चसे ॥ इत्याचार्य्यस्यैव मन्त्रपाठः परिदधामीति मन्त्रलिङ्गात् । अत्र द्विराचमनम् । शूद्रेण हि समस्तावद्यावद्वेदे न योजितः । उपनेयो माणवको द्विरपःप्राशनं ततः ॥ तदप्यमंत्रकम् अथ मेखलां बध्नीते अनेन मन्त्रेण ( इयं दुरुक्तमिति वामदेवऋषिस्त्रिष्टुप्छन्दो मेखला देवता मेखलाबन्धने विनियोगः ) ॐइयं दुरुक्तं परिबाधमाना व्वर्णम्पवित्रम्पुनती मऽआगात् प्राणापानाभ्याम्बलमादधाना स्वसा देवी सुभगा मेखलेयम् । इति मन्त्रं पठतो माणवकस्य कटिप्रदेशे मेखलां त्रिरावेष्ट्य प्रवरसङ्ख्यया ग्रन्थीन्करोति । माणवकस्यैव मन्त्रपाठः मऽआगादिति मन्त्रलिङ्गात् । तत्र मेखलाश्च—मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला । धनुर्ज्या राज्यन्यस्य मौर्वी वैश्यस्येति क्रमेण सूत्रोक्ता ग्राह्याः । अत्रावसरे प्रणवपूर्वया गायत्र्या शिखाबन्धनं कुर्य्यात् । यद्यप्यत्र यज्ञोपवीतदानधारणे सूत्रकारेण नोपात्ते तथापि "बिभृयाद्दण्डकौपीनोपवीताजिनमेखला" इतिव्यासवचनात्ते कार्य्ये अवसरेऽस्याप्यौचित्यान्मेखलाबन्धनानन्तरमेकं यज्ञोपवीतं धारयेत् । अथ प्रकृतत्वात् यज्ञोपवीतविधानम्—तच्च कार्पासं तन्निर्माणप्रकारः । ब्राह्मणेन ब्राह्मणस्त्रीभिर्विधवादिभिश्च निर्मितं सूत्रं ग्राह्यम् । संहतचतुरङ्गुलिमूलेषु षण्णवत्या सूत्रमावेष्ट्य तत्त्रिगुणीकृत्य ऊर्ध्ववृत्तं बलितं कृत्वा पुनरधोवृत्तरीत्या त्रिगुणीकृतं तत्सूत्रं नवतन्तुकं सम्पद्यते तत्त्रिरावेष्ट्य दृढग्रन्थिं कुर्य्यात् ग्रन्थिसम्पादनमन्त्रो यथा ॐप्राणानां ग्रन्थिरसि रुद्रो मा विशतान्तकः । तेनानेना-

प्यायस्व इति । सिद्धे मन्त्राः प्रयोक्तव्या इति न्यायेन एवं सिद्धं यज्ञोपवीतं कलशाद्युपरि ॐभूर्भुवःस्वरोम् इतिसंस्थाप्य ॐयज्ञोपवीतं प्रतिष्ठापयामीति वदेत् एतन्त इति प्रतिष्ठाप्य ॐ ॐकारदैवत्याय प्रथमतन्तवे नमः ॐअग्निदैवत्याय द्वितीयतन्तवे नमः ॐभगदैवत्याय तृतीयतन्तवे नमः ॐसोमदैवत्याय चतुर्थतन्तवे नमः ॐपितृदैवत्याय पञ्चमतन्तवे नमः ॐप्रजापतिदैवत्याय षष्ठतन्तवे नमः ॐवायुदैवत्याय सप्तमतन्तवे नमः ॐसूर्यदैवत्यायाष्टमतन्तवे नमः ॐसर्व्वदैवत्याय नवमतन्तवे नमः । इति तन्तुदेवताः सम्पूज्य ग्रन्थित्रयाधिपान् हरिब्रह्मेशान्सम्पूजयेत् ॐहरये नमः ॐब्रह्मणे नमः ॐईश्वराय नमः ॐयज्ञोपवीताकारस्याधिपाय परब्रह्मणे नमः इति च सम्पूज्य तदादाय ॐआकृष्णेनेतिमन्त्रेण आदित्याय प्रदर्शयेत् पुनः कलशोपरि संस्थाप्य अष्टोत्तरशतकृत्वः प्रणवं सकृद्गायत्रीं च जपन्स्पृशेत् ततः प्राणानायम्य त्र्यम्बकमंत्रं जपन्दक्षिणहस्तेन स्पृशेत् ततो दशकृत्वः सावित्र्याभिमन्त्रिताभिरद्भिः सिञ्चेत् एवं संस्कृतं यज्ञोपवीतं धारयेत् अनेन मन्त्रेण ( यज्ञोपवीतमिति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता श्रौतस्मार्त्तकर्म्मानुष्ठानसिद्धये यज्ञोपवीतपरिधाने विनियोगः । यज्ञोपवीतमसीति प्रजापतिर्ऋषिः यजुश्छन्दो यज्ञोपवीतं देवता परिधाने विनियोगः ) ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐयज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि । एवं मन्त्रं पठन्तो माणवकस्य दक्षिणं बाहुमुद्धृत्य वामांसोपरि निदध्यात् तत्र आचमनद्वयं माणवकस्य ततः प्रदक्षिणमग्निं परीत्य माणवकोऽग्नेः पश्चात्स्थित्वा आचमनं कृत्वा स्ववर्णोक्तम् ऐणेयादि चर्म्म यज्ञोपवीतवत्परिदध्यात् । मन्त्रः (मित्रस्य चक्षुरिति वामदेवऋषिस्त्रिष्टुप्छन्दः अजिनं देवता अजिनधारणे विनियोगः ) ॐमित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳ समृद्धम् । अनाहनस्यं वसनं जयिष्णु परीदं वाज्यजिनं दधेऽहम् । इतिमन्त्रेण ऐणेयं ब्राह्मणः रौरवं क्षत्रियः मेषचर्म्म वैश्यः परिदध्यात् । अथाचार्य्यः पादादिकेशप्रमाणं स्ववर्णोक्तं पालाशवैल्वौदुंबरजातं दण्डं तत्तद्वर्णाय माणवकाय प्रयच्छति स च मंत्रेणादत्ते ( यो मे दण्ड इति प्रजापतिर्ऋषिः यजुश्छन्दः दण्डो देवता दण्डग्रहणे विनियोगः ) ॐयो मे दण्डः परापतद्वैहायसोऽधिभूम्याम् । तमहं पुनरादद आयुषे ब्रह्मणे ब्र वर्चसाय इति ॥ मन्त्रेण प्रतिगृह्य ( उच्छ्रयस्वेति प्रजापतिर्ऋषिर्यजुश्छन्दो दण्डो देवता दण्डोच्छ्रयणे विनियोगः ) ॐउच्छ्रयस्व वनस्पतऽऊर्ध्वो मापाह्यꣳहसः आऽस्य यज्ञस्योदृचः । अथाचार्य्योऽद्भिः स्वमञ्जलिमापूर्य्य तेन माणवकाञ्जलिमापूरयति मन्त्रैः ( आपोहिष्ठेत्यादितिसृणां सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता माणवकाञ्जलिपूरणे विनियोगः ) ॐआपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन महे रणाय चक्षसे १ ॐयो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः २ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः ३ अथाचार्यो माणवकं प्रति सूर्य्यमुदीक्षस्वेति प्रैषं ददाति माणवकः सूर्य्यमुदीक्षन्नञ्जलिस्थं जलं सूर्य्याय प्रक्षिप्योर्ध्वबाहुरादित्यमुपतिष्ठते अनेन मन्त्रेण ( तच्चक्षुरिति दध्यङ्ङाथर्वणऋषिरुष्णिक्छन्दः सूर्यो देवता सूर्य्योदीक्षणे विनियोगः ) ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् । अथाचार्य्यो माणवकस्य दक्षिणांसोपरि स्वदक्षिणहस्तं नीत्वा हृदयमालभते अनेन मंत्रेण ( मम व्रते त इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवता हृदयालम्भने विनियोगः ) ॐमम व्रते ते हृदयन्दधामि मम

चित्तमनुचित्तं तेऽअस्तु मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ इति । अथाचार्य्यो माणवकस्य साङ्गुष्ठं दक्षिणहस्तं
द० प० गृहीत्वा "को नामासि" इत्याह । वटुः "अमुकशर्म्माहं भो ३" इति प्रत्याह पुनराचार्य्यो माणवकं पृच्छति "कस्य ब्रह्मचार्य्यसि" "भवतः" उपन०
इति माणवको वदेत् । भवत इत्युच्यमाने ( इन्द्रस्येति प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवता पाठे विनियोगः ) ॐइन्द्रस्य
ब्रह्मचार्य्यस्यग्निराचार्यस्तवाहमाचार्य्यस्तव अमुकशर्म्मन् इति वटुनामान्तमुक्त्वा अथैनं भूतेभ्यः परिददाति वक्ष्यमाण मन्त्रेण ५९.
( प्रजापतये त्वेति प्रजापतिर्ऋषिः षट्यजूंषि लिङ्गोक्ता देवता रक्षणे विनियोगः ) ॐप्रजापतये त्वा परिददामि देवाय त्वा सवित्रे
परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्व्वेभ्यस्त्वा
भूतेभ्यः परिददाम्यरिष्ट्यै इति । अथ कुमारोऽग्निं प्रदक्षिणं परीत्य आचार्य्यस्योत्तरत उपविशति । अथाचार्य्यो ब्रह्मोपवेशनादि
पर्युक्षणान्तं कर्म कृत्वा देवताभिध्यानं करोति अद्येहामुकोहं अस्य वटोरुपनयनकर्म्मणि यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममग्निं वायुं
सूर्य्यमग्नीवरुणावग्नीवरुणावग्निं वरुणं सवितारं विष्णुं विश्वान्मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं स्विष्टकृतं चाज्येनाहं यक्ष्ये एतद्धो-
मद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तं ॐतत्सद्यथादैवतमस्तु समुद्भवनामाग्निं संस्थाप्य ॐएतन्त इति प्रतिष्ठाप्य ॐभूर्भुवः स्वः समु-
द्भवनामाग्ने सुप्रतिष्ठितो भव । ततोऽग्नेः पूजनम् अद्येहामुकोहं उपनयनकर्म्माङ्गहोमकर्म्मणि समुद्भवनामाग्नेः पूजनं करिष्ये अग्नि-
प्रज्वलितमित्यादिना गन्धादिभिः सम्पूज्य भूरादिनवाहुतिहोमं स्विष्टकृतं च हुत्वा (पृ० १३) संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः
ब्रह्मणे पूर्णपात्रदानम् अद्येहामुकोहं अमुकराशेः पुत्रस्य उपनयनाङ्गहोमकर्म्मणः साद्गुण्यार्थं अपूर्णपूर्णार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मन्
तुभ्यं सम्प्रददे इति दद्यात् । अथाचार्यो वटुं संशास्ति ( शिक्षयतीत्यर्थः ) यथा "ब्रह्मचारी असि" इत्याचार्यो वदेत् "असानि" इति
वटुः "अपोऽशान" इत्याचार्यः "अश्नानि" इति वटुः "कर्म कुरु" "करवाणि" "मा दिवा सुषुप्थाः" "न स्वपानि" "वाचं यच्छ"
"यच्छानि" "समिधमाधेहि" "आदधानि" इति । अथ दैवज्ञबोधिते दीक्षालग्ने लग्नदानं कुर्यात् अद्येहामुकोहं अमुकराशेरस्य पुत्रस्य
सावित्रीग्रहणलग्नात् अमुकस्थानस्थितैः अमुकग्रहैः सचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये ग्रहाणां प्रीतये इदं सुवर्णं सुवर्णनिष्क्रयीभूतं
द्रव्यं वा दैवज्ञाय ब्राह्मणेभ्यश्च दास्ये ॐतत्सन्न मम इति । अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखोपविष्टाय उपसन्नाय गुरुं समी-
क्षमाणाय गुरुणा समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वा स्वयं पूर्वाभिमुखो गुरुः । अथ वटुः फलपुष्पादिभिर्गुरोः पादावुपसङ्गृ-
ह्णीयात् गीतवादित्ररवे जायमाने व्यस्तहस्ताभ्यां दक्षिणहस्तेन दक्षिणं पादं वामहस्तेन वामं पादं गृहीत्वा अमुकगोत्रोऽमुकप्रवरोऽमुक-
वेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्माहं भो गुरो त्वामभिवादये इत्येतदुपसङ्ग्रहणं नाम गुरुश्च आयुष्मान्भव सौम्यामुकशर्म्मन्भोः
इत्याशिषं प्रयुञ्जीत । ततः सावित्रीदानम् ( प्रणवस्य ब्रह्मऋषिर्दैवीगायत्री छन्दः परमात्मा देवता, व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्यु-
ष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः गायत्र्या विश्वामित्रऋषिर्गायत्रीछन्दः सविता देवता सावित्रीदाने विनियोगः ) इत्यार्षा-
दिकं स्मृत्वा प्रणवव्याहृतिपूर्वां गायत्रीं पच्छो ब्रूयात् तद्यथा ॐभूर्भुवःस्वः तत्सवितुर्व्वरेण्यं इति प्रथमवारम् ॐभूर्भुवःस्वः तत्सवितु-
र्वरेण्यम्भर्गो देवस्य धीमहि इति द्वितीयवारम् ॐभूर्भुवः स्वः तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ

द० प० तृतीयवारं सर्वां गायत्रीं प्रतिब्रूयात् । इति ब्रह्मगायत्री । क्षत्रियाय त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदैवत्यां "देवस्य सवितुः" इत्यादिकामृचं ब्रूयात् यथा ॐदेवस्य सवितुर्मतिमासवम्विश्वदेव्यम् धिया भगम्मनामहे । इति क्षत्रियगायत्री । वैश्याय श्यावाश्व दृष्टां जगतीछन्दस्कां विश्वारूपाणीति ऋचं ब्रूयात् ॐविश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे वि नाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजति । इति वैश्यगायत्री । ततो ब्रह्मचारी स्वाचार्याय वरं दद्यात् अद्येह अमुकशाशिरमुकशर्म्मा अमुकवर्म्मा अमुकगुप्तो वा अहं कृतैतद्गायत्रीग्रहणकर्म्मणः साद्गुण्यार्थमिदं सुवर्णमग्निदैवतं वररूपेणाचार्याय तुभ्यमहं सम्प्रददे इति सङ्कल्प्य गुरोः पादयोः प्रणिपत्य समर्पयेत् गुरुरप्याशीर्भिरभिनन्द्य अधीतानिराकरणं कारयेत् यथा अथातोऽधीत्यानिराकरणम् प्रतीकम्मे विचक्षणं जिह्वा मे मधुमद्वचः कर्णाभ्यां भूरि शुश्रुवे मा त्वाहार्षीच्छ्रुतम्मयि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशम्मे विश वाचा त्वा पिदधामि वाचा त्वा पिदधामि तिष्ठ प्रतिस्वरकरणदन्त्यौष्ठ्यकण्ठ्यौरसमेधामाधुर्य्यग्रहणधारणोच्चारणशक्तिर्म्मयि भवन्त्वाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशोबलं यन्मेश्रुतमधीतन्तन्मे मनसि तिष्ठतु तिष्ठतु ॐम् । इति वटुं वाचयेदेतदधीतानिराकरणं नाम । ततो ब्रह्मचारी कालोपस्थितां मध्याह्नसन्ध्यामुपास्य समिधादानं कुर्यात् तत्रोपकल्पनीयानि वस्तून्यासादयेत् इन्धनं पञ्चधा त्रेधा वा विभक्तं पर्युक्षणार्थमुदकं समिधस्तिस्रः होमार्थं पुनरिन्धनवारिणी । ततो ब्रह्मचारी अग्नेः पश्चादुपविश्य प्रथमतोऽग्निं पञ्चभिर्मन्त्रैः सन्धुक्षयति ( पाणिनाऽग्निं परिसमूहयति सम्यद्धीकरोतीत्यर्थः पाणिनेति स्रुवादेर्निरासः ) ( अग्ने सुश्रव इत्यादीनां पञ्चानां ब्रह्मा ऋषिः पञ्चयजूंषि अग्निर्देवता परिसमूहने विनियोगः ) ॐअग्ने सुश्रवः सुश्रवसम्मा कुरु १ ॐयथा त्वमग्ने सुश्रवः सुश्रवाऽसि २ एवम्माꣳसुश्रवः सौश्रवसं कुरु ३ ॐयथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ४ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ५ इत्यग्निं परिसमुह्य तत उपकल्पितोदकेन प्रदक्षिणमग्निं पर्युक्ष्योत्थाय अग्नय इति मंत्रेण समिधमादधाति ( अग्नय इति प्रजापतिर्ऋषिः पराकृतिश्छन्दः समिद्देवता समिधादाने विनियोगः ) ॐअग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिद्ध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहा । इत्येकां समिधमादाय घृताक्तां कृत्वा दक्षिणकर्णं स्पृष्ट्वा जुहुयात् एवं द्वितीयां तृतीयां च समिधं होमयित्वा ततस्तूष्णीमुपविश्य पूर्ववत् अग्ने सुश्रव इत्यादि पञ्चभिर्मन्त्रैः परिसमूहनं उपकल्पिताभिरद्भिः प्रदक्षिणं पर्युक्षणं च विधाय तूष्णीं पाणी प्रतप्य मुखं विमार्ष्टि यथा (तनूपाऽअग्ने इत्यादीनां बृहद्देवा ऋषयस्त्रिष्टुप्छन्दोऽग्निर्देवता मुखविमार्जने विनियोगः ) ॐतनूपाऽअग्नेसि तन्वं मे पाहि ॐआयुर्दाऽग्नेस्यायुर्म्मे देहि ॐवर्चोदाऽग्नेसि वर्चो मे देहि ॐअग्ने यन्मे तन्वाऽऊनं तन्मऽआपृण ॐमेधां मे देवः सविताऽआदधातु ॐमेधां देवी सरस्वती आदधातु ॐमेधामश्विनौ देवावाधत्तां पुष्करस्रजौ । इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं ललाटाच्चिबुकपर्यन्तं मुखं प्रोञ्छति ततः अङ्गानि च मऽआप्यायन्ताम् इति बाहुभ्यां सर्वाङ्गमालभते शिरस आपादं वाक्च म आप्यायताम् इति मुखे प्राणश्च मऽआप्यायताम् इति नासिकायां चक्षुश्च मऽआप्यायताम् इति नेत्रयोः श्रोत्रं च मऽआप्यायताम् इति श्रोत्रयोः यशोबलं च मऽआप्यायताम् इति बाह्वोः अङ्गालम्भननिमित्तक उदकस्पर्शः ततोऽनामिकया अग्नेर्भस्मगृहीत्वा त्र्यायुषं

उपन० ६०

कुरुते ( त्र्यायुषमिति नारायणऋषिरनुष्टुप्छन्दोऽग्निर्देवता त्र्यायुषकरणे विनियोगः ) ॐत्र्यायुषञ्जमदग्नेः इति ललाटे ॐकश्यपस्य त्र्यायुषम् इति ग्रीवायाम् ॐयद्देवेषु त्र्यायुषम् इति दक्षिणांसे ॐतन्नोऽअस्तु त्र्यायुषम् इति हृदि । अथाग्न्यभिवादनम् अमुकगोत्रोऽमुकप्रवरो यजुर्वेदान्तर्गताऽमुकशाखाध्यायी अमुकशर्म्माहं भो अग्ने त्वामभिवादये ततो व्यस्तपाणिभ्यां गुरोः पादावुपसंगृह्णीयात् यथा दक्षिणेन पाणिना दक्षिणं पादं वामेन वामं गृहीत्वा अमुकगोत्रोऽमुकप्रवरो यजुर्वेदान्तर्गताऽमुकशाखाध्यायी अमुकशर्म्माहं भो गुरो त्वामभिवादये इति वाक्यमुक्त्वा शिरसाऽभिवादयेत् अभिवादितो गुरुश्च आयुष्मान्भव सौम्यामुकशर्म्मन् इत्याशिषं दद्यात् इतिगुरुवन्दनं विधाय अथान्यानप्यभिवादयेत् ते च विद्यावयस्तपोवृद्धा अभिवाद्याः । तत्र स्मृतयः ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् । मातुलाश्च पितृव्याश्च श्वशुरास्तत्स्त्रियस्तथा ॥प्रत्युत्थायाभिवाद्याः स्युर्ज्येष्ठभ्रातर एव च । गुरुमातास्तन्यदात्री पित्रादित्रयमेव च ॥ अन्नदाता भयत्राता मंत्रविद्योपदेशकः । एते नित्याऽभिवाद्याः स्युः सरत्नोकाः शुभार्थिना ॥ विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः । विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥ अथाभिवादनानर्हाः-उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम्। पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ॥ नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत् । मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ॥ वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् । अभ्यक्तं शिरसि स्नानं कुर्वंतं नाऽभिवादयेत् ॥ जपयज्ञस्थलस्थं च समित्पुष्पकुशानलान् । उदपानार्थभक्षान्नं वहन्तं नाभिवादयेत् ॥ अभिवाद्य द्विजश्चैतानहोरात्रेण शुद्ध्यति ॥ शूद्राभिवादने तु त्रिरात्रेण । केचित्तु अभिवादनात्पूर्वं सन्ध्योपासनमामनंति । तत्र ब्रह्मचारी सन्ध्यामुपास्याऽग्निकार्य्यं गुरूपसंग्रहणं वृद्धेभ्यो नमस्कारं च कृत्वा भिक्षार्थं गच्छेत् तदुक्तं याज्ञवल्क्येन—गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः । आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥ आदिमध्यावसानेषु भवच्छब्दोपलक्षिता । ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥ इति । सूत्रं च—भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः तिस्रोऽप्रत्याख्यायिन्यः षट् द्वादश अपरिमिता वा मातरं प्रथमाम् इति । तत्र क्रमः भिक्षाधारपात्रं स्कन्धेऽवलंब्य 'भवति भिक्षां देहि मातः' इति ब्राह्मणो याचेत "भिक्षां भवति देहि मातः" इति राजन्यः "देहि भिक्षां भवति मातः" इति वैश्यः । ब्राह्मणो दत्तां भिक्षां ॐस्वस्तीत्युक्त्वा प्रतिगृह्य आचार्य्याय निवेदयेत् भोगुरो इयं भिक्षा मया लब्धा इति निवेद्य आचार्य्यानुज्ञया आत्मभोजनार्थं स्वीकुर्यात् इति भिक्षा । अथाहःशेषं वाग्यतस्तिष्ठेदासीनो वा अहिंसन्नरण्यात्समिध आहृत्योपनयनाग्नावेव पूर्ववत्समिधादानं कृत्वा अथास्तमिते सायंसंध्यामुपास्य अग्निगुर्वोःपूर्ववदुपसंग्रहणं विधाय वाचं विसृजेत् एतत्कर्म्मवाग्विसर्जनपक्षे । वाग्विसर्जनपक्षस्तु देशाचारतो ज्ञेयः उपनयनाग्नावेव सूत्रकारेणोक्तेः तस्यचाग्नेः सायंपर्य्यन्तस्थित्यभावः तस्मात्तत्काल एवोपाकर्म्मं उचितमिति । अथ ब्रह्मचारिनियमान् ब्रह्मचारिणे श्रावयेत् । अथ ब्रह्मचारिणो नियमान्वक्ष्यामः अधःशाय्यक्षारालवणाशी स्यात् दण्डधारणमग्निपरिचरणं गुरुशुश्रूषां भिक्षाचरणं च कुर्य्यात् मधुमांसमज्जनोपर्य्यासनस्त्रीगमनानृतादत्तादानीनि वर्जयेत् । अस्यार्थः—अधःशायी स्यात् खट्वादौ न शयीतेत्यर्थः । अक्षारं क्षारं तैलतक्रादि तद्वर्जितम् । अलवणं लवणवर्जितं च अश्नीयात् । दण्डधारणं स्ववर्णविहितदण्डधारणं कुर्य्यात् । अग्निपरिचरणं पूर्वोक्तसमिदाधानं तच्च सायंप्रातः कुर्य्यात् । गुरुशुश्रूषां मनोवाक्कायकर्म्मभिर्हितसम्पादनं गुरोः कुर्य्यात् । भिक्षाचरणं सायंप्रातर्भोजनार्थं

कुर्यात् । मधु क्षौद्रं मांसं पललं मज्जनं नद्यादावाप्लवनं स्नानं तूद्धृतोदकेन उपर्यासनं गुर्वादेः सान्निध्ये उच्चासनस्थितिं पीठे पीठं निधायासनं वा न कुर्यात् । स्त्रीगमनं हावभावादिभिः स्त्रीणां मध्ये अवस्थानम् अनृतं मिथ्याभाषणं वृथाभाषणं वा अदत्तानां द्रव्याणाम् आदानं ग्रहणं तृणादेरपि स्तेयः तं वर्जयेत् । आदिशब्देन पर्युषितान्नमुच्छिष्टभोजनं ताम्बूलं दन्तधावनमत्रसक्तिकां दिवास्वापं छत्रमुपानहौ द्यूतं नृत्यं गीतं वाद्यं माल्यमुद्वर्त्तनमनुलेपनं जलक्रीडां च वर्जयेत् । कौपीनमहतं धार्यं खण्डं वा वस्त्रपार्श्वयुक् । नष्टे भ्रष्टे नवं मन्त्राद्धृत्वा भ्रष्टं जले क्षिपेत् ।। यज्ञोपवीतमजिनं मौञ्जीं दण्डं च धारयेत् । संध्याकालातिक्रमे स्नानं प्राणायामत्रयं कृत्वा गायत्र्यष्टशतं च जपित्वा संध्यां विदध्यात् लोपे त्वयुतं जपेत् इति । ततो होमदक्षिणा अद्येहामुकोहं अमुकराशेः पुत्रस्योपनयनाङ्गहोमकर्म्मणः साद्गुण्यार्थं इदं सुवर्णं वररूपेण आचार्याय तुभ्यं सम्प्रददे ॐतत्सत् । इति दत्वा आशिषं प्रतिगृह्णीयात् । इत्युपनयनम् ।

## अथ सर्वतोभद्रलिङ्गतोभद्रयोः स्थापनपूजनप्रकारः

अथ केचन सावित्रीग्रहणात्पूर्वं ग्रहवेदीसमीप एव पीठान्तरे सर्वतोभद्रदेवतानां लिङ्गतोभद्रदेवतानां वा आवाहनं पूजनं च कृत्वादुत परि कलशस्थापनविधिना कलशं संस्थाप्य तत्र प्रधानप्रतिमास्थापनं पूजनं च कृत्वा तदनन्तरं गायत्रीग्रहणं कुर्वन्ति इदं तु देशाचरत ऊह्यम् । यत्रेयं प्रथा प्रचलति तेषां सौकर्याय संक्षेपेण सर्वतोभद्रचतुर्लिङ्गतोभद्रयोः देवतानां स्थापनक्रमोऽत्र निर्दिश्यते ।

अत्र भद्रे लिखितानां सर्वेषां देवानां वैदिकाः पौराणिकाश्च द्विविधा मन्त्राः प्रतिष्ठाप्रकाशादिकमंकाण्डग्रन्थेषु लिखिताः सन्ति विस्तरभयादत्र नोल्लिख्यन्ते केवलं नाममन्त्रैरेवपूजात्र विधेया विस्तरेच्छुभिस्तत्रैव ते द्रष्टव्याः ।। सर्वतोभद्रदेवतानां पूजाप्रकारोयथा—

मध्ये कर्णिकायां ॐभूर्भुवः स्वः ब्रह्मणे नमः ।। ब्रह्माणमावाहयामि स्थापयामि । गन्धाक्षतपुष्पादियथालब्धोपचारैः पूजयामि ब्रह्मन् पूजितोऽसि क्षमस्व ।। १ ।। एवं सर्वत्र बोध्यम् । उत्तरे वाप्याम् ॐभू० सोमाय नमः सोममावा० ।।२।। ईशान्यां खण्डेन्दौ ॐभू० ईशानाय० ईशानमा० ।। ३ ।। पूर्वे वाप्यां ॐभू० इन्द्राय० इन्द्रमावाह० ।। ४ ।। आग्नेय्यां खण्डेन्दौ ॐभू० अग्नये० अग्निमावा० ।। ५ ।। दक्षिणे वाप्यां ॐ भू० यमाय० यममावा० ।। ६ ।। नैर्ऋत्यां खण्डेन्दौ ॐ भू० निर्ऋतये० निर्ऋतिमावा० ।। ७ ।। पश्चिमे वाप्यां ॐभू० वरुणाय० वरुणमावाह० ।। ८ ।। वायव्यां खण्डेन्दौ ॐभू० वायवे० वायुमावा० ।। ६ ।। वायुसोमयोर्मध्ये भद्रे ॐ भू० अष्टवसुभ्योनमः—अष्टवसून् आवाहयामि ।। १० ।। सोमेशानयोर्मध्ये भद्रे० ॐभू० एकादशरुद्रेभ्यो० एकादशरुद्रानावाहयामि ।। ११ ।। ईशानेन्द्रयोर्मध्ये भद्रे ।। ॐ भू० द्वादशादित्येभ्योनमः द्वादशादित्यानावाहयामि ।। १२ ।। इन्द्राग्निमध्ये भद्रे ॐभू० अश्विभ्यां० अश्विनौ० ।। १३ ।। अग्नियममध्ये भद्रे ।। ॐ भू० सपैतृकविश्वेभ्यो देवेभ्यो० सपैतृकविश्वान्देवानावा० ।। १४ ।। यमनिर्ऋतिमध्ये भद्रे ॐभू० सप्तयक्षेभ्यो नमः सप्तयक्षाना० ।। १५ ।। निर्ऋतिवरुणमध्ये भद्रे ॐ अष्टकुलनागेभ्यो नमः अष्टकुलनागाना० ।। १६ ।। वरुणवायुमध्ये भद्रे ॐ भू० गन्धर्वोप्सरोभ्यो नमः गन्धर्वाप्सरसः आवा० ।। १७ ।। ब्रह्मसोममध्ये वाप्यां लिङ्गेवा ।। ॐ भू० स्कन्दायनमः स्कन्दमा० ।। १८ ।। तदुत्तरे ।। ॐ भू० वृषभाय नमः वृषभमा० ।। १९ ।। तदुत्तरे ॐ भू० शूलाय० शूलमा० ।। २० ।। तदुत्तरे अनेनैव मन्त्रेण ॐभू० महाकालाय नमः महाकालमा० ।। २१ ।।

## सर्वतोभद्रचक्रम्



प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ॥
खण्डेन्दुस्त्रिपदः श्वेतपञ्चभिः कृष्णश्रृङ्खलाः ॥ १ ॥
नीलैकादशवल्ली तु भद्रं रक्तं पदैः नव ॥
चतुर्विंशत्सिता वापी परिधिः पीतविंशतिः ॥ २ ॥
मध्ये षोडशभिः कोष्ठैः रक्तं पद्मं सकर्णिकम् ॥
परिध्या वेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः ॥
तन्मध्ये स्थापयेद्देवान् ब्रह्माद्याँश्च सुरेश्वरान् ॥ ३ ॥



## चतुर्लिङ्गतोभद्रचक्रम्



रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे ॥
कोणेन्दुस्त्रिपदैः श्वेतास्त्रिपदैः कृष्णश्रृङ्खलाः ॥ १ ॥
वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम् ॥
भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः ॥ २ ॥
शिवस्य पार्श्वतो वापीं कुर्यात्पञ्चपदां सिताम् ॥
पदमेकं तथा पीतं भद्रवाप्योस्तु मध्यतः ॥ ३ ॥
शिरसि श्रृङ्खलायाश्च कुर्यात्पीतं पदत्रयम् ॥
लिङ्गानां स्कन्धतः कोष्ठा विंशतिः रक्तवर्णकाः ॥ ४ ॥
परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृता ॥
पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकर्णिकम् ॥ ५ ॥

ब्रह्मेशानमध्ये शृङ्खलायां० ॥ ॐ भू० दक्षादिसप्तगणेभ्यो नमः दक्षादिसप्तगणान्० ॥२२॥ ब्रह्मेन्द्रमध्ये वाप्यां लिङ्गे वा ॐभू० दुर्गायै नमः दुर्गामा० ॥ २३ ॥ तत्पूर्वे ॐ भू० विष्णवे नमः विष्णुमावा० ॥ २४ ॥ ब्रह्माग्निमध्ये शृं० ॐ भू० स्वधायै० स्वधामा० ॥ २५ ॥ ब्रह्मयममध्ये वाप्यां लिङ्गे वा । ॐ मृत्युरोगेभ्यो नमः ॥ मृत्युरोगान्० ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्ये शृं० ॐ गणपतये नमः ॥ गणपतिमा० ॥२७॥ ब्रह्मवरुणमध्ये वाप्यां लिङ्गे वा । ॐ अद्भ्यो नमः ॥ अपः० ॥ २८ ॥ ब्रह्मवायुमध्ये शृं० । ॐ भू० मरुद्भ्यो नमः । मरुतः० ॥२९॥ ब्रह्मणः पादमूले भू० पृथिव्यै नमः ॥ पृथ्वीमा० ॥३०॥ तदुत्तरे । ॐभू० गंगादिनदीभ्यो नमः ॥ गङ्गादी० ॥ ३१ ॥ तदुत्तरे । ॐ भू० सप्तसागरेभ्यो० ॥ सप्तसागरान्० ॥३२॥ कर्णिकापरिधौ । ॐभू० मेरवे नमः ॥ मेरु० ॥३३॥ अथ सोमादिक्रमेण ॥ सत्त्वबाह्यपरिधौ । ॐ भू० गदायै नमः ॥ गदां० ॥३४॥ ईशान्यां ॥ ॐ भू० त्रिशूलाय० त्रिशूलं० ॥३५ ॥ पूर्वे ॐ भू० वज्राय नमः ॥ वज्रमावाह० ॥ ३६ ॥ आग्नेय्यां । ॐ भू० शक्तये नमः । शक्तिमा० ॥ ३७ ॥ दक्षिणे ॥ ॐ भू० दण्डाय नमः ॥ दण्डमा० ॥३८॥ नैर्ऋत्यां ॐभू० खड्गाय नमः ॥ खड्गमावा० ॥३९॥ पश्चिमे ॐपाशाय नमः ॥ पाशमा०॥४०॥ वायव्यां० ॥ ॐभू० अङ्कुशाय० ॥ अङ्कुशमा० ॥४१॥ तद्बाह्ये उत्तरे रक्तपरिधौ ॥ सोमादि० ॐ भू० गौतमाय नमः ॥ गौतमं०॥४२॥ ईशान्यां ॥ ॐभू० भरद्वाजाय नमः ॥ भरद्वाजं० ॥४३॥ पूर्वे ॥ ॐ भू० विश्वामित्राय नमः ॥ विश्वामित्रं० ॥ ४४ ॥ आग्नेय्यां । ॐ भू० कश्यपाय नमः ॥ कश्यपमा० ॥४५ ॥ दक्षिणे ॥ ॐ भू० जमदग्नये नमः ॥ जमदग्निमा० ॥ ४६ ॥ नैर्ऋत्यां ॥ ॐ भू० वसिष्ठाय नमः ॥ वसिष्ठं० ॥४७॥ पश्चिमे ॥ ॐ भू० अत्रये नमः ॥ अत्रिं० ॥ ४८ ॥ वायव्यां ॥ ॐ भू० अरुन्धत्यै नमः ॥ अरुन्धतीं० ॥ ४९ ॥ तद्बाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ॥ पूर्वे ॥ भू० ऐन्द्र्यैनमः ॥ ऐन्द्रीमा० ॥ ५० ॥ आग्नेयाम् । ॐ भूर्भुवःस्वः कौमार्यै नमः कौमारीमावा० ॥ ५१ ॥ दक्षिणे ॥ ॐ भू० ब्राह्म्यैनमः ॥ ब्राह्मीमा० ॥ ५२ ॥ नैर्ऋत्यां ॐ भू० वाराह्यैनमः ॥ वाराहीमा० ॥५३॥ पश्चिमे । चामुण्डायै नमः ॥चामुण्डामा० ॥५४॥ वायव्ये॥ ॐभू० वैष्णव्यै नमः ॥ वैष्णवीमा० ॥५५॥ उत्तरे ॥ ॐ भूर्भुवःस्वः माहेश्वर्यै नमः ॥ माहेश्वरीमावाहयामि ॥ ५६ ॥ ईशान्यां । ॐ भू० वैनायक्यै नमः । वैनायकीं० ॥ ५७ ॥ इतिसर्वतोभद्रदेवतास्थापनक्रमः ॥

अथ लिंगतोभद्रदेवतास्थापनक्रमः तद्बाह्ये पूर्वे ॥ ॐ भू० असिताङ्गभैरवाय नमः ॥ असिताङ्गभैरवं० ॥ १ ॥ आग्नेयां ॥ ॐ भू० रुरुभैरवाय नमः ॥ रुरुभैरवं० ॥ २ ॥ दक्षिणे ॥ ॐभू० चण्डभैरवाय नमः ॥ चण्डभैरवं० ॥ ३ ॥ नैर्ऋत्यां ॥ ॐभू० क्रोधभैरवाय नमः ॥ क्रोधभैरवं०॥४॥ पश्चिमे ॥ ॐभू० उन्मत्तभैरवाय नमः ॥ उन्मत्तभैरवं० ॥ ५ ॥ वायव्यां ॥ ॐभू० कपालभैरवाय नमः ॥ कपालभैरवं० ॥ ६ ॥ उत्तरे ॥ ॐभू० भीषणभैरवाय नमः ॥ भीषणभैरवं० ॥ ७ ॥ ईशान्यां ॥ ॐभू० संहारभैरवाय नमः ॥ संहारभैरवं० ॥८॥ तद्बाह्ये पूर्वे ॥ ॐभू० भवाय नमः ॥ भवं० ॥ १ ॥ आग्नेयां ॥ ॐभू० शर्वाय नमः ॥ शर्वं० ॥ २ ॥ दक्षिणे ॥ ॐभू० पशुपतये नमः ॥ पशुपतिं० ॥३॥ नैर्ऋत्यां ॥ ॐभूर्भुवःस्वः ईशानाय नमः ॥ ईशानं० ॥४॥ पश्चिमे ॐभूर्भुवःस्वः रुद्राय नमः रुद्रं० ॥५॥ वायव्यां ॥ ॐभू०उग्राय नमः ॥ उग्रं० ॥६॥ उत्तरे ॥ ॐभू०भीमाय नमः ॥ भीमं० ॥७॥

ईशान्यां ॥ॐभू० महते नमः ॥ महान्तं० ॥८॥ तद्बाह्ये पूर्वे ॥ ॐभू० अनन्ताय नमः ॥ अनन्तं० ॥१॥आग्नेय्यां ॥ ॐभू० वासुकये नमः ॥ वासुकिं० ॥२॥ दक्षिणे ॥ ॐभू० तक्षकाय नमः ॥ तक्षकं० ॥ ३ ॥ नैर्ऋत्यां । ॐभू० कुलिशाय नमः ॥ कुलिशं० ॥४॥ पश्चिमे ॐभूर्भुवः स्वः कर्कोटकाय० ॥ कर्कोटकं० ॥५॥ वायव्यां ॥ ॐभू० शंखपालाय नमः ॥ शंखपालं० ॥६॥ उत्तरे ॥ ॐ भू० कम्बलाय० ॥ कम्बलं० ॥७॥ ईशान्यां ॥ ॐभू० अश्वतराय० ॥ अश्वतरं० ॥८॥ ईशानेन्द्रमध्ये । ॐभू० शूलाय नमः ॥ शूलं० ॥१॥ इन्द्राग्निमध्ये ॥ ॐभू० चन्द्रमौलिने नमः ॥ चन्द्रमौलिनं० ॥२॥ अग्नियमयोर्मध्ये ॐ भू० चन्द्रमसे नमः । चन्द्रमसं० ॥३॥ यमनिर्ऋतिमध्ये । ॐ भू० वृषभध्वजाय० ॥ वृषभध्वजं० ॥ ४॥ निर्ऋतिवरुणमध्ये ॥ ॐ भू० त्रिलोचनाय० ॥ त्रिलोचनं० ॥५॥ वरुणवायुमध्ये ॐ भू० शक्तिधराय० ॥ शक्तिधरं० ॥ ६ ॥ वायुसोममध्ये । ॐ भू० महेश्वराय० ॥ महेश्वरं० ॥ ७ ॥ सोमेशानमध्ये ॥ ॐ भू० शूलपाणये० ॥ शूलपाणिं० ॥ ८ ॥ एवं देवानावाह्य नाममंत्रेण आसनादिनीराजनान्तं सम्पूजयेत् ॥ इति लिङ्गतोभद्रदेवतास्थापनं पूजनं च ॥

तत्र मध्ये ताम्रकलशं प्रतिष्ठाप्य तस्योपरि स्वर्णमयीं प्रधानप्रतिमामग्न्युत्तारणपूर्वकं स्थापयेत् ॥ अथाग्न्युत्तारणविधिः ॥ तत्राचार्यः पात्रान्तरे प्रतिमां निधाय घृतेनाभ्यज्य उपरि जलधारां कुर्यात् ॥ तत्र मंत्राः ॥ ॐ समुद्रस्य त्वा वकयाग्ने परिव्ययामसि ॥ पावकोऽअस्मभ्यꣳशिवो भव ॥१॥ ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ॥ पावकोऽअस्मभ्यꣳशिवो भव ॥२॥ ॐ उपज्मन्नुपवेतसेवतर नदीष्वा ॥ अग्ने पित्तमपामसि मण्डुकिताभिरागहि सेमन्नो यज्ञम्पावकवर्णꣳ शिवङ्कृधि ॥ ३ ॥ ॐ अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् ॥ अन्यांस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भव ॥ ४ ॥ ॐ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ॥ आदेवान्वक्षि यक्षि च ॥ ५ ॥ ॐ सत पावक दीदिवोऽग्ने देवाँ ॥ २ ॥ ऽइहावह उपयज्ञꣳ० हविश्चनः ॥ ६ ॥ ॐपावकया यश्चि तपन्त्यात्कृपाक्षामन्न्रुचऽउषसो न भानुना ॥ तूर्वन्नया मन्नेतशस्यनूरणऽआयोघृणेन त तृषाणोऽअजर꞉ ॥७॥ ॐ नमस्तेऽहरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳ० शिवो भव ॥ ८ ॥ ॐ नृषदेवेऽप्सुषदेव्वेड्बर्हिषदेव्वेड्वनसदेव्वेट्स्वर्व्विदेव्वेट् ॥९॥ ॐ ये देवा देवानां य्यज्ञियाय ज्ञियानाꣳ संवत्सरीणमुपभागमासते ॥ अहुतादो हविषोयज्ञेयऽअस्मिन्स्वयम्पिबन्तु मधुनो घृतस्य ॥ १० ॥ ॐ ये देवा देवेष्वधिदेवत्वमायन्न्ये ब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्यो नऽऋते पवते धाम किञ्चन नते दिवोनऽपृथिव्याऽअधिस्नुषु ॥ ११ ॥ ॐ प्राणदाऽअपानदा व्यानदाव्वर्चोदाव्वरिवोदाः ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतव꞉ पावकोऽअस्मभ्यꣳ० शिवोभव ॥ १२ ॥ इति अग्न्युत्तारणं कृत्वा, प्राणप्रतिष्ठां कुर्यात् ॥ तद्यथा ॥ प्रतिमां हस्तेन संस्पृश्य बीजमंत्रान् जपेत् ॥ ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः अस्य मूर्तौ प्राणाः ॥ पुनः आं ह्रीं०...सः अस्य मूर्तौ जीव इह स्थितः ॥ पुनः आं ह्रीं०...सः अस्य मूर्तौ सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणीपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ अस्यै प्राणाः प्रतिष्ठन्तु० ॐ मनोजूतिरिति प्रतिष्ठां कृत्वा पूजयेत् ॥ इत्यग्न्युत्तारणविधिःप्राणप्रतिष्ठा च ॥ अथ पञ्चवर्णान्युक्तानि पञ्चरात्रे । रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत् ॥ शालितण्डुलचूर्णेन शुक्लं वा यवसम्भवम् ॥ १ ॥ रक्तं कुसुम्भ-

सिन्दूरं गैरिकादिसम्भूद्भवम् ॥ हरितालोद्भवं पीतं रजनीसम्भवं क्वचित् ॥ २ ॥ कृष्णं दग्धैर्यवैः कार्यं हरितं बिल्वचूर्णकम् ॥
 कारयेत्सर्वधान्यैर्वा वर्णकैरुपशोभितम् ॥ ३ ॥ इति सर्वतोभद्रलिङ्गतोभद्रस्थापनपूजनादिक्रमः ॥ 

## अथ वेदारम्भः

वेदारम्भस्तु प्रथमं स्ववेदस्यैव कार्यः । गौतमः—अधीत्य शाखामात्मीयां परशाखां ततः पठेत् । पारंपर्यागतो येषां वेदः सपरिबृंहणः ॥ तच्छाखं कर्म्म कुर्वीत तच्छाखाध्ययनं तथा । एवमध्ययनं कुर्व्वन् ब्रह्मसायुज्यमाप्नुयात् ॥ सपरिबृंहणः सकल्पः वेदारम्भस्तूपनयनानन्तरं कार्य्यः । तत्र योगियाज्ञवल्क्यः-उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ इति । अथ प्रयोगः । आचार्य्यो वेदारम्भवेदीसमीपमागत्योपविश्याचम्य गणेशं नमस्कृत्य पञ्चभूसंस्कारपूर्वकमग्निस्थापनं विधाय अर्घं संस्थाप्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म्म कृत्वा सङ्कल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशेरस्य वटोः यजुर्वेदादिक्रमेण वेदारम्भं करिष्ये इति प्रतिज्ञाय स्रुवेण मध्ये दीर्घाकाराहुतीरित्यन्तं विधाय देवताभिध्यानं करोति अद्येह अस्य वटोः वेदारम्भकर्मणाहं यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममन्तरिक्षं वायुं ब्रह्माणं छंदांसि प्रजापतिं देवान् ऋषीन् श्रद्धां मेधां सदसस्पतिमनुमतिमग्निं वायुं सूर्य्यं अग्नीवरुणावग्नीवरुणावग्निं वरुणं सवितारं विष्णुं विश्वान् मरुतःस्वर्कान् वरुणमदितिं प्रजापतिं स्विष्टकृतं चाज्येनाहं यक्ष्ये इदमाज्यं तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु ॐएतन्त इत्यादि ॐभूर्भुवः स्वः हरिनामाग्ने सुप्रतिष्ठितो वरदो भव । अथाग्नेः पूजनम् अद्येहेत्यादि अमुकोहं अमुकराशेरस्य वटोः वेदारम्भहोमकर्म्मणि हरिनामाग्नेः पूजनं करिष्ये तदेवाग्निरितिमन्त्रेण ध्यानावाहनासनपाद्यादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदꣳसोमाय । अथ यजुर्वेदाहुतयः ॐअन्तरिक्षायस्वाहा इदमन्तरिक्षाय ॐवायवे स्वाहा इदं वायवे ॐब्रह्मणे स्वाहा इदं ब्रह्मणे ॐछन्दोभ्यः स्वाहा इदं छन्दोभ्यः ॐप्रजापतये स्वाहा इदंप्रजापतये ॐदेवेभ्यः स्वाहा इदं देवेभ्यः ॐऋषिभ्यःस्वाहा इदमृषिभ्यःॐश्रद्धायै स्वाहा इदं श्रद्धायै ॐमेधायै स्वाहा इदं मेधायै ॐसदसस्पतये स्वाहा इदं सदस्पतये ॐअनुमतये स्वाहा इदमनुमतये ॥११॥ अथ ऋग्वेदाहुतयः ॐपृथिव्यै स्वाहा इदं पृथिव्यै ॐअग्नये स्वाहा इदमग्नये इति द्वे आहुती ब्रह्मणे छन्दोभ्य इत्यादि नवाहुतयः पूर्व्ववत् ॥११॥ अथ सामवेदाहुतयः ॐदिवे स्वाहा इदं दिवे ॐसूर्याय स्वाहा इदं सूर्याय इति द्वे ब्रह्मणे छन्दोभ्य इत्यादयो नव पूर्व्ववत्॥११॥अथाथर्व्ववेदाहुतयः ॐदिग्भ्यः स्वाहा इदं दिग्भ्यः ॐ चन्द्रमसे स्वाहा इदं चन्द्रमसे इति द्वे ब्रह्मणे छन्दोभ्य इत्यादयो नव पूर्ववत् ॥११॥ ततोभूरादिनवाहुतिहोमं स्विष्टकृतं च हुत्वा (पृ.१३) संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानसङ्कल्पः अद्येहामुकोहं अमुकराशेरस्य पुत्रस्य वेदारम्भाङ्गहोमकर्म्मणःसाङ्गफलप्राप्तये अपूर्णपूर्णार्थमिदं पूर्णपात्रं ससुवर्णं ब्रह्मणे तुभ्यं संप्रददे इति दद्यात् ब्रह्मा च अक्रन्कर्म्मेति मंत्राशिषं दद्यात् । अथ वेदारम्भक्रमः यथा अद्येहामुकोहं अमुकशर्म्मणो वेदारम्भकर्म्मणः पूर्वाङ्गत्वेन गणेशादीनां स्थापनावाहनपूजननानि करिष्ये ताम्रस्थाल्यादौ दध्यक्षतान्गृहीत्वा उत्तरवृद्ध्या स्थापयेत् ॐभूर्भुवःस्वः गणेश इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि ॐभूर्भुवः स्वः विष्णो इहा० ॐभूर्भुवःस्वः सरस्वति इहा० ॐभूर्भुवःस्वः लक्ष्मि इहा० ॐ

भूर्भुवःस्वः स्वविद्यासूत्रकार कात्यायन इहा० एतन्त इतिप्रतिष्ठाप्य नाममन्त्रेण ध्यानादिनीराजनान्तं सम्पूज्य ततो ब्रह्मचारिणे यथाविधि वेदमध्यापयेत् यथा अग्नेरुत्तरतो ब्रह्मचारिणमुदङ्मुखं प्राङ्मुखं वा प्रागग्रेषु कुशेषूपवेश्य स्मार्त्ताचमनं प्राणायामं ब्रह्माञ्जलिं च कारयित्वा ॐकारपूर्वां महाव्याहृतिपूर्वां त्रिवारं गायत्रीं पठित्वा स्ववेदारम्भं कुर्यात् तत्र ( ॐइषेत्वादि खम्ब्रह्मान्तस्य माध्यन्दिनीयकस्य वाजसनेयकस्य यजुर्व्वेदाम्नायस्य विवस्वान्ऋषिर्गायत्र्यादीनि सर्वाणि च्छन्दांसि सर्वाणि यजूंषि लिङ्गोक्ता देवता यजुर्वेदारम्भे विनियोगः) ॐहरिःॐ ॐभूर्भुवः स्वः ॐइषे त्त्वोर्ज्जे त्वा व्वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागम् प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेन ऽईशत माघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि १ ॐव्वसोः पवित्रम् इति स्वल्पारम्भं कारयित्वा अध्यायादीन्प्रब्रूयात् ॐकृष्णोसि. २ ॐसमिधाग्निम्. ३ ॐएदम्. ४ ॐअग्नेस्तनूः. ५ ॐदेवस्य त्वा. ६ ॐव्वाचस्पतये. ७ ॐउपयामगृहीतोसि. ८ ॐदेव सवितः. ९ ॐअपोदेवाः. १० ॐयुञ्जानः प्रथमम्. ११ ॐदृशानोरुक्क्मः. १२ ॐमयि गृह्णामि. १३ ॐध्रुवक्षितिर्द्ध्रुवयोनिः १३ ॐअग्ने जातान्. १५ ॐनमस्ते. १६ ॐअश्मन्नूर्जम्. १७ ॐव्वाजश्च. १८ ॐस्वाद्वीन्त्वा. १९ ॐक्षत्रस्य योनिः. २० ॐइमम्मे. २१ ॐतेजोसि. २२ ॐहिरण्यगर्ब्भः सम्. २३ ॐअश्वस्तूपरः. २४ ॐशादन्दद्भिः. २५ ॐअग्निश्च. २६ ॐसमास्त्वा. २७ ॐहोता यक्षत्. २८ ॐसमिद्धोऽअञ्जन्. २९ ॐदेव सवितः. ३० ॐसहस्रशीर्षा पुरुषः. ३१ ॐतदेव. ३२ ॐअस्याजरासः. ३३ ॐयज्जाग्रतः ३४ ॐअपेतः। जलस्पर्शः विष्णोर्वा स्मरणम्। ३५ ॐऋचं वाचम्. ३६ ॐदेवस्य त्वा. ३७ ॐदेवस्य त्वा. ३८ ॐस्वाहा प्राणेभ्यः ३९ ॐईशावास्यमिदꣳ सर्व्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ ॐहिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। योसावादित्ये पुरुषः सोसावहम् ॐखम्ब्रह्म ४० ॐव्रतमुपैष्यन्नन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्राङ्तिष्ठन्नपऽउपस्पृशति तद्यदपऽ उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेद्ध्या वाऽआपो मेद्ध्यो भूत्वा व्रतमुपायानीति पवित्रं वाऽ आपः पवित्रपूतो व्व्रतमुपायानीति तस्माद्वाऽआपऽउपस्पृशति सोग्निमेवाभीक्षमाणो व्व्रतमुपैति १ ॐप्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रऽआसुरायणादासुऽरायण आसुरेरासुरिर्य्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणऽउपवेशेरुपवेशिः कुश्रेःकुश्रिर्व्वाजश्रवसो वाजश्रवा जिह्वावतो वाद्ध्योगाज्जिह्वावान्वाद्ध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितःकश्यपः शिल्पात्कश्यपाच्छिल्पःकश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्व्वाचो वागम्भिण्याऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि व्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते २ इत्यन्तं यजुर्वेदारम्भं परिसमापयेत्। ( अथ ऋग्वेदादिमन्त्रस्य मधुच्छन्दा ऋषिर्गायत्रीछन्दोऽग्निर्देवता स्वाध्याये विनियोगः ) ॐअग्निमीळे पुरोहितं यज्ञस्य देवमृत्त्विजम्। होतारं रत्नधातमम्॥ इतिऋग्वेदारम्भः ( अथ सामवेदादिमंत्रस्य गौतमऋषिर्गायत्रीछन्दोग्निर्देवता स्वाध्याये विनियोगः ) ॐअग्नऽआयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि। इति सामवेदारम्भः ( शन्नोदेवीरिति दध्यङ्ङाथर्व्वणऋषिर्गायत्रीछन्दोग्निर्देवता स्वाध्याये विनियोगः ) ॐशन्नोदेवीरभीष्टयऽआपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः। इत्यथर्व्ववेदारम्भः पुनःपूर्ववत् प्रणवमहाव्याहृतिपूर्विकां गायत्रीं त्रिरुक्त्वा ॐविरामोऽस्तु इतिवदन्तं गुरुं शिष्यः पादोपसङ्ग्रहणपूर्व्वकं

प्रणम्य विरमेत् । अधीतानिराकरणमन्त्रान्पठेत् अथातोधीत्याधीत्यानिराकरणम् प्रतीकम्मे विचक्षणं जिह्वा मे मधुमद्वचः कर्णाभ्यां भूरि शुश्रुवे मा त्वा हार्षीच्छ्रुतम्मयि ॐब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशम्मे विश वाचा त्वा पिदधामि वाचा त्वा पिदधामि तिष्ठ प्रतिस्वरकरणदन्त्यौष्ठ्यकण्ठ्यौरससैधामाधुर्य्यग्रहणधारणोच्चारणशक्तिर्म्मयि भवत्वाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुःश्रोत्रं यशोबलं यन्मे श्रुतमधीतन्तन्मे मनसि तिष्ठतु तिष्ठतु ॐइति । अथाचारात् अस्मिन्नवसरे वटुं पाठार्थं वाराणसीं प्रति प्रस्थापयन्ति । (वेदानां ग्रहणे सूत्रम् अष्टचत्वारिꣳशद्वर्षाणि वेदब्रह्मचर्य्यं चरेत् द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणंवेति ।) अध्ययननियमाः आचार्य्येणाहूतोऽधीयीत शयानं चेदासीनः आसीनं चेत्तिष्ठन् तिष्ठन्तं चेदभिधावन् अभिधावन्तं चेदभिक्रामन् गुरुमेवं वर्त्तमानो ब्रह्मचारी ब्रह्मभूयाय कल्पते इति अथदक्षिणासङ्कल्पः अद्येहामुकोहं अमुकशर्म्मणो वटोः वेदारम्भहोमकर्म्मणः वेदारम्भकर्म्मणश्च साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इदं सुवर्णमग्निदैवतं वररूपेणाचार्य्याय तुभ्यं सम्प्रददे इति दद्यात् आचार्य्यश्चाशिषं दद्यात् ॥ इतिवेदारम्भविधिः ॥

## अथ समावर्तनम्

तत्रसूत्रम्-वेदं व्रतानि वा समाप्य स्नायात् इति । स्मृतिश्च—वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा । अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ इति तत्र त्रिविधः स्नातको भवति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति । विद्यां समाप्य यः स्नाति स विद्यास्नातकः व्रतं समाप्य यः स्नाति स व्रतस्नातकः । विद्यां व्रतं च समाप्य यः स्नाति स विद्याव्रतस्नातक इति तत्र विधिस्तु वेदारम्भवत्कार्यः एतदेवव्रतादेशनविसर्गेषु कर्त्तव्यमिति पारस्करवचनात् । अथ स्नातको वररूपेण गवादिकमाचार्याय दद्यात् तत्रसङ्कल्पः अद्येहामुकोहं स्नातकत्वाधिकारसिद्धये इमां गां गोप्रत्याम्नायीभूतं सुवर्णं वा आचार्याय तुभ्यं सम्प्रददे इति गुरवे वरं दत्वा भो गुरो अहं स्नास्ये इति सम्प्रार्थ्य "स्नाहि" इति लब्धानुज्ञः स्नायात् । अत्र स्नानादौ ब्रह्मचार्येवाधिकारी स्नायादिति कर्त्तरि प्रत्ययविधानात् ॥ अथाचार्यः समावर्त्तनवेदीसमीपमागत्य उपविश्य तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य प्रतिज्ञासङ्कल्पं कुर्यात् अद्येह अमुकोहम् अमुकराशेरस्य वटोः स्नातकत्वसिद्धये समावर्त्तनकर्म्म करिष्ये इतिसङ्कल्प्य ब्रह्मोपवेशनादि पूर्णपात्रासादनान्ते विशेषोपकल्पनीयानि वस्तून्यासादयेत् तानि च अग्निकार्ये इन्धनं पञ्चधा विभक्तं पर्युक्षणार्थमुदकं समिधस्तिस्रः पुनरिन्धनवारिणी हरिताः कुशाः स्नानाधिकरणभूताः सर्वौषधिमिश्रिततीर्थवारिपूर्णा अष्टौ कुम्भा उदकसंस्थाः सूर्योपस्थानार्थं वस्त्रं भोजनार्थं दधि तिलाः चौरार्थं नापितः स्नानार्थं वारि औदुम्बरं दन्तधावनम् उत्सादनीयमुष्णमुदकं चन्दनम् अहते वाससी पुष्पमाला शिरोवेष्टनं कञ्चुकादीनि परिधानवस्त्राणि कर्णवेष्टनहस्तभूषणमुद्रिकादीनि भूषणानि अञ्जनं दर्प्पणं नूतनं छत्रम् उपानहौ वैणवो दण्डः सहस्रधारा चेति ततः अद्येहेत्याद्युच्चार्य समावर्त्तनकर्म्माधिकारसिद्धये त्रीन् ब्राह्मणान्भोजयिष्य इति सङ्कल्प्य ब्राह्मणान्भोजयित्वा पवित्रच्छेदनादि पर्युक्षणान्तं कर्म्म कृत्वा द्रव्यत्यागं कुर्यात् अद्येह अस्य वटोः समावर्त्तनकर्म्मणाहं यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोमं अन्तरिक्षं

वायुं ब्रह्माणं छन्दांसि प्रजापतिं देवान् ऋषीन् श्रद्धां मेधां सदसस्पतिमनुमतिं पृथिवीमग्निं दिवं सूर्य्यं दिशश्चन्द्रमसमग्निं वायुं सूर्यमग्नीवरुणावग्नीवरुणावग्निं वरुणं सवितारं विष्णुं विश्वान्मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं स्विष्टकृतं चाज्येनाहं यक्ष्ये इदमाज्यं तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु ततः पर्य्युक्षणान्तं कर्म्म कृत्वा राजपुत्रनामाग्निं स्थापयेत् एतन्त इत्यादि ॐभूर्भुवःस्वः राजपुत्रनामाग्ने सुप्रतिष्ठितो वरदो भव ॐतद्देवाग्निरित्यादिभिः ( पृ० १२ ) ध्यानावाहनपाद्यादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा आघारावाज्यभागौ हुत्वा वेदारम्भवत्प्रधानाहुतीर्जुहुयात् तत्र यजुर्वेदाहुतयः ॐअन्तरिक्षाय स्वाहा इदमन्तरिक्षाय ॐ वायवे स्वाहा इदं वायवे ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ॐछन्दोभ्यः स्वाहा इदं छन्दोभ्यः ॐप्रजापतये स्वाहा इदं प्रजापतये ॐदेवेभ्यः स्वाहा इदं देवेभ्यः ॐऋषिभ्यः स्वाहा इदं ऋषिभ्यः ॐश्रद्धायै स्वाहा इदं श्रद्धायै ॐमेधायै स्वाहा इदं मेधायै ॐसदसस्पतये स्वाहा इदं सदस्पतये ॐअनुमतये स्वाहा इदमनुमतये ११ ॥ अथ ऋग्वेदाहुतयः ॐ पृथिव्यै स्वाहा इदं पृथिव्यै ॐअग्नये स्वाहा इदमग्नये इति द्वे आहुती ब्रह्मणे छन्दोभ्य इति नवाहुतयः पूर्ववत् ११ ॥ अथ साम-वेदाहुतयः ॐदिवे स्वाहा इदं दिवे ॐ सूर्याय स्वाहा इदꣳसूर्याय इति द्वे आहुती ब्रह्मणे छन्दोभ्य इत्यादयो नव पूर्ववत् ११ ॥ अथाथर्ववेदाहुतयः ॐदिग्भ्यः स्वाहा इदं दिग्भ्यः ॐ चन्द्रमसे स्वाहा इदं चन्द्रमसे इति द्वे ब्रह्मणे छन्दोभ्य इत्यादयो नव पूर्ववत् ११ ॥ ततोभूरादिनवाहुतिहोमं स्विष्टकृतं च हुत्वा ( पृ० १३ ) संस्रवप्राशनं पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदान-सङ्कल्पः अद्येहेत्यादि अमुकोहं अमुकराशेरस्य वटोः समावर्त्तनाङ्गहोमकर्म्मणः साङ्गफलप्राप्तये अपूर्णपूर्णार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मन् तुभ्यं सम्प्रददे अक्रन्कर्म्मेति मन्त्रपाठः । ततो ब्रह्मचारी "अग्ने सुश्रव" इत्यादिमन्त्रैः अग्निपरिसमूहनं कुर्यात् ( अग्ने सुश्रव इत्यादीनां पञ्चानां ब्रह्मा ऋषिर्यजुश्छन्दोऽग्निर्देवता परिसमूहने विनियोगः ) ॐअग्ने सुश्रवः सुश्रवसम्मा कुरु १ ॐयथा त्वमग्ने सुश्रवः सुश्रवाऽअसि २ ॐएवं माꣳ सुश्रवः सौश्रवसं कुरु ३ ॐयथा त्वमग्ने यज्ञस्य निधिपाऽअसि ४ ॐएवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ५ प्रदक्षिणमग्निं पर्य्युक्ष्योत्थाय एकां समिधमादाय तिष्ठन् ( अग्नये समिधमिति प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः ) ॐअग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिद्ध्यसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे । जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्य्यशस्वी तेजस्वी ब्रह्मवर्चस्य-न्नादो भूयासꣳस्वाहा ॥ इतिमन्त्रेण दक्षिणं करं स्पृष्ट्वा होमयेत् । एवं द्वितीयां तथा तृतीयां च समिधं होमयित्वा उपविश्य अग्ने सुश्रव इत्यादि पञ्चभिर्मन्त्रैः पूर्ववत्परिसमूहनं पर्युक्षणं च विधाय तूष्णीं पाणी प्रतप्य मुखं विमार्ष्टि ॐतनूपाऽअग्नेऽसि तन्वं मे पाहि ॐआयुर्दाऽग्नेस्यायुर्मे देहि ॐवर्च्चोदाऽग्नेसि वर्च्चो मे देहि ॐअग्ने यन्मे तन्वाऽ ऊनं तन्मऽआपृण ॐमेधाम्मे देवः सविताऽआद-धातु ॐमेधां देवी सरस्वती आदधातु ॐमेधामश्विनौ देवावाधत्तां पुष्करस्रजौ । इति प्रतिमंत्रं ललाटाच्चिबुकपर्य्यन्तं मुखं प्रोञ्छति ततः ॐअङ्गानि च मऽआप्यायन्ताम् इति शिरस आपादमङ्गान्यालभेत् ॐवाक्च मऽआप्यायताम् इति मुखम् ॐप्राणश्च मऽआप्या-यताम् इति नासिकाम् ॐचक्षुश्च मऽआप्यायताम् इति चक्षुषी ॐश्रोत्रं च मऽआप्यायताम् इति श्रोत्रे ॐयशोबलं च मऽआप्यायताम्

इति बाहू । तत उदकस्पर्शः । अथानामिकयाग्नेर्भस्म गृहीत्वा त्र्यायुषाणि कुरुते ॐत्र्यायुषञ्जमदग्नेः इतिललाटे ॐकश्यपस्य त्र्यायुषम्
इतिग्रीवायाम् ॐयद्देवेषु त्र्यायुषम् इति दक्षिणांसे ॐतन्नो अस्तु त्र्यायुषम् इति हृदि ॐत्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्दे-
वेषु त्र्यायुषम् ॥ इति सर्वमन्त्रेण सर्वाङ्गे । अथाग्न्यभिवादनम् व्यत्यस्तपाणिभ्यां कार्य्यम् अमुकगोत्रोऽमुकवेदान्तर्गतामुकशाखाध्यायी
अमुकशर्म्मा अहं भो अग्ने त्वामभिवादये इत्यग्निमभिवाद्य ततः कर्णौ स्पृष्ट्वा व्यत्यस्तपाणिभ्यां अमुकगोत्र इत्यादि पूर्ववदभिवा-
दनवाक्यमुक्त्वा भो गुरो त्वामभिवादये इति गुरुमभिवादयेत् गुरुश्च आयुष्मान्भव सौम्यामुकशर्मन् इत्याशिषं ददाति ॥ अथ परिश्रित-
स्याग्नेरुत्तरतः कुम्भानां पुरस्तात् प्रागग्रान्कुशानास्तीर्य तेषु स्वयं स्थितो ब्रह्मचारी प्राञ्चि उदञ्चि वा कर्माणि भवन्तीतिन्यायात् दक्षिण-
स्य प्रथमत्वं सूत्रकारेणोपात्तं तस्मादित्येवं क्रमेण प्रथमादुदकुम्भादप आदत्तेऽनेन मंत्रेण ( येऽअप्स्वन्तरिति प्रजापतिर्ऋषिरतिजगती
छन्द आपो देवता अपामादाने विनियोगः ) ॐयेऽअप्स्वन्तरग्नयः प्रविष्टा गोह्यऽउपगोह्यो मयूखो मनोहाऽस्खलोविरुजस्तनूदूषिरिन्द्रि-
यहा तान्विजहामि यो रोचनस्तमिहगृह्णामि इति प्रथमोदककुम्भाद्दक्षिणचुलुकेन अपो गृहीत्वा आत्मानमभिषिञ्चति मंत्रेण (तेनेति प्रजापति-
ऋषिर्यजुश्छन्द आपो देवता अभिषेचने विनियोगः ) ॐतेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्च्चसाय इति १ अथ द्वितीयो
दककुम्भात् पूर्ववत् "येऽअप्स्वन्तरिति" जलादानम् अभिषिञ्चने तु मन्त्रविशेषः ( येनेति प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता
अभिषेचने विनि० ) ॐयेन श्रियमकृणुतां येनावमृशताꣳसुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः इति २ अथ तृतीयोदक-
कुम्भात् "येऽअप्स्वन्तरिति" पूर्ववदपो गृहीत्वा ( आपोहिष्ठेत्यादितिसृणां सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता अभिषेचने विनि-
योगः) ॐआपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन महेरणाय चक्षसे । इत्यभिषिंच्य ३ अथ चतुर्थकुम्भात् "येऽअप्स्वन्तरिति" पूर्ववज्ज-
लमादाय ॐयो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः । इतिसिञ्चेत् ४ अथ पंचमकुंभात् "येऽअप्स्वन्तरिति" पूर्व-
वज्जलमादाय ॐतस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः । इतिशिरोभिषिञ्चते ५ ततः षष्ठात् ६ सप्तमात् ७
अष्टमात् च ८ उदककुंभात् येऽअप्स्वन्तरितिमन्त्रेणापो गृहीत्वा तूष्णीं शिरोभिषेचनं कुर्यात् ततोभिषेकावशिष्टेन जलेन सहस्रधारां
शिरसि धृत्वा स्नायात् । समाख्यानात् उत्साद्य पुनः स्नात्वेति पुनः पदोपादानाच्च । अथमेखलोन्मोकः तत्र पूर्वधृतां मेखलां बटुः
मन्त्रं पठन् स्वयमेव शिरोमार्गेण निस्सारयेत् ( उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दः वरुणो देवता मेखलोन्मोके विनियोगः )
ॐउदुत्तमं वरुण पाशमस्मदवाधमम्विमध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम ॥ मेखलामुन्मुच्य दण्डं
निधायेति सूत्रात् साहचर्य्याच्च दण्डमजिनं च तूष्णीं निधाय आचामेत् । तत उपकल्पितमन्यद्वासस्तूष्णीं परिधाय आचम्य आदित्य-
मुपतिष्ठते मन्त्रेण ( उद्यन्भ्राजभृष्णुरिति प्रजापतिर्ऋषिः शक्करीछन्द आदित्यो देवता आदित्योपस्थाने वि० ) ॐउद्यन्भ्राजभृष्णुरिन्द्रो
मरुद्भिरस्थात्प्रातर्य्यावभिरस्थादश सनिरसि दशसनिं मा कुर्व्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छत
सनिरसि शतसनिं मा कुर्व्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्व्वाविद-
न्मा गमय । इतिमन्त्रेण ऊर्ध्वबाहुः सूर्य्योपस्थानं कुर्यात् । ततो दधितिलान् दक्षिणहस्तगतसोमतीर्थेन प्राश्य जटालोमनखानि संहृत्य

वपननिमित्तकं शीतलोदकेन स्नात्वा आचम्य ततः द्वादशाङ्गुल–दशाङ्गुल-अष्टाङ्गुलदीर्घेण कनिष्ठिकाग्रस्थूलेन उदुंबरकाष्ठेन ब्राह्मणक्षत्रिय-विशां क्रमेण दन्तधावनं कुर्यात् (अन्नाद्यायेत्याथर्वणऋषिरनुष्टुप्छन्दः सोमो देवता दन्तधावने विनि० ) ॐअन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥ इति तत आचम्य सुगन्धिद्रव्ययुक्तेन कटुतैलयवादिचूर्णेन शरीरोद्वर्तनं कृत्वा तप्तोदकेन सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं गृहीत्वा ग्रहवेदीसमीपमागत्य उपविश्याचम्य अनुलेपनेन हस्तावुपलिप्य नासिकयोर्मुखस्य चोपगृह्णीते मन्त्रेण ( प्राणापानाविति प्रजापतिऋषिर्यजुश्छन्दः प्राणापानादिलिङ्गोक्ता देवता चन्दनोपसंग्रहणे वि० ) ॐप्राणापानौ मे तर्पय— नासिकायां चक्षुर्मे तर्पय—चक्षुषोः श्रोत्रं मे तर्पय–श्रोत्रयोः ततः अपसव्यं विधाय पाणी प्रक्षाल्य तदवनेजनं दक्षिणाभिमुखः पितृतीर्थेन दक्षिणस्यां दिशि निषिञ्चेत् ( पितर इति प्रजापत्यश्विसरस्वतीन्द्रा ऋषयो यजुश्छन्दः पितरो देवता निषेचने वि०) ॐपितरःशुन्धध्वम् इतिपाण्योरवनेजनजलं भूमौ निषिञ्चेत् पित्र्यत्वात्सव्येनोदकस्पर्शः ॥ ततोनुलेपानन्तरं केशवादिनामभिर्द्वादश-तिलकान्धारयेत् यथा ॐकेशवाय नमः ललाटे १ॐनारायणाय नम उदरे २ॐमाधवाय नमो हृदये ३ ॐगोविन्दाय नमः कण्ठकूपके ४ॐविष्णवे नमो दक्षिणकुक्षौ ५ ॐमधुसूदनाय नमो दक्षिणबाहौ ६ ॐत्रिविक्रमाय नमः कर्णमूलयोः ७ ॐवामनाय नमो वामकुक्षौ ८ ॐश्रीधराय नमो वामबाहौ ९ ॐपद्मनाभाय नमः पृष्ठदेशे १० ॐदामोदराय नमः ककुदि ११ ॐवासुदेवाय नमो मूर्द्धिन १२ इति ललाटे वंशपत्राकृतिकं मध्यशून्यं धारयेदिति च एवं तिलकं धृत्वा जपेत् ( सुचक्षा इति प्रजापतिऋषि यजुश्छन्दः लिङ्गोक्ता देवता जपे विनि० ) ॐसुचक्षा अहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति ॥ अथोपकल्पितमहतं वासः परिधत्ते ( परिधास्य इत्याथर्वण ऋषिः पंक्तिश्छन्दो वासो देवता वासः परिधाने विनियोगः ) ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिर-स्मि शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये । अथोत्तरीयम् ( यशसामेत्याथर्वणऋषिः पंक्तिश्छन्दो लिङ्गोक्ता देवता उत्तरीयपरिधाने वि० ) ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च माऽविन्दद्यशो मा प्रतिपद्यताम् ॥ इति एक एव वासश्चेत्तदा पूर्वोत्तरेणाच्छादयेत् । ततो द्विराचम्य द्वितीययज्ञोपवीतधारणं कुर्यात् ब्रह्म चारिण एकं तु स्नातकस्य द्वे बहूनि वेति वचनात् । तत आचम्य मालारूपाः सुमनसो गृह्णाति ( या आहरदिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पमालाग्रहणे वि० ) ॐयाऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय ता अहं प्रतिगृह्णामि यशसा च भगेन च । अथावध्नीते ( यद्यशोप्सरसामिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पमालाबन्धनेवि० ) ॐयद्यशोऽप्सरसामि-न्द्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनस आवध्नामि यशो मयि । अथोष्णीषेण शिरो वेष्टयते ( युवा सुवासा इति अंगिराऋषि-र्बृहतीछन्दो बृहस्पतिर्देवता शिरोवेष्टने वि०)ॐयुवा सुवासाः परिवीतऽआगात्स उ श्रेयान् भवति जायमानः । तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ ततोन्यान्यपि कञ्चुकादीनि वासांसि परिधाय कर्णवेष्टकौ परिधत्ते ( अलंकरणमिति प्रजापतिर्ऋषिः यजु-श्छन्द अलंकरणं दैवतं अलंकरणे विनियोगः ) ॐअलङ्करणमसि भूयोऽलङ्करणं भूयात् । मन्त्रेण कुण्डले कर्णयोर्ददाति ॥ अथाक्षिणी अञ्जनेनांक्ते ( वृत्रस्येति प्रजापतिर्ऋषिर्यजुश्छन्दः अञ्जनं देवता अक्ष्यञ्जने वि० ) ॐवृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि ॥

तत आत्मानमादर्शे प्रेक्षते (रोचिष्णुरिति प्रजापतिर्ऋषिर्यजुःश्छन्द आदर्शो देवता आदर्शप्रेक्षणे विनियोगः) ॐरोचिष्णुरसि ॥ ततश्छत्रं
द० प० प्रतिगृह्णाति (बृहस्पतेश्छदिरिति गौतमऋषिर्बृहतीछन्दः छत्रं देवता छत्रग्रहणेवि०) ॐबृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो समाव०
मान्तर्द्धेहि ॥ तत उपानहौ युगपत्प्रतिमुञ्चते ( प्रतिष्ठे स्थ इति जमदग्निर्ऋषिर्विराट्छन्दो लिंगोक्ता देवता उपानत्प्रतिमोके वि०)
ॐप्रतिष्ठे स्थो विश्वतो मा पातम् ॥ ततो वैणवं दंडमादत्ते (विश्वाभ्य इति याज्ञवल्क्यऋषिर्यजुश्छन्दो दंडो देवता दण्डग्रहणे विनियोगः)
ॐविश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्व्वतः । इति मंत्रेण दण्डग्रहणं कुर्यात् । अत्र मातृपूजनादिपूर्णपात्रदानांतं आचार्य्यस्य कृत्यम् ।
अष्टकलशाभिषेकादिदण्डग्रहणान्तं स्नातकस्य बटोः कृत्यम् । वासश्छत्रोपानद्दण्डव्यतिरिक्तानि दन्तधावनादीनि मंत्रवन्ति सदा कुर्यात्
वासःप्रभृतीनि तु नूतनान्येव मंत्रवंति धारयेत् । तत आचार्यं सम्पूज्य वरं दद्यात् गौर्ब्राह्मणस्य वरमुच्यते संकल्पः अद्येहामुकोहं मम
स्नातकत्वसिद्ध्यै कृतस्य समावर्त्तनकर्मणः सांगतासिद्ध्यर्थं साद्गुण्यार्थम् इमां गां गोनिष्क्रयीभूतं सुवर्णं वा वररूपेण आचार्याय तुभ्यं
संप्रददे ॐतत्सत् इति दत्वा तत आचार्यमुखात् स्नातको नियमान् शृणुयात् । स्नातस्य नियमान्वक्ष्यामः इतिसूत्रम् नृत्यगीतवादित्राणि
न कुर्यात्–नृत्यं तालाद्यनुकार्य्यंगविक्षेपः गीतं तालोपनिबद्धषड्जादिस्वरविशेषरागध्वनिः वादित्रं तालाद्यनुकारिचतुर्विधम् , एतानि स्वयं
न कुर्यात् नृत्यादिप्रयुक्तानन्यान् द्रष्टुं च न गच्छेत् । क्षेमे रात्रौ ग्रामान्तरं न गच्छेत् क्षेमे राजादिभयराहित्ये सति रात्रौ ग्रामाद् ग्रामा-
न्तरं न गच्छेत् न च धावेत् । उदपानावेक्षण-वृक्षारोहण-फलप्रपतन-सन्धिसर्पण विवृतस्नान-विषमलंघन–शुक्तवचन–संध्यादित्यप्रेक्षण–
भिक्षणानि न कुर्यात् अस्यार्थः उदपानं कूपादि तस्योपरिस्थित्वा कौतुकादिना अधोमुखो भूत्वा अवेक्षणं दर्शनं न कुर्यात् वृक्षारोहणं शिखरा-
द्यारोहणं फलप्रपतनं वृथाऽपक्वफलत्रोटनम् संधिसर्पणं संधिः कुद्वारं जीर्णद्वारं तेन सर्पणं गमनं न कुर्यात् । यद्वा संध्यासु संध्यामनु-
पास्य सर्पणमध्वगमनं न कुर्यात् अथवा अनुरक्तयोः पुत्रजनकयोः मित्रयोः दंपत्योः भ्रात्रोर्वा ऐक्यं संधिः तत्र भेदाय मध्ये गमनं न
कार्य्यम् विवृतस्नानं नग्नस्नानं विषमलंघनं गर्त्तादेर्लंघनं शुक्तवचनं लज्जाकरामङ्गलकरदुःखकरेति त्रिविधं निष्ठुरवाक्यं सन्ध्यादित्य-
प्रेक्षणं त्रिषु संध्यासु आदित्यावलोकनं तदुक्तं नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कथंचन । नोपरक्तं न वारिस्थं न मध्ये नभसोगतमिति ॥
भिक्षणं सिद्धान्नयाचनम् एतानि क्षेमे सति न कुर्यात् । वर्षत्यप्रावृतो व्रजेत् देवे इन्द्रे वर्षति सति सूर्ये तपति सति अप्रावृतः अना-
च्छादितःसन् ( अयमिति प्रजापतिर्ऋषिर्जगतीछन्दः वज्रो देवता वृष्टिजपे विनियोगः) ॐअयम्मे वज्रः पाप्मानमपहनत् । इमं मंत्रं
पठन् व्रजेत् गच्छेत् । अप्स्वात्मानं न वीक्षेत अप्सु जलेषु आत्मानं प्रतिबिंबितं मुखं न पश्येत् तच्च तैलादिष्वप्युपलक्षणं घृते तु
छायादर्शनं कर्त्तव्यमेव । आजातलोम्नीं त्रिपुंसीं षण्ढं च नोपहसेत् अजातलोम्नीं भ्रूनेत्रादिस्थाने रोमरहितां विपुंसीं पुरुषचिह्नश्म-
श्र्वादियुक्तां स्त्रियं नोपहसेत् न च गच्छेत् षंढं नपुंसकं च नोपहसेत् दोषाधिक्यायैतत् । नगच्छेद्गुर्विणीं षण्मासोपरि सद्यःप्रसूतां रजस्वलां
निवृत्तरजस्कां वृद्धां च नोपगच्छेत् । विजन्यैति गुर्विणीं प्रतिब्रूयात् सकुलमिति नकुलं ब्रूयात् कपालं कर्परं मनुष्यादिशिरः भगालमिति
ब्रूयात् इन्द्रधनुर्मणिधनुरिति ब्रूयात् । गां धयन्तीं परस्मै नाचक्षीत स्ववत्सं पाययन्तीं गां गौस्ते पाययति वत्समिति परस्मै न वदेत् ।
उर्वरायां सस्यवत्यां भूमौ उत्सर्पन् गच्छन् तिष्ठन् मूत्रपुरीषे न कुर्यात् । एतच्च फालकृष्टभूमिमार्गजीर्णदेवायतनप्राणिगर्त्तादीनामप्युप-

लक्षणार्थम् । स्वयं प्रशीर्णेन त्रुटितेन अयज्ञीयेन काष्ठेन गुदं प्रमृजीत तच्च लोष्ठादीनामप्युपलक्षणम् । विकृतं वासो स्मृतिशिष्टाचाराभ्यां विरुद्धं नील्यादिरक्तवासो न परिदधीतेत्यर्थः । पालाशादिपुष्परक्तं काषायं वासस्तु परिदध्यादेव उपनिषद्वद्धं चैतत् काषायस्य प्राशस्त्यात् । दृढव्रतो वधत्रः स्यात् दृढं स्थिरं प्रारब्धं कर्म्म यस्य असमाप्तकर्मा न स्यादित्यर्थः । वधात् घात त् आत्मानं त्रायते इति वधत्रः तच्च शृङ्गिनखिदंष्ट्रिभ्यः सम्भवति तेभ्यो रक्षां कुर्वीतेत्यर्थः । सर्व्वत आत्मानं गोपायेत् सर्वेषां स्वेषां परेषां वा मित्रमिव भूयात् मैत्रो ब्राह्मण उच्यते इति स्मरणात् इतिसाधारणशिक्षानियमाः ॥ अथ समावर्त्तनानन्तरं त्रिरात्रनियमाः अमांसाशी भवेत् मांसं न भक्षयेत् अमृण्मयपायी मृण्मयेन पात्रेण जलं न पिबेत् एतच्चालाबुतुंब्यादीनामुपलक्षणम् । स्त्रीशूद्रशवकृष्णशकुनिशुनामदर्शनमसंभाषणं च स्त्री नारी शूद्रश्चतुर्थो वर्णः शवो मृतकः कृष्णशकुनिः काकः श्वा कुक्कुरः एतेषां दर्शनं भाषणं च त्रिरात्रं वर्जयेत् । शवशूद्रसूतकान्नानि नाद्यात् शवान्नं मृतसूतकान्नं शूद्रान्नं सूतकान्नं जाताशौचकान्नं च नाद्यात् । मूत्रपुरीषष्ठीवनानि आतपे सूर्यसंमुखे न कुर्यात् । सूर्याच्चात्मानं नांतर्दधीत छत्रवस्त्रादिना आत्मानं शरीरं न गोपायेत् । तप्तोदकेनार्थान्कुर्व्वीत शौचादीन् तप्तजलेन कुर्यादित्यर्थः । अवज्योत्य रात्रौ भोजनं कुर्यात् दीपादि प्रज्वलय्य भोजनं कुर्यान्नान्धकार इत्यर्थः । सत्यमेव वचनं वदेत् अनृतं मिथ्याभाषणं न कुर्यात् । एवं शिक्षयित्वा एतान्नियमान्करिष्यामीति वटुमवधार्य आचार्यः एनं वटुं स्वपादयोः पातयित्वा पूर्णाहुतिं जुहुयात् । ततः स्नातकः आचार्यं संपूज्य उत्तराङ्गत्वेन नवग्रहाणां पूजनं कुर्यात् ग्रहवेदीसमीपमागत्य आसन उपविश्याचम्य संकल्पं कुर्यात् ॐविष्णुः ३ अद्येहेत्यादि अमुकोहम् अमुकस्य वटोः कृतानां चूडोपनयनवेदारम्भसमावर्त्तनकर्म्मणां उत्तरांगत्वेन आदित्यादिनवग्रहाणां पूजनं करिष्ये ततः आदित्याय नमः इत्यादिनाममंत्रैः पाद्यादिनीराजनान्तं संपूज्य ब्रह्मामुराररिति संप्रार्थ्य प्रतिमादानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं अमुकराशेःपुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्मणां सांगफलप्राप्तये साद्गुण्यार्थम् इमाः सुपूजिताः सौवर्णीः आदित्यादिनवग्रहप्रतिमाः वस्त्रच्छन्नाः ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत्कृतैतत्प्रतिमादानप्रतिष्ठासिद्ध्यर्थम् इदं द्रव्यं च ब्राह्मणेभ्यो विभज्य दास्ये इति संकल्प्य आकृष्णेनेति पद्मासनः पद्मकरो द्विबाहुरित्यादि वैदिकपौराणिकमंत्राभ्यां सर्वेषां प्रतिमाः पृथक्पृथक् दत्वा अन्येभ्योपि जापकपाठकेभ्यो दक्षिणां दद्यात् । ततो भूयसीं संकल्पयेत् अद्येहेत्यादि अमुकोहममुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्मणां न्यूनातिरिक्तपरिपूर्त्यर्थं साद्गुण्यार्थम् इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये तथा एतत्कर्मणःसाङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं यथोपपन्नेन सिद्धान्नेनामान्नेन वा यथासंख्याकान् ब्राह्मणान्भोजयिष्ये इति संकल्प्य नवग्रहादीनां विसर्जनम् मन्त्रः ॐउत्तावेतं धूर्षाहौ युज्येथामनश्रूऽअवीरहणौ ब्रह्मचोदनौ स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर इति ॥ अथ कर्म्मसर्वाङ्गपूर्त्यै ॐतत्सत् यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐअच्युताय नमः ३ प्रमादात्कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐविष्णवे नमः ३ ब्राह्मणेभ्यो दक्षिणां दत्वा अभिषेकतिलकरक्षाबन्धनघृतच्छायामंत्रपाठादि कारयित्वा ततः मङ्गलतूर्य्यशंख-

घंटादिवादिते बहिःशालातः शिविकादियानेन स्वस्तिवाचनं पठन् गृहबहिर्द्वारे लिखिताः "कुमारी धनदा नन्दा विपुला मङ्गलाऽचला। पद्मा चैव समाख्याता सप्तता द्वारमातरः।" इत्युक्ता द्वारमातृः यथामिलितोपचारैः सम्पूज्य दध्यादिमंगलवस्तुहस्ताभ्यो भगिन्यादिभ्यो यथाशक्ति द्रव्यं दत्वा। गृहं गत्वा जीवमातृणां पूजनं कुर्यात् यथा सुमुखश्चेत्यादि पठित्वा आसन उपविश्याचम्य अर्घ्यं संस्थाप्य पूजासंकल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्म्मणां उत्तराङ्गत्वेन गृहप्रवेशकर्म्मणि सर्वाभ्युदयप्राप्तये भित्तिलिखितानां कल्याण्यादिसप्तजीवमातृणां यथामिलितोपचारैः पूजनं करिष्ये। एतन्त इत्यादि ॐभूर्भुवः स्वः कल्याण्यादिसप्तजीवमातर इहागच्छन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ध्यानम् कल्याणी मंगला भद्रा पुण्या पुण्यमुखी तथा। जया च विजया चैव सप्तैता जीवमातरः॥ इति ध्यात्वा नाममंत्रेण पाद्यादिनीराजनान्तं सम्पूज्य वसोर्धाराः पातयित्वा ब्रह्माणी कमलेन्दुसौम्यवदनेति पुष्पाञ्जलिं समर्प्य दक्षिणासंकल्पः अद्येहामुकोहं एतत्कर्म्मणः उत्तरांगत्वेन जीवमातृणां पूजनकर्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् इति दद्यात् तत आचारान्मातृभगिन्यादिभिर्वटोः महानीराजनम् तिलकादि च कार्य्यम्। ततो ब्राह्मणान्भोजयित्वा इष्टबन्धुभिः सह भुञ्जीत यथासुखं विहरेत्॥ इति चूडोपनयनवेदारम्भसमावर्त्तनपद्धतिः॥

## अथ विवाहपद्धतिः

विवाहानुक्रमश्लोकाः—अग्निप्रणयनं वस्त्रपरिधानं समञ्जनम्। गोत्रोच्चारो वरस्य प्राक्कन्यायाश्च ततोऽर्चणम् १ कन्यादानप्रतिष्ठार्थं सुवर्णं गौश्च दक्षिणा। गृहान्निष्क्रमणं चाग्निसमीपगमनं ततः २ कन्यापितुः प्रेषदानं समीक्षेथामिति स्फुटम्। अग्निं प्रदक्षिणीकृत्योपविश्य कुशकण्डिका ३ होमे वधूर्दक्षिणतो हृदालंभे तु वामतः। उपवेश्य वरश्चैनां स्विष्टकृद्धोममाचरेत् ४ संस्रवप्राशनं पूर्णपात्रमाचार्यदक्षिणा। विवाहानुक्रमश्लोकाः शितिकण्ठमुखोदिताः ५॥ ततो वैवाहिकाहात्पूर्वम् अनवमे अषष्ठेऽतृतीये दिवसे संस्कार्यायाः कन्यायाः संस्कार्यस्य पुत्रस्य च पित्रादिः सर्वारम्भं कुर्यात्। आचारात् चुल्लीनिर्माणाय पुरन्ध्रीद्वारा मृत्स्नामानाय्य संशोध्य तस्यांस्त्रिशृङ्गां चुल्लीं सद्रव्यां निर्म्माय गोमयेनोपलिप्य तण्डुलपिष्टोदकेनोपलिख्य सर्वारम्भलग्नात्प्राक् सुगन्धिस्वच्छतैलहरिद्रासिद्धार्थकल्काद्युद्वर्त्तनपूर्वकं कोष्णशीतोदकाभ्यां वितानाधः पित्तलादिपात्रस्थपिष्टातकलिखितपीठे वरं कन्यां वा संस्थाप्य संस्नाप्य धौतानि वासांसि परिधाप्य स्वसमीपमानाय्य स्वासने समुपवेश्य आचम्य गणेशपूजनं कुर्यात्। तत्र संकल्पः अद्येहामुकोहं अमुकराशेः कन्यायाः पुत्रस्य वा करिष्यमाणविवाहसंस्कारकर्म्मणः सर्वारम्भकर्म्मणि निर्विघ्नतया कार्यसिद्धये भगवतो गणेश्वरस्य पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं सम्पूज्य (पृ०१-३) आचारात्सद्रव्यास्तिस्रो वस्त्रखण्डपोटलिकाः कृत्वा एकां चुल्ल्यां एकां ताम्रकटाहे एकां ताम्रदर्व्यां च बद्ध्वा कटाहे वस्त्रपूतं सुगन्धि सुरभ्यादिघृतं निक्षिप्य अपटच्चराः अकृत्याज्ञाः अनेडमूकाः अकच्चराः अरुग्णाः अलोलुपाः शिल्पज्ञा पुरन्ध्रीरानाय्य तद्द्वारा पिष्टातकस्वस्तिकांकितधौतगोधूमचूर्णसोहालिकादिपाकारम्भं कृत्वा तत्रैव वरकन्यार्हवस्त्रसीवनाद्यारम्भं

कारयेत् ॥ अथपूर्वाङ्गविधिः ॥ विवाहदिनात्पूर्वदिने तस्मिन्नेव दिने वा पित्रादिः पत्न्या सह कृताभ्यंगस्नानः अहतोष्णीषादिसितवासाः शुभासने प्राङ्मुख उपविश्याचम्य पत्नीसहितं संस्कार्यमपत्यं चोपवेश्य गणेशमुक्तविधिना सम्पूज्य यावन्मातृविसर्जनस्थाय्यखण्डदीपं प्रज्वलयेत् । एतद्दीपस्य च वर्तिः कन्यादेहप्रमाणेन सप्तविंशति तन्तुभिर्निर्मीयते । तत्रसंकल्पः––अद्येहाऽमुकोहं मम कन्यायाः साङ्ग-विवाहकर्मणि अन्तरिक्षचारिभूतादिविघ्ननिरासार्थम् एतत्कालमारभ्य मातृविसर्जनपर्य्यन्तमखण्डदीपं देवसन्निधौ स्थापयिष्ये । दीप-प्रार्थना––दीपस्त्वं देहि कल्याणं देहि सर्वान्मनोरथान् । यावद्व्रतं समाप्येत तावत्त्वं सुस्थिरो भव ॥ इति ततः प्रधानसंकल्पं कुर्यात् अर्घ्यं संस्थाप्य अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्म्माहम् अमुकराशेरस्याः कन्यायाः बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वर-प्रीत्यर्थं भर्त्रा सह धर्म्यप्रजोत्पादनगृह्यपरिग्रहेष्वधिकारसिद्धये, पुत्रपक्षे अमुकराशेरस्य पुत्रस्य पत्न्या सह धर्म्यप्रजोत्पादनपूर्वकसकल-गार्हस्थ्यसिद्धये विवाहाख्यसंस्कारं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजां नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये इत्यादि संकल्प्य मातृपूजाभ्यु-दयिकपुण्याहवाचनानि (पृ० ३-८) विधाय सति सम्भवे ग्रहयागं कुर्यात् तदसम्भवे तु कलशस्थापनं कृत्वा (पृ० ८) तत्र नवग्रहा-नावाह्य सम्पूज्य लेख्ये चन्दनादिना लिखतयोर्गौरीहरयोः पूजनं कन्याहस्तेन कारयेत् संकल्पः अद्येहेत्यादि. अमुकराशिरमुकी अहं सर्व-सौभाग्यसमृद्धये विवाहकर्म्मणः पूर्वाङ्गत्वेन लेख्ये गौरीहरयोः पूजनं करिष्ये एतंत इति ॐभूर्भुवःस्वः गौरीहरौ सुप्रतिष्ठितौ वरदौ भवतम् ध्यानम् सिंहासनस्थां देवेशीं सर्वालंकारसंयुताम् । पीतांबरयुगं देवं चन्द्रार्द्धकृतशेखरम् १ करेणाधः सुधापूर्णं कलशं दक्षिणेन तु । वरदं चाभयं वामेनाश्लिष्य च तनुप्रियाम् २ एवं ध्यात्वा पूज्यमंत्रैः पुण्यभाजस्तथा स्त्रियः ॥ पूजामंत्रः गौरीहर महेशान सर्वमंगलदायक । पूजां गृहाण देवेश सर्वदा मंगलं कुरु ॥ इति मंत्रेण पाद्यादिनीराजनांतं संपूज्य, कन्यादेहप्रमाणेन सप्तत्रिंशतितंतुभिः । वर्त्तिकां दीपये-त्पश्चाद्व्रतसम्पत्तिहतवे ॥ एवं वर्त्तिकांप्रज्वाल्य इति केचित् । सम्प्रार्थ्य भोजनीया ब्राह्मणाश्च सुवासिन्यः सुपूजिताः । दशाष्टपञ्चयुग्मं वा हिरण्येनाथ तोषयेत् ॥ अत्र कात्यायनीमहालक्ष्मीइंद्राणीपूजनमपि कार्य्यम् ततः कन्याहस्ते कंकणं बध्नीयात् तिलकाद्याशिषं च दद्यात् इतिकन्यापक्षे पूर्वाङ्गविधिः ॥ अथ वरपक्षे ॥ वरपिता विवाहात्पूर्वदिने तद्दिने वा नित्यं कर्म्म वैश्वदेवांतं कृत्वा शुचिः शुक्लवासाः वरम्-अभ्यङ्गपूर्वकं मङ्गलद्रव्यैः संस्नाप्य शुभासने प्राङ्मुख उपविश्याचम्य अर्घस्थापनं विधाय प्राणानायम्य देशकालस्मरणांते अमुकोहं अमुकराशेरस्य पुत्रस्य विवाहकर्मणि निर्विघ्नतया कार्यसिद्धये पूर्वाङ्गत्वेन श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति यथाविधि गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि देशकालकीर्त्तनांते अमुकगोत्रोऽमुकराशिरमुकशर्म्मा सपत्नीकोहं अमुकराशेरस्य पुत्रस्य देवपितृमनुष्यर्णापाकरणहेतुधर्म्यप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वरप्रीतये विवाहाख्यं संस्कारं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्ध-पुण्याहवाचनानि करिष्ये इतिमातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय ( पृ० ३-८ ) कलशं संस्थाप्य तत्र ब्रह्मवरुणसहिता-नादित्यादिग्रहानावाह्य (पृ० ८) संपूज्य रक्षाविधानेन (पृ० ९) कंकणमभिमंत्र्य प्रतिष्ठाप्य वरहस्ते तन्मातृहस्ते च बध्वा सुरक्षितं कुर्यात् चतुर्थीकर्मदिवसे मोचयेत् । कंकणौषधयश्च––दूर्वा यवांकुराश्चैव वालकं चूतपल्लवाः । हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ॥ कंकणौष-धयश्चैताः कौतुकाख्या नव स्मृताः ॥ [ ततो ब्राह्मणान्भोजनदक्षिणादिभिः संतोष्य तत एकं ज्योतिर्विदं सुशीलं मङ्गलादिद्रव्यसहित-

घटिकापात्रयुतं पुरुषं विवाहलग्ननिश्चयार्थं कन्यापितृगृहं प्रति प्रथमं प्रेषयेत् ततो वरं सात्विकाहारैर्भोजयित्वा नेदिष्टे वधूगृहे दिवाविवाहलग्ने अभोजयित्वा सर्वां विवाहसामग्रीमुपकल्पयित्वा वरं रक्ततूलकंचुकोष्णीषकटिवेष्टोत्तरीयकुण्डलग्रैवेयकाद्यलंकारैर्मुकुटादिभिश्चालंकृत्य शिविकादियानमारोहयित्वा उपकल्पितां सर्वां विवाहसामग्रीमग्रतःकृत्वा वस्त्रालंकाराभिभूषितमुदितबान्धवासयुतः सपुरोहितादिद्विजो मङ्गलतूर्य्यघोषेण कन्यापितृगृहं व्रजेत् । अथ कन्यापिता मार्गागतं वरं श्रुत्वा उपकल्पितां वरपूजासामग्रीं स्वविधे आनाय्य सुलिप्तायां भुवि समुपविश्य त्रिराचम्य प्राणानायम्य सति सम्भवे कलशविधिना कलशं संस्थाप्य तत्र ग्रहानावाह्य संम्पूज्य वरागमनं प्रतीक्षेत ॥ अथ वरस्य पिता मार्गागतस्य वरस्य जनतादिवृत्तांतनिवेदनार्थं सफलदधिपात्रसहितं सौम्यवेशं मनुष्यद्वयं वराभ्यंगावशिष्टहरिद्रारंजिततैलकुपकंकतिकापट्टसूत्रहस्तं नापितादिकं च प्रेषयति । ततः कन्यापितापि तत्प्रेषितं गृहीत्वा मनुष्ययोर्मनुष्याणां वा अर्चां कृत्वा यथाशक्ति तद्योग्यं द्रव्यं दत्वा सुभोज्येन भोजयित्वा स्वयमपि स्वीयमाप्तं मनुष्यद्वयं फलसहितं वरस्य शीघ्रमाकारणार्थं प्रेषयति । ततः कन्यापिता निजमंदिराददूरागतं समाजमध्यस्थितं वरं विलोक्य जनतया सह वरमानेतुं कतिचित्पदानि गत्वा द्वारमानाय्य द्वारे यथाशक्ति वराध्युषितयानं वोढ्वा वरं यानादुत्तार्य्य वरहस्तात् श्रीफलादि सादरं गृहीत्वा स्वानीय स्वस्तिकादिशोभितायां भद्रासनायां शुद्धायां भूमौ स्वासने प्राङ्मुखमुपवेश्य स्वयमुदङ्मुख उपविशेत् ] आचम्य प्राणानायम्य आचार्यस्य पादप्रक्षालनार्थं पात्रयुग्मं प्रयच्छति आपद्धनध्वांतसहस्रभानवः समीहितार्थार्पणकामधेनवः । अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ इत्याचार्यपादौ प्रक्षाल्य इत्थमेव वरपादौ प्रक्षालयेत् । अर्घ्यं संस्थाप्य प्रथमं वाग्दानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकराशिरमुकशर्म्माहं करिष्यमाणकन्यादानांगत्वेन वाग्दानं करिष्ये इति संकल्प्य कुंकुमाक्तानि पञ्च पूगीफलान्यादाय अमुकगोत्रोऽमुकप्रवरोऽमुकवेदांतर्गतामुकशाखाध्यायी अमुकशर्म्माहं अमुकगोत्रस्यामुकशर्म्मणः प्रपौत्राय अमुकशर्म्मणः पौत्राय अमुकशर्म्मणः पुत्राय अमुकशर्म्मणे विष्णुस्वरूपिणे कन्यार्थिने वराय अमुकगोत्रस्यामुकप्रवरस्यामुकवेदान्तर्गतामुकशाखाध्यायिनोऽमुकशर्म्मणः प्रपौत्रीम् अमुकशर्म्मणः पौत्रीम् अमुकशर्म्मणः पुत्रीम् अमुकनाम्नीं श्रीरूपिणीं वरार्थिनीं कन्यां ज्योतिर्विदादिष्टे मुहूर्त्ते तुभ्यं दास्ये तत्प्रतिग्रहार्थं एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यभूषणाद्युपचारैस्त्वामहं वृणे । वृतोस्मीति प्रत्युक्तिः । इतिवाग्दानम् । ततः पुनरर्घ्यं संस्थाप्य वरणसंकल्पं कुर्यात् अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं करिष्यमाणकन्यादानप्रतिग्रहार्थं द्वारदेशागतस्य वरस्य पूजनपूर्वकं वरणं करिष्ये तत्पूर्वाङ्गत्वेन वरकन्ययोः पाणिग्रहणकर्म्मणि आचार्यकर्म्म कर्त्तुं आचार्यस्य पूजनं वरणं च करिष्ये प्रथमं आचार्याय भूमिदेवाग्रेतिमंत्रेण अर्घं दत्वा गन्धद्वारामिति गन्धं दत्वा ॐनमोस्त्वनंतायेति अक्षतपुष्पमालादिभिः सम्पूज्य सम्पादिताष्टाङ्गेनार्घ्येण आचार्यसम्मुखः अर्घोर्घोर्घः प्रतिगृह्यताम् ॐ अर्हं प्रतिगृह्णामीत्याचार्यः प्रतिब्रूयात् । ततः कन्यापिता वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलयज्ञोपवीतद्रव्यवासोलंकरणपुष्पमालाभिर्वरकन्ययोर्विवाहकर्म्मणि आचार्यकर्म कर्त्तुं आचार्यत्वेन त्वामहं वृणे आचार्यश्च तत्प्रतिगृह्य वृतोस्मीति प्रतिब्रूयात् । आचार्यस्तु यथा स्वर्गे इति सम्प्रार्थ्य पुनरर्घ्यं दद्यात् ॐ अर्घोर्घोर्घः प्रतिगृह्यताम् अर्हं प्रतिगृह्णामि इति ततः कन्यापिता सम्पादितमष्टांगमर्घं हस्तयोः कृत्वा उत्थाय वराचार्याभि-

सुखस्तिष्ठेत् तत आचार्यप्रमुखाः वरशाखीयमेनं मंत्रं यथाश्रुतमुच्चैः पठेयुः ॐअथ वरं वृणीते बलवद्ध वै देवाऽएतस्य ग्रहस्य होमं प्रेप्संति तेऽस्माऽएतं वरꣳसमर्द्धयंति क्षिप्रे नऽइमं ग्रहं जुहवदिति तस्माद्वरं वृणीते १ ॐअथ वरं वृणीते यꣳह वै कश्च सुषुवाणो वरं वृणीते सोऽस्मै सर्वः समृद्द्ध्यते तस्माद्वरं वृणीते २ अथ वाराह्याऽउपानहाऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुः ततो वराहः संबभूव तस्माद्वराहो मेदुरो घृताद्धि संभूतस्तस्माद्वराहे गावः सञ्जानते स्वमेवैतद्रसमभिसञ्जानते । तत्पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते ३ सऽआजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास तस्माऽआसनमाहार्योदकमाहारयाञ्चकाराथहास्माऽ अर्घ्यञ्चकार ४ स होवाच वरं भवते गौतमाय दद्म इति । स होवाच प्रतिज्ञातो मऽएष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ५ स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ६ स होवाच विज्ञायते हास्ति हिरण्यस्यपात्तं गोऽअश्वानां दासीनां प्रवाराणां परिधानानां मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो ऽभूदिति स वै गौतम तीर्थेनेच्छासाऽइत्युपैम्यहम्भवन्तमिति वाचा ह स्मैव पूर्व्वऽउपयन्ति ७ स होवायनकीर्त्याऽउवाच ४ इतिपठितवते वराय अष्टाङ्गमर्घं निवेदयेत् यथा अद्भिःक्षीरैःकुशाग्रैश्च दध्ना बदरतण्डुलैः । यवैः सिद्धार्थकैश्चैव अष्टाङ्गोर्घः प्रकीर्तितः ॥ अष्टाङ्गानि तु नाभौ हस्ते प्रदातव्यं स्कन्धे शिरसि पादयोः । जानुनोरुदरे वक्त्रे अष्टाङ्गोर्घः प्रकीर्तितः । अर्घदानमंत्रः आगतोसि वरश्रेष्ठ सर्वकामार्थसिद्धये । प्रतिग्रहसमर्थोसि अर्घं गृह्ण नमोस्तु ते ॥ ॐअसौ यस्ताम्रोऽअरुणऽ उत बभ्रुः सुमङ्गलः ये चैनꣳरुद्राऽअभितो दिक्षु श्रिताः सहस्रशो वषाꣳ हेडऽईमहे १ असौ योऽवसर्पति नीलग्रीवो विलोहितः उतैनङ्गोपाऽ अदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टो मृडयाति नः २ एवमर्घं दत्वा नमोस्त्वनन्तायेति गन्धाक्षतपुष्पमालादिभिर्वरं सम्पूज्य वरणसामग्रीं हस्ते गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतताम्बूलपादुकोपानहपुष्पमालोष्णीषकंचुककटिवेष्टोपसंव्यान-हस्तभूषणकर्णवेष्टकवरमुद्रिकादिभिः करिष्यमाणकन्यादानप्रतिग्रहार्थम् अमुकगोत्रम् अमुकप्रवरम् अमुकशाखिनम् अमुकवेदाध्यायिनम् अमुकशर्माणं विष्णुस्वरूपिणं कन्यार्थिनं वरं वरत्वेन त्वामहं वृणे । वृतोस्मीति वरः प्रतिवदेत् । ततो वरः वस्त्रयज्ञोपवीतभूषणपुष्पमाला-वरमुद्रिकाधारणं विधाय सुचक्षामंत्रं जपेत् ॐसुचक्षाऽअहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम् ॥ इति तत आचार्यः वरश्च उत्थाय यजमानाय तिलकाशीर्दानादिकं कुर्याताम् मंत्राश्च ॐअग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयऽआयुर्दात्रऽ एधि मयो मह्यं प्रतिग्रहीत्रे १ ॐरुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे २ ॐबृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे ३ ॐयमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय हयो दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे ४ ॐकोऽदात्कस्माऽअदात्कामोऽदात्कामायादात्कामो दाता कामःप्रतिग्रहीता कामैतत्ते । इति मंत्राशिषं प्रतिगृह्य कन्यापिता दास्यादिभिःसुवासिनीभिर्वरस्य महानीराजनं कारयेत् ॥ इतिधूल्यर्घविधिः ॥ तत उभयपक्षीया वाद्यपुरस्सरं स्वस्तिवाचनं पठंतो विवाहशालायां प्रविशेयुः ततः कन्यापिता वरं पांडुकंबलास्तृतस्थाने समुपवेश्य वराचार्ययोस्तिलकं कृत्वा सत्यवसरे वरपित्रादीनामन्येषां नेदिष्टबान्धवानां च तिलकमालादिभिः पूजनं विधाय सुखोपविष्टान्कुर्यात् ततः प्राङ्मुखं वरं पश्चिमाभिमुखीं कन्यां समुपवेश्य स्वयं दाता उदङ्मुखो भूत्वा अपेक्षितां विवाहसामग्रीं यथास्थानमासाद्य रक्तकम्बलादिना अन्तर्पटं विधाय स्वासन उपविश्य

मधुपर्केण वरमर्चयेत् । दीपं प्रज्वलय्य आचम्य अर्घं संस्थाप्य प्राणायामं कृत्वा अद्येहेत्यादि संकीर्त्य अमुकराशिरमुकशर्माहं कन्यादानप्रतिग्रहार्थं गृहागतं स्नातकं वरं मधुपर्केणार्चयिष्ये । तथा वरोपि अर्घं संस्थाप्य अमुकराशिरमुकशर्माहं धर्मप्रजावृद्ध्यर्थं यजुःशाखोक्तविधिना विवाहकर्म करिष्ये इति संकल्प्य मधुपर्कं गृह्णीयात् मधुपर्कविधिस्तु वरशाखोक्तः कार्य्यः तत्र पारस्करसूत्रम्—यःस्वशाखां परित्यज्य परशाखां समाश्रयेत् । दुर्मेधाः स तु विज्ञेयो मोघं तत्तस्य चेष्टितम् ॥ षडर्घ्या भवंत्याचार्य्यो ऋत्विक् वैवाह्यो राजा प्रियः स्नातक इति । एतान्प्रतिसंवत्सरागतानर्हयेयुः यक्ष्यमाणास्त्वृत्विजः इति ॥ अथ यजमानः पीठासनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवंतमिति । ॐअर्चय इति वरस्योक्तिः ततोर्चकपुरुषाः विष्टरद्वयं पाद्यं ( पादार्थमुदकं ) अर्घम् आचमनीयं मधुपर्कं ( दधिमधुघृतं ) अपिहितं कांस्येन न्यस्तं कांस्ये तत्समीपमानयंति । अथ यजमान एकं विष्टरमादाय तिष्ठति यजमानपत्नीयोऽन्यःकश्चिद्ब्राह्मणो विष्टरो विष्टरो विष्टरः इति त्रिःश्रावयति प्रतिगृह्यतामिति सकृदुक्त्वा यजमानो वरस्य हस्तयोर्ददाति वरश्च प्रतिगृह्णामीत्युक्त्वा उदगग्रं विष्टरं तूष्णीमादाय ( वर्ष्मोऽस्मीत्याथर्वणऋषिरनुष्टुप्छन्दो विष्टरो देवता उपवेशने विनियोगः ) ॐवर्ष्मो स्मि समानानामुद्यतामिव सूर्य्यः इमं तमभितिष्ठामि यो मा कश्चाभिदासति । अनेन मंत्रेण विष्टरमुदगग्रमासने निधाय तदुपरि उपविशति ततः पाद्यम् ३ प्रतिगृह्यतामिति त्रिः श्राविते वरः प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्य तत्पात्रं भूमौ निधायाञ्जलिना जलमादाय दक्षिणं पादं प्रक्षालयति ( विराजो दोहोसीति प्रजापतिर्ऋषिर्यजुश्छन्द आपो देवता दक्षिणपादप्रक्षालने विनियोगः ) ॐविराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः । इति मंत्रेण प्रथमं दक्षिणं पादं प्रक्षाल्य अनेनैव वामं पादं प्रक्षालयेत् क्षत्रियादीनां तु वामं प्रथमम् अत्रावसरे वरो यथाशक्ति कलशद्रव्यं दद्यात् तद्द्रव्यमानीय अद्येहामुकोहं दशायामन्तर्दशायां गोचरेऽष्टकवर्गे सर्वतोभद्रे नैर्याणे वर्षफलेपि वा यत्रकुत्रस्थानस्थितानामादित्यादिनवग्रहाणां दुष्टानां दुष्टदोषोपशांत्यर्थं शुभानां शुभफलाधिक्यप्राप्तये इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा कन्यापक्षीयपुरोहिताय दास्ये इति कलशद्रव्यं दत्वा पुनर्द्वितीयं विष्टरं प्रतिगृह्णीयात् ॐविष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्युक्ते वरः अहं प्रतिगृह्णामीत्युक्त्वा पूर्ववद्वर्ष्मोऽस्मीति मंत्रेण आसने प्रागग्रं पादयोरधस्तान्निदधाति ततो यजमानः अर्घोऽर्घोऽर्घः प्रति गृह्यतामिति वदेत् वरः अहं प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्य ( आपःस्थेति प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता अर्घग्रहणे विनियोगः ) ॐआपःस्थ युष्माभिः सर्वान्कामानवाप्नवानि इत्यर्घमभिमंत्रयते अग्रिममन्त्रेण यथा ( समुद्रमित्याथर्वणऋषिरनुष्टुप्छन्द आपो देवता अर्घाभिमन्त्रणे विनियोगः ) ॐसमुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टाऽअस्माकं वीरा मा परासेचि मत्पयः । इति अथ आचमनीयम् ३ प्रतिगृह्यतां वरश्च प्रतिगृह्णामीत्युक्त्वा हस्ताभ्यां प्रतिगृह्य ( आमागन्निति परमेष्ठी ऋषिर्बृहतीछन्द आपः देवता आचमने विनियोगः) ॐआ मा गन्यशसा सꣳसृज वर्चसा तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् इति मन्त्रेण सकृदाचम्य ततः तूष्णीं स्मार्त्ताचमनं कुर्यात् अथ मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यतामित्युक्त्वा दधिमधुघृतं कांस्यपात्रस्थापितं कांस्येन पिहितं मधुपर्कं वराय निवेदयति वरश्च प्रतिगृह्णामीत्युक्त्वा यजमानहस्तोद्घाटितं मधुपर्कमीक्ष्यमाणो मन्त्रं पठति ( मित्रस्य त्वा इति प्रजापतिर्ऋषिः पंक्तिश्छन्दो मित्रो देवता मधुपर्कप्रतीक्षणे विनियोगः) ॐमित्रस्य त्वा चक्षुषा प्रतीक्षे । इति प्रतीक्ष्य (देवस्य

त्वेति बृहस्पतिॠषिर्यजुश्छन्दः सविता देवता मधुपर्कग्रहणे विनियोगः) ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि इत्युक्त्वा मधुपर्कपात्रं गृहीत्वा स्ववामकरे निधाय दक्षिणहस्तानामिकया त्रिःप्रयौति मिश्रयति (नमःश्यावेति प्रजापतिॠषिर्यजुश्छन्दः सविता देवता मिश्रणे विनियोगः ) ॐ नमः श्यावास्यायान्नशने यत्तऽआविद्धं तत्ते निष्कृन्तामि । इति मन्त्रेण मधुपर्कं सकृत्प्रदक्षिणमालोड्य अंगुष्ठानामिकाभ्यां सकृत्तूष्णीं बहिर्निक्षिपति एवं द्विवारमालोडनं निरुक्षणं च कृत्वा ततः त्रिः प्राश्नाति ( यन्मधुन इति कुत्सऋषिर्जगतीछन्दो मधुपर्को देवता मधुपर्कप्राशने विनियोगः ) ॐयन्मधुनो मधव्यं परम॑ᳬरूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोसानि इति अनामिकांगुष्ठाभ्यां प्राश्नाति एवं पुनर्द्विवारं मन्त्रवत्प्राशनम् ॐमधुव्वाता ऋतायते इत्यादितिसृभिर्ऋग्भिः प्रत्यृचं प्रतिमंत्रं वा त्रिः प्राशनं कृत्वा प्राशितशेषं पूर्वस्यां दिशि असंचरे क्षिपेत् तत आचम्य प्राणानायम्य अङ्गान्युपस्पृशति यथा दक्षिणकराग्रेण संहताभिस्तिसृभिस्तर्जनीमध्यमानामिकाभिः वाङ्म आस्येऽस्तु इतिमुखं स्पृशेत् अंगुष्ठप्रदेशिनीभ्यां नसोर्मे प्राणोस्त्विति नासिकारंध्रम् अंगुष्ठप्रदेशिन्यनामिकाभिः अक्ष्णोर्मे चक्षुरस्त्विति चक्षुषी तथैव कर्णयोर्मे श्रोत्रमस्त्विति कर्णौ संहतांगुल्यग्रैर्बाह्वोर्मे बलमस्त्विति बाहू असंहतांगुलिभ्यां पाणिभ्यां ऊर्वोर्मे ओजोस्त्विति युगपदूरू अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु इति शिरःप्रभृतिपादपर्यन्तं आलभेत् ततो द्विराचामेत् । ततो यजमानः खड्गप्रतिनिधिं कुशतरुणमादाय गौर्गौर्गौः आलभ्यतामित्याह वरश्च माऽऽलभ्यतामित्युक्त्वा मंत्रं पठेत् ( मातारुद्राणामिति ब्रह्माऋषिस्त्रिष्टुप्छन्दो गौर्देवता गोरभिमंत्रणे विनियोगः ) ॐ माता रुद्राणां दुहिता वसूना॑ᳬस्वसाऽऽदित्यानाममृतस्य नाभिः प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं व्वधिष्ट मम अमुक यजमानस्य च पाप्मा हतः इत्युपांशु पठित्वा ॐ उत्सृजत तृणान्यत्तु इत्युच्चैर्ब्रूयात् । ततः कुशपत्रस्योत्सर्जनं एव नालम्भनम् कलौ गवालम्भनस्य निषिद्धत्वात् गोनिष्क्रयीभूतसुवर्णदानं तन्निष्क्रयीभूतद्रव्यदानं वा उत्सर्गः तत्र संकल्पः अद्येहेत्यादि अमुकोहं मधुपर्कोपयोगि गोरुत्सर्गकर्मणः साद्गुण्यार्थं गोप्रत्याम्नायीभूतं सुवर्णं द्रव्यं वा ब्राह्मणाय दास्ये ॐतत्सत् इति संकल्प्य ब्राह्मणाय दद्यात् ॥ इति मधुपर्कविधिः ॥ अस्मिन्नवसरे कश्चिद्वरपक्षीयो ब्राह्मणो बहिः शालायामागत्य वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य प्रतिष्ठापयेत् अग्निस्थापनानन्तरं कन्यापिता वराय वस्त्रचतुष्टयं ददाति तत्र संकल्पः अद्येह अमुकशर्माहं कन्यादानकर्मणः पूर्वाङ्गत्वेन वराय सद्रव्यं वस्त्रचतुष्टयं संप्रददे इति दद्यात् वरश्च स्वस्तीत्युक्त्वा प्रतिगृह्य तेषु वस्त्रेषु वस्त्रयुग्मं कन्यायै प्रयच्छति वस्त्रद्वयं स्वयं परिधत्ते । तत्र प्रथमं कन्यायाः वस्त्रपरिधानमन्त्रौ ( जरांगच्छेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो वासो देवता वस्त्रपरिधाने विनियोगः ) ॐजरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा शतञ्च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः इत्यधोवस्त्रं परिधत्ते अथोत्तरीयमन्त्रः ( या अकृन्तन्निति प्रजापतिर्ऋषिस्त्रिष्टप्छन्दः वासो देवता उत्तरीयपरिधाने विनियोगः ) ॐयाऽअकृन्तन्नवयन्या अतन्वत याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वादेवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः॥अथ वरः स्वयं परिधत्ते (परिधास्यै इत्याथर्वणऋषिः पंक्तिश्छन्दो वासो देवता वासः परिधाने विनियोगः) ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतञ्च जीवामि शरदः पुरूचीरायस्पोषमभिसंव्ययिष्ये । अथोत्तरीयं ( यशसामेत्याथर्वणऋषिः पंक्तिश्छन्दो

लिंगोक्तादेवता उत्तरीयपरिधाने विनियोगः ) ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च माविन्दद्यशो मा प्रतिपद्यताम् । इति ततो द्विराचनम् अथ कन्यापिता कन्यावरौ परस्परं समञ्जेथामिति प्रेषयित्वा सम्मुखीकुर्यात् । ततो वरः सम्मुखीभूतः पश्यन्नेव-मन्त्रं पठति ( समञ्जन्त्विति आथर्वणऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता परस्परसमञ्जने विनियोगः ) ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ सम्मातरिश्वा सन्धाता समुद्रेष्ट्री दधातु नौ इति ॥ अथ वंशगोत्रप्रवरसापिण्ड्यनिश्चयार्थं गोत्रोच्चारः कर्त्तव्यः तत्र क्रममाह कारिकाकारः उच्चारः प्रातिलोम्येन पितॄणां सर्वकर्म्मसु । कन्यादाने यज्ञवृतावनुलोमेन स स्मृतः ॥ इति ततः प्रथमं कन्यापक्षीयः आशीर्वाद-श्लोकं पठति–जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता, स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्तुं धराम् । पार्वत्या महिषासुर-प्रमथने सिद्धादिभिर्मुक्तये, ध्यातः पञ्चशरेण विश्वविजये नागाननः पातु वः १ किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते कन्यार्थिने विष्णुस्वरूपिणे किंनाम्ने वराय । ततो वरपक्षीयो ब्राह्मणः आशीर्वादं पठति–कौपीनं परिधाय पन्नगपतिं गौरीपतौ श्रीपतेरभ्यर्णं समुपागते कमलया सार्द्धं स्थितस्यासने । आयाते गरुडेऽथ पन्नगपतौ त्रासाद्बहि-र्निर्गते शम्भुं वीक्ष्य दिगम्बरं जलभुवः स्मेरं स्मितं पातु वः २ अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुक-शर्म्मणः प्रपौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय अमुकनाम्ने विष्णुस्वरूपिणे कन्यार्थिने वराय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्रीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम् । च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ३ अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्रीं अमुकगोत्रस्य अमुक-प्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्रीं अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुक-शर्म्मणः पुत्रीं श्रीरूपिणीं वरार्थिनीं अमुकनाम्नीं कन्यां किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने किंनाम्ने वराय । अथ वरपक्षीयो ब्राह्मणः आशीर्वादं पठेत् रासोल्लासभरेण विभ्रमभृतामाभीर-वामभ्रुवामभ्यर्णं परिरभ्य निर्भरमुरः प्रेमान्धया राधया । साधु त्वद्वदनं सुधामयमिति व्याहृत्यगीतस्तुतिः व्याजालिङ्गनचुम्बितः स्मित-मनोहारी हरिः पातु वः ४ अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः

किंशर्म्मणः प्रपौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्रीं आयुष्मतीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम् अथकन्यापक्षीयः पठेत् देव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको देव्यं तद्धि विलोचनं कथमहिर्देव्यः स चांगे तव । तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलसुता विहस्य लपितः शम्भुः शिवायास्तु वः ५ अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्रीं अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्रीं अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्रीं आयुष्मतीं श्रीरूपिणीं वरार्थिनीममुकनाम्नीं कन्यां किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने किंनाम्ने वराय। अथ वरपक्षीयः पठेत् सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि । गंडोड्डीनालिमालामुखरितककुभस्तांडवे शूलपाणेर्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ६ अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्राय तथा अमुकशर्म्मणः पौत्राय तथा अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे, अमुकनाम्ने वराय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्रीं तथा किंशर्म्मणः पौत्रीं तथा किंशर्म्मणः पुत्रीं आयुष्मतीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम् इति त्रिवारं शाखोच्चारं विधाय पक्षद्वयेप्याशीर्वादश्लोकपाठः देवक्यां यस्य सूतिस्त्रिजगति विदिता रुक्मिणी धर्मपत्नी पुत्राः प्रद्युम्नमुख्याः सुरनरजयिनो वाहनं पक्षिराजः । वृन्दारण्यं विहारो व्रजपुरवनिता वल्लभा राधिकाद्याश्चक्रं विख्यातमस्त्रं स जयति जगतां स्वस्तये नन्दसूनुः ७ कौशल्याविशदालवालजनितः सीतालतालिङ्गितः सिक्तः पंक्तिरथेन सोदरमहाशाखाभिसंवर्द्धितः रक्षस्तीव्रनिदाघपाटनपटुश्छायाश्रितानन्दकृद्युष्माकं स विभूतयेस्तु भगवान् श्रीरामकल्पद्रुमः ८ इति पठित्वा कन्यापिता त्रिवारं ददानि३ इति वरं प्रति वदेत् ततः पक्षद्वये शाखोच्चारदक्षिणासंकल्पः अद्येहेत्यादि अमुकशर्माहं विवाहकर्मणि द्विजद्वारा कारितस्य शाखोच्चारकर्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् दक्षिणां दद्यात् । ततःसुलग्नसमागमप्राकाले कन्यां वस्त्रभूषणादिभिर्भूषयित्वा गन्धाक्षतपुष्पादिभिस्तां पूजयेत् ॐश्रीश्च ते लक्ष्मीश्च० ॐअंबेअंबिके० ॐसमख्ये देव्या धिया० इतिमन्त्रैः कन्यां पूजयेत् अथ कन्यादानलग्नानुरोधेन कन्यादानात्पूर्वं पश्चाद्वा आचाराच्छोलिकाभरणं कुर्व्वन्ति । तत्र प्रथमं कन्यापक्षे एकस्मिन्कांस्यपात्रोपरि सर्वफलानि सप्त नव वा तण्डुलपिष्टतिलमोदकानि सद्रव्याणि संस्थाप्य फलानि द्राक्षादाडिमपूगीफलजातीफलनारिंगनालिकेरकदलीफल बीजपूरजम्बूजंबीरनिम्बूफलाम्रफलपनसमातुलुङ्गेक्षुदंडोत्तराणि रौप्यकांस्यादिपात्रोपरि स्थापितानि पतिपुत्रवतीनां स्त्रीणां हस्तेन कुमारी छोलिकां दद्यात् मन्त्रः ॐयाः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ इति गृहीत्वा भद्रं कर्णेभिरिति मन्त्रं पठित्वा कन्या वराय प्रयच्छति अथ कन्यापिता वरपिता च आचारात् पञ्च सप्त लड्डुकानि सद्रव्याणि ब्राह्मणेभ्यो दद्यात् ततो वरपक्षेपि आचारप्राप्तं महालड्डुकादि छोलिकाभरणं कुर्यात् शाल्यादिपिष्टघटितलवंगैलामरिचकर्पूरजातीफलजातीपत्रादि

सुगंधिद्रव्यमिश्रितपिष्टतिलमहालड्डुकानि अपूपशष्कुलीसोहालिकाफेणिकादिविविधपक्वान्नयुतसद्योघृतपाचितानि रौप्यकांस्यादिपात्रोपरि-
स्थापितानि पतिपुत्रवतीहस्तेन गृहीत्वा प्रयच्छेत् मन्त्रः ॐअन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिषऽऊर्ज्जं नो धेहि
द्विपदे चतुष्पदे ॥ ततो वासांसि हरितपीतश्वेतरक्तनीलमाञ्जिष्ठकौसुम्भकाश्मीरयक्षकर्दममृगमदादि नानारंगरंजितानि विचित्रकार्पास
कौशेयपट्टवस्त्रनूतनस्वर्णसूत्राञ्चितानि नानादिग्देशजातानि बहुक्रयक्रीतानि बहुमौल्यानि नानानामधेयानि दुकूलोत्तरीयकञ्चुकादीनि
रौप्यकांस्यादिपात्रोपरि संस्थाप्य मन्त्रः ॐयदश्वाय व्वासऽउपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै सन्दानमर्व्वन्तं पड्वीशं प्रिया
देवेष्वायामयन्ति । परिधेयभूषणानि मणिमौक्तिकहीरकगारुत्मतमरकतपुष्परागनीलमहानीलेन्द्रवैदूर्य्यगोमेदादिमहार्घविविधोपलशोभित-
स्वर्णरचितकटककेयूरपादांगुलीयककाञ्चीहारग्रैवेयकनासिकाभरणतिलकताटंकस्वर्णपुष्पकंकणकरांगुलीयकबाहुबन्धकिरीटशिरःपुष्पादीनि
विविधस्वर्णशृङ्खलापट्टसूत्रग्रथितानि नानानामधेयानि भूषणानि रौप्यकांस्यादि पात्रोपरि संस्थाप्य मन्त्रः ॐरूपेण वो रूपमभ्यागां तुथो वो
विश्ववेदा विभजतु ऋतस्य पथा प्रेत चंद्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः १ ॐस्वर्णघर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः
स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्य स्वाहाः २ ॥ इतिछोलिकाभरणम् ॥ अथ पाणिग्रहणार्हे लग्ने समागते उभयपक्षयोः लग्नदान-
विधानम् वरपिता अद्येहामुकोहं अमुकराशेरस्य वरस्य विवाहलग्नात् यत्रकुत्रस्थानस्थितानां ग्रहाणां दुष्टफलनिरासपूर्वकं शुभफलप्राप्तये
आदित्यादिनवग्रहाणां प्रीतये इदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा ब्राह्मणाय दास्ये ॐ तत्सत् अथ कन्यापिता अद्येहेत्यादि अमुकोहं
अमुकराशेरस्याः कन्यायाः कन्यादानलग्नात् अन्यत्समानम् इति लग्नदानं विधाय दक्षिणां दत्वा ततः शंखघण्टातूर्यमङ्गलघोषपुरस्सरम्
उदङ्मुखोपविष्टः कन्यापिता प्रत्यङ्मुखोपविष्टायाः कन्यायाः दक्षिणहस्तांगुष्ठं गृहीत्वा प्राङ्मुखोपविष्टाय वराय दातुं कन्यादान-
संकल्पं कुर्यात् कुशतिलयवजलान्यादाय पत्नीहस्तेन संततजलधारां दापयेत् ॐविष्णुः ३ ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय
ॐतत्सत् श्रीहंसस्य चित्सदानन्दरूपिणो ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहं-
कारतृतीयोद्भूत वियदादिपंचकेन्द्रियदेवतानिर्मितांडकटाहे चतुर्दशलोकात्मके लोके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्यांग-
नाभिकमलोद्भूतेन सकललोकपितामहेन ब्रह्मणा सृष्टिं कुर्वता तदुद्धरणाय प्रजापतिप्रार्थितेन महापुरुषरूपिणा धृतवाराहावतारेण
ध्रियमाणायामस्यां भूर्लोकसंज्ञितायां धरित्र्यां सप्तद्वीपमण्डितायां क्षीराद्यब्धिद्विगुणद्वीपवलयीकृतलक्षयोजनविस्तीर्णे जंबूद्वीपे भरत-
खण्डे स्वर्गस्थितामराद्याशासितावतारे गङ्गादिसरिद्भिः पाविते निखिलजनपावने शौनकादिमुनिकृतवसतिके नैमिषारण्ये आर्य्यावर्त्ते
पुण्यक्षेत्रे हिमवत्पर्वतैकदेशे श्रीभगवन्मार्त्तण्डकृपापात्रकालत्रितयज्ञगर्गवराहाचार्यादिगणितायां संख्यायां श्रीब्रह्मणो द्वितीयपरार्द्धस्य
द्वितीययामे तृतीयमुहूर्ते श्रीश्वेतवाराहनाम्नि प्रथमकल्पे स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषेतिषण्मनूनामतिक्रम्यमाणे सम्प्रति
सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमकलियुगस्य प्रथमचरणे बौद्धावतारे श्रीमन्नृपतिविक्रमार्कसमयातीतसंवत्सराणां समयेनाति-
क्रांतानां षष्ठ्यब्दानां मध्ये अमुकनामसंवत्सरे अमुकायने अमुकर्त्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनामदि-
वसनक्षत्रे अमुकनाममहानक्षत्रे अमुकनामयोगे अमुकनामकरणे अमुकनाममुहूर्त्ते अमुकस्थे सूर्ये अमुकस्थे चन्द्रे अमुकस्थे भौमे

अमुकस्थे बुधे अमुकस्थे देवगुरौ अमुकस्थे शुक्रे अमुकस्थे शनौ अमुकस्थे राहौ अमुकस्थे केतौ एवंगुणविशेषविशिष्टायाम् अस्यां शुभावस्थायाम् अमुकगोत्रोऽमुकराशिरमुक शर्म्मा सपत्नीकोहं अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्म्मणः प्रपौत्राय अमुकशर्म्मणः पौत्राय अमुकशर्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोमुकवेदाध्यायिनोमुकशर्मणः प्रपौत्रीममुकशर्म्मणः पौत्रीममुकशर्मणः पुत्रीमायुष्मतीं श्रीरूपिणीं वरार्थिनोममुकनाम्नीमिमां कन्यां यथाशक्त्यलंकृतां यथाशक्त्युपकल्पितयौतुकयुतां प्रजापतिदैवत्यां पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमस्तफलप्राप्तिकामः मम समस्तपितॄणां निरतिशयानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेन वरेणास्यां कन्यायां उत्पादयिष्यमाणसन्तत्या द्वादशपरान् द्वादशावरान् पितॄन् आत्मानञ्च पवित्रीकर्तुं श्रीलक्ष्मीनारायणप्रीतये देवाग्निगुरुब्राह्मणसन्निधौ अग्निसाक्षिकतया सहधर्मंचरणाय तुभ्यमहं सम्प्रददे प्रतिगृह्णातु भवान् इति दाता उत्थाय सकुशाक्षतजलं कन्याहस्तं वरहस्ते समर्प्पयेत् कन्यापिता उत्थाय दानवाक्यं पठेत्-कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया १ विश्वम्भराः सर्व्वहिताः साक्षिण्यः सर्व्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च २ गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ३ कन्या लक्ष्मीः समाख्याता वरो नारायणः स्मृतः । तस्मात्कन्याप्रदानेन कृष्णो मे प्रीयतामिति ४ इति कन्यादानवाक्यानि ततः कन्यां प्रार्थयेत्-कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः । कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ इति पठित्वा श्रीलक्ष्मीनारायणप्रीतये वरकन्ययोः पूजनं कृत्वा प्रार्थयेत् त्रैलोक्यनाथ देवेश सर्वभूतदयानिधे । दानेनानेन सुप्रीतः सदा शान्तिं प्रयच्छ मे ॥ इति ततो वरः ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्यां प्रजापतये प्रतिगृह्णामि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॐस्वस्ति इत्युक्त्वा दक्षांगुष्ठं गृहीत्वा कामस्तुतिं पठेत् ॐकोऽदात्कस्मा ऽअदात्कामोऽदात्कामायादात्कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ इति ततो दाता पुनः पठेत् कन्या मम कुले जाता पालिता वत्सराष्टकम् । तुभ्यं विप्र मया दत्ता पुत्रपौत्रविवर्धिनी ॥ धर्मे चार्थे च कामे च नातिचरितव्या त्वया । ॐनातिचरामीति वरः प्रतिवदेत् ततो दाता उपविश्य कन्यादानप्रतिष्ठां कुर्यात् तिलकुशयवजलान्यादाय अद्येह अमुकोहं कन्यादानकर्मणः साद्गुण्यार्थं फलप्रतिष्ठासिद्ध्यर्थं इदं सुवर्णं अग्निदैवतं वराय तुभ्यं सम्प्रददे तथा दास्यमानं यौतुकादिकं च वराय तुभ्यं संप्रददे इति सुवर्णं दद्यात् वरश्च ॐस्वस्तीति प्रतिवदेत् अथाचारात्कन्यापिता तद्बान्धवादयोपि यथाशक्ति यौतुकत्वेन सुवर्णरजतताम्रपित्तलपात्राणि गोमहिष्यश्वशय्यादासीदासग्रामादिकं च वरकन्याभ्यां प्रयच्छन्ति केचिदेतद्धोमान्ते वदन्ति तद्देशाचारतोवगन्तव्यम् । अथाचाराच्छिष्टाचारपरंपराप्राप्तमुभयोर्वरकन्ययोरुत्तरीयप्रान्तग्रन्थिकरणं मंगलद्रव्यसहितमामनन्ति तत्र द्रव्यपूगीफलसर्षपाक्षतहरिद्राभिर्वरकन्ययोर्वस्त्राञ्चलग्रन्थिं यज्ञोपवीतेन दृढं बद्ध्वा कलशोपरिसंस्थाप्य एतन्त इत्यादि ॐभूर्भुवः स्वः अञ्चलग्रन्थे सुप्रतिष्ठितो भव इति प्रतिष्ठाप्य चतुर्थीकर्मदिवसे मोचयेत् । ततो वरो वध्वाः अंगुष्ठं त्यजेत् लग्नात्पूर्वमसम्भवे पूर्वोक्तविधिना अत्रावसरे छोलिकाभरणं वा ततो यथाशक्ति यौतुकादिकं दद्यात् अथकन्यादानदक्षिणासंकल्पं कुर्यात् अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्मा सपत्नीकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीलक्ष्मीनारायणप्रीतये कन्यादानकर्मणः सांगफलप्राप्तये

इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यश्च विभज्य दास्ये ॐतत्सत् इति संकल्प्य ब्राह्मणेभ्यो दक्षिणां दत्वा अभिषेकतिलकमंत्रपाठादिकं कारयेत् अत्रावसरे गायन्त्यो वृद्धाः पुरन्ध्रयो वरदत्तानि भूषणानि वासांसि च कन्यां परिधापयन्ति सम्यक् शृङ्गारादिना भूषयन्ति च । अथ वरः पित्रा प्रत्तामादाय निष्क्रामति अस्यार्थः पित्रा जनकेन प्रत्तां संकल्प्य दत्तां आदाय प्रतिग्रहविधिना प्रतिगृह्य हस्ते गृहीत्वा गृहमध्यान्मंडपादाग्निसमीपं गन्तुं निष्क्रामतीति अथाग्नेः समीपं गच्छन्तौ वधूवरौ कन्यापिता परस्परं समीक्षेथामिति प्रैषेण समीक्षयति । ततः प्रेषितो वरः समीक्ष्यमाणां कन्यां अनुरागेण समीक्ष्यमाणः चतुरो मन्त्रान्पठति ( अघोरचक्षुरित्यादीनां चतुर्णां मन्त्राणां प्रजापतिर्ऋषिस्त्रिष्टुप्छंदः कुमारीदेवता परस्परसमीक्षणे विनियोगः ) ॐअघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे १ ॐसोमः प्रथमो विविदे गन्धर्वो विविदऽउत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः २ ॐसोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये रयिं च पुत्राँश्चादादग्निर्मह्यमथोऽइमाम् ३ ॐसा नः पूषा शिवतमामैरय सा नऽऊरूऽउशती विहर यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ४ एवं मन्त्रचतुष्टयं पठित्वा निष्क्रमणं कुर्यात् तत्र मन्त्रः ( यदैषीत्याथर्वणऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता निष्क्रमणे विनियोगः ) ॐयदैषि मनसा दूरं दिशोऽनु पवमानो वा हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु असौ अमुकलक्ष्मीति संबुद्ध्यन्तं नाम गृह्णीयात् । ततः स्वदक्षिणहस्तेन वध्वा वामकरं गृहीत्वा विवाहशालातोऽग्निसमीपं गन्तुं बहिर्निष्क्रामति । अत्र निष्क्रमणप्रभृति आमूर्द्धाभिषेकात् कश्चिद्ब्राह्मणः जलपूर्णं कुम्भं स्कन्धे धृत्वा वाग्यत उत्तरतस्तिष्ठेत् । अथ वरो वध्वा सह बहिःशालामागत्याग्निं प्रदक्षिणीकृत्य वधू दक्षिणत उपवेश्य अर्घं संस्थाप्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकगोत्रो ऽमुकराशिरमुकशर्माहं धर्मार्थकामसिद्धिद्वारा ॐतत्सत् श्रीपरमेश्वरप्रीतये ब्राह्मविधिना पितृदत्तामिमां गौरीं कन्यां विवाहयिष्ये तत्पूर्वाङ्गतया विवाहहोमकर्मणि कृताकृतावेक्षणाय ब्रह्मकर्म कर्तुं ब्रह्मणः पूजनपूर्वकं वरणं करिष्ये इतिसंकल्प्य भूमिदेवेति ब्रह्मणे अर्घं दत्वा गन्धाक्षतपुष्पैः सम्पूज्य वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासोभिः विवाहकर्मणि कृताकृतावेक्षणाय ब्रह्मकर्म कर्तुममुकशर्माणं ब्रह्मत्वेन त्वामहं वृणे ॐवृतोस्मीति प्रत्युक्तिः एवमुत्तरासने वृतो ब्रह्मा पूर्वकल्पितदक्षिणासने उपविशेत् ततो ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म ( पृ० ११-१२ ) कुर्य्यात् ततः प्रणीता प्रणयनाद्यासादनान्ते विशेषोपकल्पनीयानि वस्तून्यासादयेत् शमीपलाशमिश्रा लाजाः अखण्डोऽश्मा लोहितमानडुहं चर्म कुमारीभ्राता नवीनं शूर्प्पम् दृढपुरुषः आचार्य्याय वरद्रव्यं ततः पर्युक्षणान्तं कर्म कृत्वा वरो देवताभिध्यानं करोति अद्येह अमुकोहं विवाहकर्मणा यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममग्निं वायुं सूर्य्यं अग्नीवरुणावग्नीवरुणावग्निं वरुणं सवितारं विष्णुं विश्वान् मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं ऋताषाहं ऋतधामानमग्निं गन्धर्वं ४ ओषधीरप्सरसो मुदः ३ सꣳहितं विश्वसामानं सूर्य्यं गन्धर्वं मरीचीरप्सरस आयुवः ३ सुषुम्णं सूर्यरश्मिं चन्द्रमसं गन्धर्वं ४ नक्षत्राण्यप्सरसो भेकुरीः ३ इषिरं विश्वव्यचसं वातं गन्धर्वं ४ अपोप्सरस ऊर्ज्जः ३ भुज्युं सुपर्णं यज्ञं गन्धर्वं ४ दक्षिणा अप्सरसस्तावाः ३ प्रजापतिं विश्वकर्माणं मनो गन्धर्वं ४ ऋक्सामान्यप्सरस एष्टीः ३ ॥ ४२ ॥ चित्तं १ चित्तिं १ आकूतम् १ आकूतिं १ विज्ञातं १ विज्ञातिं १ मनः १ शक्वरीः १ दर्शं १ पौर्णमासम् १

बृहतं १ रथन्तरं १ प्रजापतिं १ जयं १ निन्द्रं १ ॥१५॥ अग्निं भूतानामधिपतिं १ इन्द्रं ज्येष्ठानामधिपतिं १ यमं पृथिव्या अधिपतिं १ वायुमन्तरिक्षस्याधिपतिं १ सूर्यं दिवोधिपतिं १ चन्द्रमसं नक्षत्राणामधिपतिं १ बृहस्पतिं ब्रह्मणोधिपतिं १ मित्रं सत्यानामधिपतिं १ वरुणमपामधिपतिं १ समुद्रं स्रोत्यानामधिपतिं १ अन्नꣳ साम्राज्यानामधिपतिं १ सोममोषधीनामधिपतिं १ सवितारं प्रसवानामधिपतिं १ रुद्रं पशूनामधिपतिं १ त्वष्टारं रूपाणामधिपतिं १ विष्णुं पर्वतानामधिपतिं १ मरुतो गणानामधिपतीन् १ पितॄन् १ पितामहान् १ परान् १ अवरान् १ ततान् १ततामहान् १ ॥२३॥ अग्निं १ अग्निं १ अग्निं १ वैवस्वतं १ मृत्युं १ चाज्येनाहं यक्ष्ये अत्रावसरे कन्या देवताभिध्यानं करोति अर्यमणम् ३ अग्निम् ३ भगम् १ लाजैरहं यक्ष्ये पुनर्वरः प्रजापतिं १ अग्निं स्विष्टकृतं २ चाज्येनाहं यक्ष्ये इदमाज्यं मया परित्यक्तं यथादैवतमस्तु इमे लाजाश्च मया परित्यक्ता यथादैवतं सन्तु एवं द्रव्यत्यागं विधाय अग्निं प्रज्वलय्य ॐ एतन्ते इत्यादि ॐभूर्भुवः स्वः योजकनामाऽग्ने सुप्रतिष्ठितो वरदो भव ॐअग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् सुवर्णवर्णमनघमनन्तं विश्वतोमुखम् ॐचत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां २॥ आविवेश ॥ इति मन्त्राभ्यां अग्निं ध्यानादिनीराजनान्तं संपूज्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा आघारावाज्यभागौ जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये १ ॐइन्द्राय स्वाहा इदमिन्द्राय २ ॐअग्नये स्वाहा इदमग्नये ३ ॐसोमाय स्वाहा इदं सोमाय १ ततो महाव्याहृतिहोमः ( महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः व्याहृतिहोमे विनियोगः ) ॐभूः स्वाहा इदमग्नये १ ॐभुवः स्वाहा इदं वायवे २ ॐस्वः स्वाहा इदꣳसूर्याय३ ( त्वन्नोऽअग्ने इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः ) ॐत्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्याम् ४ ( सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः ) ॐसत्वन्नोऽग्ने वमो भवोती नेदिष्ठो ऽअस्याऽउषसो व्युष्टौ अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा । इदमग्नीवरुणाभ्याम् ५ ( अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः ) ॐअयाश्चाग्ने स्यनभिशस्ति पाश्च सत्यमित्वमयाऽअसि अयानो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा इदमग्नये ६ ( ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दः वरुणसवितृविष्णुविश्वेमरुतः स्वर्का देवताः सर्वप्रायश्चित्तहोमे विनियोगः ) ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यः ७ (उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दो वरुणो देवता सर्वप्रायश्चित्तहोमे विनियोगः) ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा । इदं वरुणायादित्यै ८ ततो दक्षिणासंकल्पः अद्येह अमुकराशिरमुकशर्मा सवधूकोऽहं आघाराज्यभागमहाव्याहृतिसर्वप्रायश्चित्तहोमानां सांगतासिद्ध्यै इमां दक्षिणाम् आचार्यब्रह्मभ्यां विभज्य दास्ये ॐतत्सत् इति दद्यात् आचार्यब्रह्माणौ च मंत्राशिषं दद्यातम् यथा उत्सर्गे च तुरीये च वरुणो विष्णुना सह । तुष्टिपुष्टिकरो नित्यमुभयोः स्त्रीकुमारयोः इति ॥ अथ राष्ट्रभृद्धोमः ( ऋताषाडिति प्रजापतिर्ऋषिर्-

जुश्छन्दः ऋताषाडृतधामाग्निर्गन्धर्वो देवता होमे विनियोगः ) ॐऋताषाडृतधामाग्निर्गन्धर्वः स नऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् । इदमृताषाहे ऋतधाम्ने अग्नये गन्धर्वाय । पुनः ( ऋताषाडिति प्रजापतिर्ऋषिर्यजुश्छन्द ओषधयोऽप्सरसो मुदो देवताः होमे विनियोगः)ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधीभ्योऽप्सरोभ्योमुद्भ्यः । (सꣳहित इति प्रजापतिर्ऋषिर्यजुश्छन्दः सꣳहितो विश्वसामा सूर्यो गन्धर्वो देवता होमे विनियोगः ) ॐसꣳहितो विश्वसामा सूर्यो गन्धर्वः स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदꣳसꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय । पुनः ( सꣳहितइति प्रजापतिर्ऋषियजुश्छन्दः मरीचयोप्सरस आयुवो देवताः होमे विनियोगः) ॐसꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्यमरीचयोप्सरसऽआयुवो नाम ताभ्यःस्वाहा । इदं मरीचिभ्योप्सरोभ्य आयुभ्यः । ( सुषुम्णा इति प्रजापतिर्ऋषिर्यजुश्छन्दः सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वो देवता होमे विनियोगः ) ॐसुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स नऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् । इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय । पुनः ( सुषुम्ण इति प्रजापतिर्ऋषिर्यजुश्छन्दः नक्षत्राण्यप्सरसो भेकुरयो देवता होमे विनियोगः ) ॐसुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा । इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः ( इषिर इति प्रजापतिर्ऋषिर्यजुश्छन्द इषिरो विश्वव्यचा वातो गन्धर्वो देवता होमे विनियोगः ) ॐइषिरो विश्वव्यचा वातो गन्धर्वः स नऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् । इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय । पुनः ( इषिर इति प्रजापतिर्ऋषिर्यजुश्छन्दः आपोप्सरस ऊर्जो देवता होमे विनियोगः ) ॐइषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोप्सरस ऊर्जो नाम ताभ्यः स्वाहा । इदमद्भ्यो ऽप्सरोभ्य ऊर्ग्भ्यः । ( भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दः भुज्युः सुपर्णो यज्ञो गन्धर्वो देवता होमे विनियोगः ) ॐभुज्युः सुपर्णो यज्ञो गन्धर्वः स न ऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् । इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय । पुनः ( भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दो दक्षिणाप्सरसस्तावा देवता होमे विनियोगः ) ॐभुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणाऽअप्सरसस्तावा नाम ताभ्यः स्वाहा । इदं दक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यः । ( प्रजापतिरिति प्रजापतिर्ऋषिर्यजुश्छन्दः प्रजापतिर्विश्वकर्मा मनो गन्धर्वो देवता होमे विनियोगः ) ॐप्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न ऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् । इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय । पुनः ( प्रजापतिरिति प्रजापतिर्ऋषियजुश्छन्दः ऋक्सामान्यप्सरसऽ एष्टयो देवता होमे विनियोगः ) ॐप्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा । इदमृक्सामभ्यो ऽप्सरोभ्यऽ एष्टिभ्यः । अत्रापि दक्षिणा अद्येह अमुकशर्मा सवधूकोऽहं कृतैतद्राष्ट्रभृद्धोमस्य सांगफलप्राप्तये साद्गुण्यार्थं इमां दक्षिणां आचार्यब्रह्मभ्यां विभज्य दास्ये ॐतत्सत् मन्त्रपाठः गोविन्दो गोकुले चैव गोपीभिश्च हरेः सह । तुष्टिपुष्टिकरोनित्यमुभयोः स्त्रीकुमारयोः इति राष्ट्रभृद्धोमः ॥ अथ जय होमः ( चित्तंचेत्यादीनां द्वादशमंत्राणां परमेष्ठीऋषिर्यजूंषि चित्तादयो मंत्राम्नाता देवताः प्रतिमन्त्रं होमे विनियोगः ) ॐचित्तंच स्वाहा । इदं चित्ताय १ ॐचित्तिश्च स्वाहा । इदं चित्यै २ ॐआकूतंच स्वाहा । इदमाकूताय ३ ॐआकूतिश्च स्वाहा । इदमाकूत्यै ४ ॐविज्ञातं च स्वाहा । इदं विज्ञाताय ५ ॐविज्ञातिश्च स्वाहा । इदं विज्ञातये ६ ॐमनश्च स्वाहा । इदं मनसे ७ ॐशक्वरीश्च स्वाहा । इदं शक्वरीभ्यः ८ ॐदर्शश्च स्वाहा । इदं दर्शाय ९ ॐपूर्णमा-

  

संच स्वाहा । इदं पूर्णमासाय १० ॐबृहच्च स्वाहा । इदं बृहते ११ ॐरथन्तरंच स्वाहा । इदं रथन्तराय १२ ( प्रजापतिरितिमन्त्रस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता जय होमे विनियोगः) ॐप्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु तस्मै विशः समनमन्त सर्वाः सऽउग्रः सऽइ हव्यो बभूव स्वाहा । इदं प्रजापतये जयानिन्द्राय १३ उदकस्पर्शः ततो दक्षिणा अद्येह अमुकशर्मा सवधूकोहं चित्तादिहोमकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं इमां दक्षिणां आचार्यब्रह्मभ्यां यथांशेन दास्ये ॐतत्सत् । चैरंजीव्यं महातेजश्चित्ताद्याश्च दिवौकसः । प्रयच्छन्तु करे वाञ्छामुभयोः स्त्रीकुमारयोः । इति जयहोमः ॥ अथाभ्यातानहोमः ( अग्निर्भूतानमधिपतिरित्यादिपितरः पितामहा इत्यंतानामष्टादशमंत्राणां प्रजापतिर्ऋषिः पंक्तिश्छन्दो मंत्राम्नाता अग्न्यादिदेवताः प्रतिमंत्रं होमे विनियोगः ) ॐअग्निर्भूतानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदमग्नये भूतानामधिपतये १ ॐइन्द्रो ज्येष्ठानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदमिन्द्राय ज्येष्ठानामधिपतये २ ॐयमः पृथिव्या अधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬस्वाहा । इदं यमाय पृथिव्या अधिपतये ३ पित्र्यत्वादुदकस्पर्शः ॥ ॐवायुरन्तरिक्षस्याधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदं वायवे अन्तरिक्षस्याधिपतये ४ ॐसूर्यो दिवोधिपतिः स मा० । इदं सूर्याय दिवोधिपतये ५ ॐचन्द्रमा नक्षत्राणामधिपतिः स मा० । इदं चन्द्रमसे नक्षत्राणामधिपतये ६ ॐबृहस्पतिर्ब्रह्मणोधिपतिः स मा० । इदं बृहस्पतये ब्रह्मणोधिपतये ७ ॐमित्रः सत्यानामधिपतिः स मा० । इदं मित्राय सत्यानामधिपतये ८ ॐवरुणोऽपामधिपतिः स मा० । इदं वरुणायापामधिपतये ९ ॐसमुद्रः स्रोत्यानामधिपतिः स मा० । इदं समुद्राय स्रोत्यानामधिपतये १० ॐअन्नᳬसाम्राज्यानामधिपतिः तन्मा० । इदमन्नाय साम्राज्यानामधिपतये ११ ॐसोमऽओषधीनामधिपतिः स मा० । इदं सोमायौषधीनां पतये १२ ॐसविता प्रसवानामधिपतिः स मा० । इदं सवित्रे प्रसवानामधिपतये १३ ॐरुद्रः पशूनामधिपतिः स मा० । रुद्राय पशूनां पतये १४ ॐत्वष्टा रूपाणामधिपतिः स मा० । इदं त्वष्ट्रे रूपाणामधिपतये १५ ॐविष्णुः पर्वतानामधिपतिः स मा० इदं विष्णवे पर्वतानामधिपतये १६ ॐमरुतो गणानामधिपतयस्ते मावन्त्वस्मिन्० । इदं मरुद्भ्यो गणानामधिपतिभ्यः १७ ॐपितरः पितामहाः परेवरे ततास्ततामहास्ते मावन्त्वस्मिन्० । इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः १८ एतेऽष्टादश मन्त्रा अभ्यातानसंज्ञाः प्रणीतोदकस्पर्शः । अत्रापि दक्षिणा अद्येहेत्यादि अमुकशर्मा सवधूकोऽहं अभ्यातानहोमस्य सांगफलप्राप्तये साद्गुण्यार्थं इमां दक्षिणां आचार्यब्रह्मभ्यां यथांशेन दास्ये । मंत्रपाठः उत्सर्गे च तुरीये च प्रयच्छन्त्वनलादयः। पुत्रान् लक्ष्मीं तथाकामानुभयोःस्त्रीकुमारयोः ॥ अथापरोग्न्यादिपञ्चकहोमः (अग्निरैत्वित्यादीनां चतुर्णां मंत्राणां प्रजापतिऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता आज्यहोमे विनियोगः ) ॐअग्निरैतु प्रथमो देवतानाᳬसोस्यै प्रजां मुञ्चतु मृत्युपाशात् तदयᳬराजा वरुणोऽनुमन्यतां यथेयᳬस्त्री पौत्रमघन्न रोदात्स्वाहा । इदमग्नये १ ॐइमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घामायुः अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुद्ध्यतामियᳬस्वाहा । इदमग्नये २ ॐस्वस्तिनोऽअग्ने दिवाऽआपृथिव्या विश्वानि धेह्ययथा

यज्ञत्र यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रꣳस्वाहा। इदमग्नये ३ ॐसुगन्नु पन्थाम्प्रदिशन्नऽएहि ज्योतिष्म-द्धेह्यजरन्नऽआयुः अपैतु मृत्युरमृतन्नऽआगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहा। इदं वैवस्वताय ४ ॥ अत्र शिष्टाचारात् वधू वस्त्रेणान्त-र्धाय मनसा मंत्रं पठन् मृत्यवे जुहोति। (परं मृत्यविति संकसुकऋषिस्त्रिष्टुप्छन्दो मृत्युर्देवता होमे विनियोगः) ॐपरं मृत्योऽअनु परेहि पन्थां यस्तेऽअन्यऽइतरो देवयानात् चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳरीरिषो मोत वीरान्स्वाहा। इदं मृत्यवे १ प्रणीतोदक-स्पर्शः। अत्रापि दक्षिणा अद्येह अमुकशर्मा सवधूकोहं कृतैतदग्न्यादिपञ्चकहोमस्य सांगफलप्राप्तये साद्गुण्यार्थं इमां दक्षिणां आचार्य-ब्रह्मभ्यां यथांशेन दास्ये ॐतत्सत् मंत्रपाठः गोविन्दो गोकुले तिष्ठन्गोपीभिर्विहरन्सह। तुष्टिपुष्टिकरो नित्यमुभयोः स्त्रीकुमारयोः ॥ तत आचम्य अथ पाणिग्रहणांगभूतो लाजाहोमः अत्र कन्यायाः कर्तृत्वम् आयुष्मानस्तु मे पतिरिति मंत्रलिंगात् संहितेन तिष्ठंती जुहोतीति वचनाच्च ततस्तिष्ठन्ती कुमारी अञ्जलिं विदधाति वरश्च तिष्ठन्कुमार्यञ्जलिमालभते अथ कुमार्या ज्येष्ठः कनिष्ठो वा भ्राता लौकिकाग्नि-सिद्धान् लाजान् घृतेनाभिघार्य सम्प्रोक्ष्य नवीनशूर्पे चतुर्द्धा कृत्वा तेष्वेकं भागं कुमार्यञ्जलावावपति कुमारी च तानञ्जलिना गृहीत्वा प्राङ्मुखी तिष्ठन्ती मंत्रं पठन्ती जुहुयात् (अर्यमणमित्याथर्वणऋषिरनुष्टुप्छन्दः अर्यमा देवता लाजहोमे विनियोगः) ॐअर्यमणं देवं कन्याऽअग्निमयक्षत स नोऽअर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा। इदमर्यम्णे इत्यञ्जलिस्थलाजानां तृतीयांशं जुहोति नात्र संस्रवधारणम् शेषस्य होष्यमाणत्वात्। (इयं नारीत्याथर्वण ऋषिरनुष्टुप्छन्दः अर्यमा देवता लाजहोमे विनियोगः) ॐइयं नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा। इदमर्यम्णेऽग्नये इत्यर्द्धं जुहोति। (इमांल्लाजानित्याथर्वणऋषि-रनुष्टुप्छन्दोग्निर्देवता लाजहोमे विनियोगः) ॐइमांल्लाजानावपाम्यग्नौ समृद्धिकरणं तव मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳ स्वाहा। इदमग्नये इति सर्वान् लाजान् जुहोति। अथ वरो वध्वाः सांगुष्ठं दक्षिणं हस्तमुत्तानं कृत्वा (गृभ्णामीत्यादीनां चतुर्णां मंत्राणां याज्ञवल्क्यभरद्वाजाथर्वणप्रजापतय ऋषयः त्रिष्टुबनुष्टुबुष्णिग्यजूंषि छन्दांसि भगार्यमसवितृपुरन्धयो देवताः वधूपाणिग्रहणे विनि०) ॐगृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः भगोऽअर्यमा सविता पुरन्धिर्मह्यन्त्वादुर्गार्हपत्याय देवाः १ ॐअमोहमस्मि सा त्वꣳसा त्वमस्य मोऽअहम् सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् २ तावेव विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्दावहै बहून् ३ ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ४ ॥ अथैनामश्मानमारोहयति अग्नेरुत्तरतः स्थितेऽश्मनि वरो वध्वाः दक्षिणं पादं स्वदक्षिणहस्तेन गृहीत्वा मंत्रं पठन् स्थापयेत् (आरोहेममित्यस्याथर्वण ऋषिरनुष्टुप्छन्दो वधू-र्देवता अश्मारोहणे विनियोगः) ॐआरोहेममश्मानमश्मेव त्वꣳस्थिरा भव अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः। इति तामश्मन्या-रोप्य तस्याः शिरसि हस्तं नीत्वा वरो गाथां गायति (सरस्वति प्रेदमिति विश्वावसुऋषिरनुष्टुप्छन्दः सरस्वती देवता गाथागाने विनि०) ॐसरस्वति प्रेदमव सुभगे वाजिनीवति यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः १ यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत् तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः २ इति गाथागानं वरस्यैव। अथ वधूवरौ प्रदक्षिणमग्निं परिक्रामतः वर एव मंत्रं

पठेत् परिक्रमणे मंत्रः (तुभ्यमग्न इत्याथर्वण ऋषिरनुष्टुप्छन्दोऽग्निर्देवता परिक्रमणे विनियोगः) ॐतुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह पुनः पतिभ्यो जायां दाऽअग्ने प्रजया सह । इति पठन् वधूमग्रतः कृत्वा परिक्रामेत् एवं पुनर्वाग्द्वयं लाजहोमपाणिग्रहणाऽश्मारोहणगाथागानपरिक्रमणानि कृत्वा तृतीयपरिक्रमणानन्तरं कुमार्या भ्राता शूर्पकोणप्रदेशेन सर्वान् लाजान् कुमारीहस्ते ददाति सा च तिष्ठन्ती जुहोति ॐभगाय स्वाहा इदं भगाय । इति हुत्वा ततः समाचारात्तूष्णीं चतुर्थं परिक्रमणं कृत्वा यथास्थानमागत्योपविश्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा ॐअग्नये प्रजापतये स्वाहा । इदमग्नये प्रजापतये । इति हुत्वा अथाचारात् सुश्वेताः सुपुष्टाः घृताक्ताः सप्तवर्त्तिकाः प्रज्वाल्य तण्डुलमध्ये स्थाप्य वरो वध्वाः दक्षिणपादक्रमेण मन्त्रान्पठन् एनामुदीच्यां सप्तपदानि निष्क्रामयति मंत्राः (एकमिषे इत्यादीनां सप्तमंत्राणां प्रजापतिर्ऋषिः यजूंषि लिंगोक्ता देवताः सप्तपदीप्रक्रमणे विनियोगः) ॐएकमिषे विष्णुस्त्वा नयतु १ ॐद्वे ऊर्जे विष्णुस्त्वा नयतु २ ॐत्रीणि रायस्पोषाय विष्णुस्त्वा नयतु ३ ॐचत्वारि मयोभवाय विष्णुस्त्वा नयतु ४ ॐपञ्च पशुभ्यो विष्णुस्त्वानयतु ५ ॐषडृतुभ्यो विष्णुस्त्वा नयतु ६ इति षण्मन्त्रैः षड्वर्त्तिकाः क्रमेण निर्वाप्य सप्तमीं ज्वलंतीमेव स्थापयति वधूः तत्र सप्तमो मंत्रः ॐसखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ॥ ७ ॥ अथ वरः निष्क्रमणप्रभृतिसुरक्षितात् उत्तरतो वाग्यतस्थितद्विजस्कन्धस्थितात् उदककुम्भादुदकमादाय दर्भपिञ्जूलेन दूर्वाम्रुष्टया पल्लवितशाखया वा वधूं मूर्द्धन्यभिषिञ्चति (आपः शिवा इति प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवता वधूमूर्द्धाभिषेचने विनियोगः) ॐआपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् (आपोहिष्ठेति त्र्यृचस्य सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता वधूमूर्द्धाभिषेके विनियोगः) ॐआपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन महेरणाय चक्षसे१ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः२ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः ॥ अथ दिवाविवाहे सूर्य्यमुदीक्षस्वेति वरेण प्रेषिता वधूः सूर्य्यमुदीक्षते (तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिरुष्णिक्छन्दः सूर्यो देवता सूर्य्योदीक्षणे विनियोगः) ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ अथ वरो वध्वाः दक्षिणांसस्योपरि स्वदक्षिणहस्तं नीत्वा तस्या हृदयमालभते (मम व्रते त इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता वधूहृदयालम्भने विनियोगः) ॐमम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽअस्तु मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥ अथ वरो वधूमभिमंत्रयते (सुमंगलीरिति प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वध्वभिमंत्रणे विनियोगः) ॐसुमंगलीरियं वधूरिमाꣳ समेत पश्यत सौभाग्यमस्यै दत्वा याथास्तं विपरेत न ॥ इतिमंत्रेण वध्वाः सीमन्ते सिंदूरमपि दापयन्ति वृद्धाः । अत्रावसरे शिष्टाचारात् वरस्य वामभागे वधूमुपवेशयन्ति सापि वरस्याञ्चलं प्रतिगृह्य तं यथास्थानं निवेशयति । अथाग्नेः पश्चादुदग्वा पूर्वकल्पिते अनुगुप्ते आगारे उत्तरे लोम्नि प्राग्ग्रीवे आनडुहे चर्म्मणि आस्तीर्णे रक्तवस्त्रखण्डे वा कश्चन दृढपुरुषो वर एव वा मंत्रं पठन् वधूमुत्थाप्योपवेशयति तत्र मन्त्रः (इह गाव इति प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वधूपवेशने विनियोगः) ॐइह गावो निषीदन्त्विहाश्वाऽइह पूरुषा इहो सहस्रदक्षिणो यज्ञऽइह पूषा निषीदतु ॥ इति समंत्रकमुपवेश्य तूष्णीमुत्थाप्य पूर्ववद्यथास्थानमुपवेश्य स्वयंचोपविश्य ब्रह्मणान्वारब्धो जुहुयात् ॐ

अग्नयेस्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृद्धोमं विधाय ग्रामवचनं कुर्यात् ग्रामेति स्वकुलवृद्धाः स्त्रियश्चेति कथ्यन्ते ततो वधूहस्तेन वरस्य पादप्रक्षालनम् वरवध्वोः परस्परं तिलकाक्षतारोपणं दधिगुड़प्राशनं परस्परोच्छिष्टलापनं च यथादेशकुलाचारं कुर्यात् विवाहश्मशानयोर्ग्रामवचनं प्रमाणमिति श्रुतिवचनम् । ततः संस्रवप्राशनम् सजलपवित्राभ्यां मुखमार्जनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानसंकल्पः अद्येहेत्यादि अमुकशर्म्मा सवधूकोहं विवाहाङ्गहोमकर्म्मणः सांगफलप्राप्तये साद्गुण्यार्थं इदं पूर्णपात्रं सद्रव्यं ब्रह्मन् तुभ्यं संप्रददे । अक्रन्कर्म्म कर्म्मकृतः सह वाचा मयोभुवा देवेभ्यः कर्म्म कृत्वा ऽस्तं प्रेत सचाभुव इति मंत्रपाठः ॥❁॥ अत्रैव स्वाचार्य्याय वरं ददाति गौर्ब्राह्मणस्य वरः ग्रामो राजन्यस्य अश्वो वैश्यस्य तत्तद्वराभावे विभवानुसारेण सुवर्णादि द्रव्यं दद्यात् तत्र संकल्पः अद्येहेत्यादि अमुकराशिरमुकशर्म्मा सवधूकोहं विवाहांगहोमकर्म्मणः सांगफलप्राप्तये साद्गुण्यार्थं इमां गां इदं गोप्रत्याम्नायीभूतं सुवर्णादिद्रव्यं वा वरत्वेन आचार्य्याय तुभ्यं सम्प्रददे यज्ञसाधनभूताया इत्यादिमन्त्रेण आचार्य्याय गवादिकं समर्प्य भूयसीं संकल्पयेत् अद्येहेत्यादि अमुकशर्म्मा सवधूकोहं विवाहकर्म्मणः साद्गुण्यार्थम् इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकेभ्यो दीनाऽनाथेभ्यश्च विभज्य दास्ये ॐतत्सत् इति संकल्प्य भूयसीं विभज्य अभिषेकतिलकन्याद्युपकरणरक्षासूत्रबन्धनघृतच्छायादर्शनमंत्रपाठादिकं कारयेत् अथ दिवा चेद्विवाहस्तदास्तमितेऽर्के रात्रौ चेद्विवाहस्तदा वरदानानन्तरं वधूं वरो ध्रुवं दर्शयति अमुकि ध्रुवमीक्षस्वेति प्रेषिता वधूर्ध्रुवं मंत्रेण प्रेक्षते ( ध्रुवमसीति प्रजापतिर्ऋषिः पंक्तिश्छन्दो ध्रुवो देवता ध्रुवोदीक्षणे विनियोगः ) ॐध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदाद्बृहस्पतिः मया पत्या प्रजावती सञ्जीव शरदः शतम् । इति वरोच्चारितेन मंत्रेण सह वधूः पश्येत् सा यदि ध्रुवं न पश्येत् तथापि पश्यामीत्येव ब्रूयात् । अथ वरवध्वोस्त्रिरात्रनियमाः अक्षारालवणाशिनौ स्याताम् । अधः शयीयाताम् । संवत्सरं षट्रात्रं त्रिरात्रं वा न मिथुनीभावमुपेयाताम् । इतिनियमाः ततः पञ्चघोषपूर्वकं विवाहमण्डपादभ्यन्तरे गत्वा जीवमातृपूजनं कुर्यात् स्वासन उपविश्याचम्य अर्घं संस्थाप्य प्राणानायम्य संकल्पः अद्येहेत्यादि अमुकशर्म्मा सवधूकोहं विवाहकर्म्मण उत्तराङ्गत्वेन सर्वाभ्युदयप्राप्तये पट्टलिखितानां कल्याण्यादिजीवमातॄणां पूजनं करिष्ये एतन्त इत्यादि ॐभूर्भुवः स्वः कल्याण्यादि जीवमातर इहागच्छन्तु सुप्रतिष्ठिता वरदाभवन्तु ध्यानम् कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा । जया च विजया चैव सप्तैता जीवमातरः ॥ इति ध्यात्वा नाममंत्रैः पूजनम् ॐकल्याण्यै नमः ॐमङ्गलायै नमः ॐभद्रायै नमः ॐपुण्यायै नमः ॐपुण्यमुख्यै नमः ॐजयायै नमः ॐविजयायै नमः इति मंत्रैः पाद्यादि नैवेद्यान्तं सम्पूज्य नाममंत्रेण जपं विधाय ॐवसोःपवित्रमसीति वसोर्धाराः पातयित्वा नीराजनं विधाय पुष्पाञ्जलिं दद्यात् ॐब्रह्माणी कमलेन्दुसौम्यवदना

---

❁ अत्र केचन पूर्णाहुतिमपीच्छन्ति वदन्ति च-विवाहे व्रतबन्धे च शालायां चौलकर्मणि । गर्भादानाधिसंस्कारे पूर्णाहुतिं न कारयेत्-इति गोभिलगृह्यभाष्ये गर्भाधानप्रकरणोक्तं वाक्यं साग्निकविषयकं न तु निरग्निकविषयकमिति अत्र च तैः संस्कारभास्करोक्तम् ( वधूदक्षकरस्पृष्टे स्रुवे संस्थापयेद्वरः । घृतपुष्पफलादीनि पूर्णार्थीश्चाहुति चरेत् ) वचनं प्रमाणत्वेनोद्धृयते । अस्माकं त्वत्रेदं मतं—लोकाचारस्तावदादौ विचिन्त्यो देशेदेशे या स्थितिः सैव कार्या—इति नियमानुसारं यत्र यत्र विवाहादिषु पूर्णाहुतिप्रथा प्रचलति तत्रत्यैरवश्यमेव कार्या मृडनामानमग्निं प्रतिष्ठाप्य मूर्द्धानन्दिवेति मंत्रेण लाजाप्रक्षेपः कर्त्तव्यः । यत्र तु नेयं प्रथा तैस्तत्राग्रहो न कर्तव्य इति अत्र विज्ञा एव प्रमाणम् । —सम्पादकः

माहेश्वरी लीलया कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी । वाराही घनघोरघर्घरमुखी ऐन्द्री च वज्रायुधा चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ इतिपुष्पाञ्जलिः अथ दक्षिणासंकल्पः अद्येहेत्यादि अमुकशर्म्मा सवधूकोहं विवाहकर्म्मणि उत्तराङ्गत्वेन जीवमातृपूजनकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् दक्षिणां दद्यात् समस्त्ये० इति मंत्रपाठः ॥ ततः श्वश्र्वादिभिः सुवासिनीभिर्म्महानीराजनपूर्वकं कृतपिष्टातकादितिलको वरोऽञ्चलग्रन्थिवस्त्रं स्ववध्वा एव समीपे निधाय धौतमुष्णीषं धौते वाससी च परिधाय स्वपक्षीयैः पुरुषैः सह श्वशुरगृहे बहुविधमोदनादि भक्ष्यं भुक्त्वा रात्रौ यथासुखं शयीत । अर्द्धरात्रादूर्ध्वं विवाहलग्ने सति भोजनानन्तरं विवाहलग्नं कुर्य्यात् ततः प्रभाते नित्यकर्म्म समाप्य द्वारपूजायां प्रथमवरणलब्धं कुण्डिकादारुपीठादि वस्तु आप्तपुरुषद्वारा स्वगृहं प्रति सम्प्रेष्य मुकुटादि परिधाय सवधूको वरः श्वश्रूश्वशुरयोः पादावभिवन्द्य तन्नेदिष्टानन्यांश्चाभिवन्द्य वध्वा देहलीपूजां कारयित्वा सोत्साहो गणेशादिदेवतानामान्युच्चरन् वहिरागत्य वधूं श्वशुरपुरुषवाह्यशिविकादियानमारोप्य अग्रतः कृत्वा ततोनुस्वयमपि यानान्तरमारुह्य श्वशुरादिदत्तं सर्वं यौतुकजातं निजाप्तपुरुषायत्तं विधाय मङ्गलतूर्य्यघोषपुरस्सरं अन्यैर्जन्यमनुजैः सह स्वगृहं प्रत्यागच्छेत् ॥

## तिलपात्रविधिः

अथ कन्यापिता सपत्नीकस्तिलपात्रदानं दत्वा अच्छिद्रविधानमाचरेत् तद्यथा नित्यकर्मान्ते सुलिप्तायां भूमौ तिलपात्रसामग्रीं सम्पाद्य स्वासने प्राङ्मुख उदङ्मुखो वोपविश्याचम्य इष्टदेवाय पुष्पाञ्जलिं समर्प्य सामान्यार्घं संस्थाप्य सूर्यार्घं दत्वा विशेषार्घं संस्थाप्य तेन जलेनात्मानं तिलपात्रसामग्रीं च संप्रोक्ष्य ॐहिरण्यगर्भेत्यादिना तिलसुवर्णसहितं ताम्रपात्रं गन्धाक्षतपुष्पैः संपूज्य पवित्रपाणिः संकल्पं कुर्यात् ॐविष्णुः ३ अद्येहेत्यादि अमुकः सपत्नीकोहं यथाशक्तिकृतस्य कन्यादानकर्मणः सांगतासिद्धिद्वारा श्रीपरमेश्वरप्रीतये ससुवर्णमिदं तिलपात्रं ब्राह्मणाय दास्ये ॐतत्सन्न मम । ब्राह्मणं अर्घादिभिः संपूज्य दद्यात् दानवाक्यम्—तिलाः पुण्याः पवित्राश्च । सर्वकामफलप्रदाः शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च । तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः । विष्णोः प्रीतिकरा नित्यमतः शान्तिं प्रयच्छथ ॥ विप्रश्च ॐस्वस्तीत्युक्त्वा ॐकोदादित्यादिना प्रतिगृह्णीयादिति तिलपात्रम् ॥

## अथाच्छिद्रविधिः

तत्र संकल्पः ॐविष्णुः ३ अद्येहेत्यादि सपत्नीकोहं कन्यादानाङ्गव्रतोपवासकर्मणि अच्छिद्रतासिद्ध्ये न्यूनातिरिक्तपरिपूर्त्यर्थं अच्छिद्रविधानमाचरिष्ये । श्रीविष्णुपादोदकं सतुलसीदलं अर्घस्थितं करयोः कृत्वा प्रार्थयेत् तत्र मंत्राः—ॐव्रतानां व्रतराजेन्द्र व्रतानां व्रतमुत्तमम् । व्रतच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ सर्व्वं भवतु मेऽच्छिद्रं ब्राह्मणा भवतां गिरा । ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ॥ सर्वदेवमयो विप्रो न तद्वचनमन्यथा । उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः ॥ विप्रैः सम्भाषितं सर्वं सम्पूर्णं भवति ध्रुवम् । अन्नव्यञ्जनपानेषु शय्यायां ताम्रभाजने ॥ यदिभुक्तमभुक्तं वा स्वप्नान्तरमथापि वा । दन्तान्तरवि-

लग्नं वा लभ्यता मधुसूदन ॥ व्यासवाल्मीकिवचनात्पाराशर्यवशिष्ठयोः ॥ गर्गगौतमधौम्यात्रिकश्यपाङ्गिरसां तथा ॥ वचनान्नारदादीनां सम्पूर्णं भवतु व्रतम् ॥ ॐकृतमेतत्कन्यादानांगोपवासव्रतं मया विधिहीनं देशहीनं कालहीनं क्रियाहीनं श्रद्धाहीनं दक्षिणाहीनं यत्कृतं तत्सुकृतमस्तु यन्न कृतं तच्छ्रीविष्णोः प्रसादाद् ब्राह्मणानां वचनात्सर्व्वं परिपूर्णमस्तु ॐ अस्तु परिपूर्णं इतिब्राह्मणप्रतिवचनं प्रतिगृह्य सतुलसीदलं चरणामृतं पात्रान्तरेण पिबेत् तत्र मन्त्रौ ॐअकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ नैमिषाच्च प्रयागाच्च गङ्गासागरसङ्गमात् । कुरुक्षेत्राद्दशगुणं शालग्रामशिलोदकम् ॥ इति पीत्वा शेषं शिरसि धारयेच्च ॥ ॐप्रमादात्कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐविष्णवे नमः ३ । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐअच्युताय नमः ३ कर्मेश्वरार्पणकरणम् ॐकायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः । ॐकर्मसाक्षिणे श्रीनारायणाय नमः इत्यर्घोदकं देवदक्षिणहस्ते समर्प्य आचम्य यथाशक्तिब्राह्मणान्सम्भोज्य स्वयमपि भुञ्जीतेति ॥ इति अच्छिद्रविधिः ।

ततो वरो निजगृहाजिरमागत्य सजलकलशान् स्त्रीबालादीन् द्रव्येण सन्तोष्य यानात्स्वयमुत्तीर्य्य वधूं चावरोह्य पित्रोश्चरणयुगयोःस्वर्णादिमुद्रां निधायाभिवन्द्य पितृव्यादीन् ज्येष्ठांश्चाभिवन्द्य कृतमुकुटादिधारणां वधूमग्रतः कृत्वा बद्धाञ्जलिः पिष्टातकस्वस्तिकांकितगोधूमशष्कुल्यलंकृतपट्टाच्छन्नगृहसोपानमधिरुह्य द्वाराद्बहिरासने समुपविश्याचम्य प्राणानायम्य अर्घं संस्थाप्य द्वारमातृः पूजयेत् तत्रसंकल्पः अद्येह अमुकशर्म्मा सवधूकोहं करिष्यमाणस्वगृहप्रवेशकर्म्मणः पूर्वाङ्गत्वेन द्वारमातृणां पूजनं करिष्ये इति संकल्प्य कुमारी धनदा नन्दा विपुला मङ्गलाऽचला । पद्मा चैव समाख्याताः सप्तैता द्वारमातरः ॐकुमार्य्यै नमः ॐधनदायै नमः ॐनन्दायै नमः ॐविपुलायै नमः ॐमङ्गलायै नमः ॐअचलायै नमः ॐपद्मायै नमः इति ध्यानादिनीराजनान्तं सम्पूज्य वसोर्धाराः पातयित्वा तासां यथावत्पूजां विधाय लग्नदानं कुर्यात् अद्येह अमुकशर्म्मा सवधूकोहं मम गृहप्रवेशलग्नाद्यत्रकुत्रस्थानस्थितानामादित्यादिनवग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टफलोपशांतिपूर्व्वकशुभफलप्राप्त्यर्थं इदं सुवर्णादिद्रव्यं नानागोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे तत्सन्नमम इति संकल्प्य दक्षिणां दत्वा दापयित्वा च स्वस्तिवाचनपूर्वकं गृहं प्रविश्य वधूं स्वासने समुपवेश्य स्वयं च समुपविश्य स्पर्शादिजनितदोषापनुत्यै आपोहिष्ठादिभिर्मार्जनं विधाय अर्घ्यं संपाद्य कुशतिलयवजलान्यादाय प्राङ्मुख उदङ्मुखो वा भूत्वा अद्येह अमुकशर्म्मा सपत्नीकोहं गृहप्रवेशकर्म्मण उत्तराङ्गत्वेन उत्तरोत्तराभ्युदयप्राप्तये पट्टलिखितगणपतिसहितकल्याण्यादि सप्तजीवमातॄणां पूजनं करिष्ये इति संकल्प्य एतन्तइति प्रतिष्ठाप्य ध्यानं कल्याणी मंगला भद्रा पुण्या पुण्यमुखी तथा । जया च विजया चैव सप्तैता जीवमातरः ॥ इति ध्यात्वा नाममंत्रैरावाहनादि नीराजनान्तं सम्पूज्य गुडसर्पिर्भ्यां वसोर्धाराः पातयित्वा ब्रह्माणीत्यादि सम्प्रार्थ्य दक्षिणासंकल्पं कुर्य्यात् अद्येह अमुकशर्म्मा सवधूकोहं गृहप्रवेशकर्म्मण उत्तराङ्गत्वेन कुड्यादिलिखितगणपतिसहितकल्याण्यादिसप्तजीव-

मातृपूजनकर्म्मणः सांगतासिद्ध्यै साद्गुण्यार्थं च इमां दक्षिणां आचार्याय दास्ये इति संकल्प्य दक्षिणां दत्वा अन्येभ्यो भूयसीं च दत्वा आशिषं प्रतिगृह्णीयात् तत्र वरमात्राद्याः सुवासिन्यो वधूवरयोः तदिष्टानां बान्धवानां च महानीराजनपूर्वकं तिलकादि कुर्युः । ततोऽभिषेकमंत्रपाठाज्यच्छायादर्शनादिकं कुर्यात् ततो वधूवरौ गुडदध्यादिप्राशनं कुर्याताम् ततो वरपिता सुवासिनीभ्यः स्वेष्टेभ्यो नटनर्त्तकगायकेभ्यो वादकादिभ्यश्च यथारुचि यथाशक्तिपारितोषिकं द्रव्यवस्त्रभोजनादि दद्यात् ॥ इति यजुर्वेदाध्यायिमाध्यंदिनशाखिनां ब्राह्मविवाहपद्धतिः ॥



## अथ चतुर्थीकर्मपद्धतिः

, चतुर्थ्यामपररात्रेऽभ्यन्तर तोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीति सूत्रम् । यथा विवाहचतुर्थदिवसे अपररात्रेऽरुणोदयतः प्राक् उद्वर्त्तनपूर्वकं वधूवरौ स्नापयित्वाऽलंकृतस्य वरस्य दक्षिणतोऽलंकृतां वधूं वध्वा उत्तरतो वरमुपवेशयेत् अथ वरस्त्रिराचम्य अर्घं संस्थाप्य प्राणानायम्य गणेशपूजनं कुर्यात् तत्र संकल्पः अद्येह अमुकशर्मा सवधूकोऽहं करिष्यमाणविवाहांगचतुर्थीकर्माख्यकर्मणि निर्विघ्नतया कार्यसिद्धये श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति यथाविधि गणेशं सम्पूज्य ( पृ० १-३ ) प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं ममास्या वध्वाः सोमाद्युपभुक्तिदोषपरिहृत्यै विवाहव्रतसमाप्तिविहितं विवाहांगचतुर्थीकर्म करिष्ये तत्पूर्वांगत्वेन गणपतिसहितगौर्यादिषोडशमातॄणां पूजनं करिष्ये इति संकल्प्य यथाविधि मातः सम्पूज्य वसोर्धाराः संपाद्य आचारात् कृताप्लावसन्ध्यावन्दनब्राह्मणद्वारा पुण्याहं वाचयित्वा होमवेदीं संपाद्य तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य वेद्या ईशाने कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य ब्रह्मणो वरणं कुर्यात् अद्येह अमुकशर्माऽहं करिष्यमाणचतुर्थीकर्मांगहोमकर्मणि कृताकृतावेक्षणाय ब्रह्मकर्म कर्तुं ब्रह्मणः पूजनपूर्वकं वरणं करिष्ये ब्रह्माणं ब्रह्मयज्ञानमिति गन्धादिभिः सम्पूज्य वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यैः करिष्यमाणचतुर्थीकर्मांगहोमकर्मणि कृताकृतावेक्षणाय ब्रह्मकर्म कर्तुं ब्रह्मन् त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः ततः पूर्वतः स्थापिताग्नेः पश्चादुपविश्य दक्षिणतो ब्रह्माणमुपवेश्य प्रणीतास्थानादुत्तरतस्ताम्राद्युदपात्रं प्रतिष्ठाप्य ब्रह्मोपवेशनादि स्रुवेण मध्ये दीर्घाकाराहुतीरित्यन्तं विधाय देवताभिध्यानं करोति अद्येहेत्यादि अमुकशर्मा सवधूकोहं अस्या वध्वा सोमाद्युपभुक्तिदोष परिहारार्थं ॐतत्सत् श्रीपरमेश्वरप्रीत्यर्थं चतुर्थीकर्मणा यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोमं अग्निं वायुं सूर्यं चन्द्रमसं गन्धर्वं च आज्येन प्रजापतिं चरुणा अग्निं स्विष्टकृतं चर्वाज्येन अग्निं वायुं सूर्यं अग्नीवरुणावग्नीवरुणावग्निवरुणौ सवितारं विश्वान्देवान् मरुतः स्वर्कान् वरुणमदितिं प्रजापतिं चाज्येनाऽहं यक्ष्ये इदमाज्यं इदं चरुद्रव्यं च तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु इति द्रव्यत्यागं विधाय एतन्त० इति शिखिनामाग्निं प्रतिष्ठाप्य ॐभूर्भुवः स्वः शिखिनामाग्ने इहागच्छेहतिष्ठ सुप्रतिष्ठितो वरदो भव ॐतदेवाग्निरिति ॐचत्वारिशृङ्गा इति ॐशिखिनामाग्नये नम इति नाममंत्रेण च ध्यानादिनीराजनान्तं सम्पूज्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा जुहुयात् ॐप्रजापतये स्वाहा इदं प्र० । ॐइन्द्राय स्वाहा इदमिं० । ॐअग्नये स्वाहा इ० अ० । ॐसोमाय स्वाहा इदं सो० । अन्वारम्भं त्यक्त्वा आज्येन प्रधानहोमः ( अग्नेप्रायश्चित्त इत्यादीनां

पश्चानां मन्त्राणां परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता चतुर्थीकर्माङ्गाज्यहोमे विनियोगः ) ॐअग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । इदमग्नये उदपात्रे संस्रवप्रक्षेपः १ ॐवायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं वायवे उदपात्रे संस्रवप्रक्षेपः २ ॐसूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं सूर्याय उदपात्रे संस्रवप्रक्षेपः ३ ॐचन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं चन्द्रमसे उदपात्रे संस्रवप्रक्षेपः ४ ॐगन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गन्धर्वाय उदपात्रे संस्रवप्रक्षेपः ५ इत्याज्येन हुत्वा स्थालीपाकमाज्येनाभिघार्य स्रुवेणादाय जुहोति ॐप्रजापतये स्वाहा । इदं प्रजापतये उदपात्रे संस्रवप्रक्षेपः । तत आज्यचरुणी गृहीत्वा अन्वारब्धो जुहुयात् ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते । ततो ब्रह्मणान्वारब्धो भूराद्या नवाहुतीराज्येन जुहुयात् ( व्याहृतीनां प्रजापतिरृषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः होमे विनियोगः ) ॐभूः स्वाहा इदमग्नये । ॐ भुवः स्वाहा इदं वायवे । ॐ स्वः स्वाहा इदं सूर्याय । ( त्वन्नोऽअग्न इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः ) ॐत्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्याम् । ( सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः ) ॐसत्वन्नोऽअग्ने वमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो न ऽएधि स्वाहा । इदमग्नीवरुणाभ्याम् । ( अयाश्चाग्न इति प्रजापतिरृषिर्विराट्छन्दोग्निर्देवता होमे विनियोगः ) ॐअयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा । इदमग्नये । ( ये ते शतमिति वामदेव ऋषिर्जगतीछन्दो वरुणसवितृविष्णुविश्वेदेवामरुतःस्वर्का देवताः प्रायश्चित्तहोमे विनियोगः ) ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यः । ( उदुत्तममिति शुनःशेफ ऋषिस्त्रिष्टुप्छन्दो वरुणादिती देवते प्रायश्चित्तहोमे विनियोगः ) ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा । इदं वरुणायादित्यै । ॐअग्नये प्रजापतये स्वाहा । इदमग्नये प्रजापतये । ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते । ततः संस्रवप्राशनम् पवित्रयोरग्नौ प्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानम् अद्येह अमुकशर्म्मा सवधूकोऽहं कृतस्यास्य चतुर्थीकर्म्माङ्गहोमकर्म्मणः सांगतासिद्ध्यै इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यमहं सम्प्रददे इति संकल्प्य ब्रह्मणे पूर्णपात्रं दद्यात् ब्रह्मा च अक्रन्कर्म्मेत्याशिषं दद्यात् अथ पूर्व्वस्थापितादुदपात्रादुदकमादाय वरो वधूमूर्द्धन्यभिषिञ्चति(या त इति प्रजापतिरृषिस्त्रिष्टुप्छन्दो वधूर्देवता अभिषेचने विनियोगः ) ॐया ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं ततऽएनां करोमि सा जीर्य्य त्वं मया सहासौ अमुकिदेवि इत्यन्तेन मन्त्रेण । अत्रैव वध्वाः आचारात्पत्या स्वनामाद्यवर्णा-

वरानुकूलं सुन्दर्यादिपदान्तं द्वितीयं नामकरणं युक्तम् । अथ वरो वधूं हुतशेषं स्थालीपाकं प्राशयति सकृत् ( प्राणैस्त इति प्रजापतिऋ-
द० प० षिर्यजुश्छन्दो वधूर्देवता वध्वाः स्थालीपाकप्राशने विनियोगः ) ॐप्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा
त्वचम् ॥इतिमंत्रेण भर्त्रा पठितेन हुतशेषं स्थालीपाकं वधूः सकृत्प्राश्नाति । अथ देशाचारात्स्थालीपाकस्य ग्रासपञ्चकं तूष्णीं वधूं प्राश- चतुर्थी०
यति वरः । अत्रावसरे वध्वाः दक्षिणस्कन्धस्योपरि स्वदक्षिणभुजस्य पाणितलं निधाय मन्त्रं पठन् हृदयं स्पृशति वरः । मंत्रः ( यत्ते ९६
इति प्रजापतिऋषिस्त्रिष्टुप्छन्दो हृदयं देवता हृदयालम्भने विनियोगः ) ॐयत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितं वेदाहं तन्मां
तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम् । इति अथाचारात्कलशं त्रिःप्रदक्षिणीकृत्य गजदन्तादिनिर्मि-
तयाऽभिनवकंकतिकया वध्वाः सीमन्तोन्नयनं च विधाय शिखिनामाग्नौ पूर्णाहुतिं च हुत्वा अञ्चलग्रन्थिं कंकणं च मोचयेत् कंकण-
विमोचने मंत्रः—कंकणं मोचयाम्यद्य रक्षोघ्नं रक्षणं मम । मयि रक्षां स्थिरां कृत्वा स्वस्थानं गच्छ कंकण । ततः पाणिप्रतपनाद्यं-
गालम्भान्तं कर्म्म समाप्य दक्षिणासंकल्पं कुर्यात् अद्येह अमुकशर्म्मा सपत्नीकोऽहं कृतस्यास्य चतुर्थीकर्म्मणः सांगतासिद्ध्यर्थं इमां
दक्षिणां आचार्य्याय तुभ्यं सम्प्रददे तथाऽन्येभ्यो ब्राह्मणेभ्यश्च दास्ये ॐतत्सत् इति संकल्प्य ब्राह्मणेभ्यो दक्षिणां दत्वा त्र्यायुषरक्षा-
बन्धनघृतच्छायादर्शनाभिषेकतिलकमंत्रपाठाशीर्ग्रहणादीनि विधाय आचम्य यस्य स्मृत्येति पठित्वा ॐअच्युताय नमः इति त्रिरुच्चार्य्य
नमस्कृत्य द्विजान्प्रणम्य बहिरागत्य सूर्य्यं प्रणमेत् ततो गृहं प्रविश्य इष्टैः सह यथासुखं विहरेत् ततो मध्याह्नादर्वाक् वरमाता सुभू-
षणाः संगताः गायन्तीः सुवासिनीरग्रतः कृत्वा मातृकाश्चितफलकमुत्थाप्य वंशपात्रे निधाय शुद्धरक्तवस्त्रेणाच्छाद्य दास्यादिमूर्द्धनि
निधायाऽग्रतः प्रस्थाप्य बद्धाञ्चलौ धृतमुकुटादिभूषणौ वधूवरौ शंखघंटातूर्य्यादिवादकाँश्चाग्रतः कृत्वा वाप्यादिजलाशयं गत्वा तत्र
गन्धादिना जलमातॄर्विलिख्य ताः पूजयेत् यथा एतन्तइत्यादि प्रतिष्ठाप्य ॐमत्स्यै नमः १ ॐकूर्म्यै नमः २ ॐवाराह्यै नमः ३ ॐ
कुक्कुट्यै नमः ४ ॐदर्दुर्य्यै नमः ५ ॐजलूक्यै नमः ६ ॐसोमायै नमः ७ इति नाममंत्रैः ध्यानादि नीराजनान्तं सप्तजलमातॄः सम्पू-
ज्य वरमाता अन्याभिः सुवासिनीभिश्च समं समातृकाफलकं वंशपात्रं यथाक्रमं शिरसि निधाय सोत्साहं नृत्यं कुर्य्यात् ततस्तं
फलकं सवंशपात्रं गृहीत्वोत्थाय जलसमीपे तल्लिखितमातॄर्विसर्जयेत् ततस्तत्र च कस्यचित्क्षीरिवृक्षस्य प्रदक्षिणं प्रक्रममाणयोर्वधूवरयोः
शिरसोर्मुकुटे अवरोह्य तस्य वृक्षस्य शाखायां वरमात्राद्या बन्धयेयुः अथ नानागीतानि गायन्त्यस्तास्स्त्रियो वधूवराभ्यां सह जलाशयाद्-
गृहं प्रत्यागच्छेयुः । ततस्ता वधूवरयोर्गृहाङ्गणे उपविश्य तन्मध्ये गोमयोदकेनोपलिप्य तत्र तण्डुलपिष्टोदकेन श्यामां देवीं विलिख्य
गायन्त्य एव तां सम्पूजयेयुः ततो यथावृद्धाश्रुताः श्यामागाथाः कथयेयुः ततो मंगल्यगानपुरस्सरं गृहं प्रविश्य देहलीमध्ये उपविश्य
संबन्धिदत्तं महालड्डुकयुग्मं खंडपेषणाश्मादिना विभेद्य सोत्साहं मिथो विभजेयुः ततः सर्वारम्भदिवसाऽधिवासितताम्रकटाहेऽपूपादिकं
पाचयित्वा मिथः सुवासिनीभ्यो विभजेयुः ततो वरस्य माता स्नुषाया विवाहमहपरिहितानि वासांसि तस्या ननान्द्रे दद्यात् तदलाभे
स्वपुरोहिताय दद्यात् ॥ ॥ इतिचतुर्थीकर्म्मपद्धतिः ॥ ॥

# अथ द्विरागमनविधिः

शुभेऽह्नि फेणिकादिकं पाचयित्वा पेटायां निधाय शिविकाद्यं यानमारुह्य श्वशुरगृहं गत्वा श्वशुरावभिवन्द्य तत्कृतार्चामुररीकृत्य भोजनं विधाय गणपतिं सम्पूज्य शुभे लग्ने वधूं प्रस्थाप्य श्वशुरावभिवंद्य ताभ्यां कृततिलकः पुरस्कृततद्दत्तयौतुकः सवधूको निजगृहमागत्य स्वदेशरीत्या देहलीसमीपे मिथोऽञ्चलग्रन्थिं सम्पाद्य स्वासने समुपविश्य स्ववामभागे पृथक्पीठे वधूमुपवेश्य आचम्य अर्घं संस्थाप्य प्राणानायम्य संकल्पं कुर्यात् अद्येह अमुकशर्मा सपत्नीकोऽहं मम द्विरागमनाङ्गगृहप्रवेशकर्म्मणि श्रीगणपतेर्द्वारमातॄणां च पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं द्वारमातॄश्च सम्पूज्य लग्नदानं कुर्य्यात् अद्येह अमुकशर्म्मा सपत्नीकोहं मम द्विरागमनांगगृहप्रवेशलग्नाद्यत्रकुत्रस्थानस्थितानां आदित्यादिनवग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टदोषोपशान्त्यर्थमिदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा पुरोहितदैवज्ञादिब्राह्मणेभ्यो दातुमहमुत्सृजे ॐतत्सन्न ममेति संकल्प्य दक्षिणां दत्वा स्वस्तिवाचनपुरस्सरं गृहं प्रविश्य भित्तिलिखितजीवमातॄणां सविधे गत्वा विधिवत्ताः सम्पूज्य आन्नारात्कलशं संस्थाप्य वध्वा सह तं प्रदक्षिणीकृत्य दक्षिणासंकल्पं कुर्य्यात् अद्येह अमुकशर्मा सपत्नीकोऽहं द्विरागमनांगगृहप्रवेशकर्मण उत्तरांगत्वेन भित्तिलिखितकल्याण्यादिजीवमातृपूजाकर्मणः सांगतासिद्ध्यै इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् दक्षिणां दत्वा अभिषेकतिलकमंत्रपाठादि कारयित्वा अञ्चलग्रन्थिं विमोच्य तत्रैव दधिगुडफेणिकादि भुक्त्वा मुखं प्रक्षाल्य वधूवरौ यथासुखं विहरेताम् ॥

# अथाऽर्कविवाहः

तृतीयविवाहात्प्राक् दिनचतुष्टयाधिकव्यवहिते रविवासरे शनिवासरे वा हस्तर्क्षेऽन्यस्मिन् शुभर्क्षे वा शुभतिथौ चन्द्रानुकूल्यादिसहिते शुभदिने प्राच्यामुदीच्यां वा फलपुष्पाक्षतादियुक्तोऽर्कसविधे गत्वा तदधस्तात्स्थण्डिलं निर्माय अर्कसमीपमुपविश्याऽर्कविवाहसामग्रीं सम्पाद्य गणेशं पूजयेत् अद्येहाऽमुकोहं अर्क्कविवाहकर्मणि निर्विघ्नताप्राप्त्यै भगवतो गणेश्वरस्य पूजनं करिष्ये इति संकल्प्य गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं मम तृतीयमानुषीपरिणयनदोषपरिहारार्थं शुभफलप्राप्तये तृतीयविवाहाधिकारसिद्ध्यर्थमर्कविवाहं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये तदङ्गत्वेन आचार्यस्य पूजनं वरणं च करिष्ये इति संकल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि यथाविधि ( पृ० ३–८ ) विधाय आचार्यस्य पूजनं वरणं च कृत्वा ततो वरः अर्कपुरतस्तिष्ठन् सूर्यं प्रार्थयेत्—त्रिलोकव्यापिन्सप्ताश्व च्छायया सहितो रवे। तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥ सूर्यमेवं सम्प्रार्थ्य ततोऽर्कवृक्षे छायासहितमर्कमावाह्य आकृष्णेनेति पाद्यादिभिः सम्पूज्य श्वेतवस्त्रसूत्राभ्यामर्कमावेष्ट्य आपोहिष्ठेत्यादिमन्त्रैरभिषिच्य गुडोदनं ताम्बूलं च समर्प्य प्रदक्षिणीकुर्वन्मंत्रं पठेत् मम प्रीतिकरा चेयं मया सृष्टा पुरातनी। अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु ॥ इति जपित्वा पुनः प्रदक्षिणीकृत्य प्रार्थयेत्—नमस्ते मङ्गले देवि नमः सवितुरात्मने। त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥ अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च। वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः। तृतीयोद्वाहजं दोषं निवारय सुखं

कुरु ॥ इति संप्रार्थ्य संकल्पः अद्येहेत्यादि कश्यपगोत्र—काश्यपवात्स्यनैध्रुवेतित्रिप्रवरान्वितादित्यप्रपौत्रीं सवितुः पौत्रीं ममार्कस्य पुत्रीं
इमां कन्यां अमुकगोत्राय अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकनाम्ने वराय इति गोत्रोच्चारं कृत्वा ततः सुमुहूर्त्ते कन्यां
निरीक्ष्य स्वस्तिवाचनं पठित्वा अथाचार्यो विप्रैः सहाशिषो दत्वा तत आचार्यः पूर्ववद्गोत्रोच्चारं कुर्यात् कश्यपगोत्रां आदित्यस्य
प्रपौत्रीं सवितुः पौत्रीं ममार्कस्य कन्यां अमुकगोत्राय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे इति वरहस्ते जलं दत्वा दानवाक्यं पठेत्
अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति वरस्तु यज्ञो मे कामः समृद्ध्यताम् ।
धर्मो मे कामः समृद्ध्यताम् । यशो मे कामः समृद्ध्यताम् । इत्युक्तैस्त्रिवारं सम्पूज्य सूत्रेण कंकणबन्धनं कृत्वा गायत्र्या अर्कं सूत्रेण
दशवारं पञ्चवारं वा परित्वेत्यादिमन्त्रैर्वेष्टयेत् मन्त्राः ॐपरित्वा गिर्वणो गिरऽइमा भवन्तु विश्वतः वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः
१ ॐइन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोसि ऐन्द्रमसि वैश्वदेवमसि २ ॐविभूरसि प्रवाहणो वह्निरसि हव्यवाहनः श्वात्रोसि प्रचेतास्तुथोसि
विश्ववेदाः ३ ॐउशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्ज्जालीयः सम्राडसि कृशानुः परिषद्योरसि
पवमानो नभोसि प्रतक्वामृष्टोसि हव्यसूदनऽऋतधामासि स्वर्ज्योतिः ४ ॐसमुद्रोसि विश्वव्यचाः अजोस्येकपादहिरसि बुध्न्यो वाग-
स्यैन्द्रमसि सदोस्यृतस्यद्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्रमातिरस्वस्ति मेऽस्मिन्पथि देवयाने भूयात् ५ ॐमित्रस्य मा चक्षुषेक्षध्व-
मग्नयः सगराः सगरास्थ सगरेण नाम्ना रौद्रेणानीकेन पातमाग्नयः पिपृतमाग्नयो गोपायतमा नमो वोस्तु मामाहिᳪसिष्ट ६ ॐ
ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳪसमित् त्वᳪसोमतनूकृद्भ्यो द्वेषोभ्यो न्यकृतेभ्यऽउरुयन्तासि वरूथᳪस्वाहा जुषाणोऽअप्तु-
राज्यस्य व्वेतु स्वाहा ७ ॐअग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् युयोद्ध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽ-
उक्तिं विधेम ८ ॐ अयन्नोऽग्निर्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्रभिन्दन् अयं व्वाजाञ्जयतु व्वाजसा तावयᳪशत्रूञ्जयतु जर्हृषाणः
स्वाहा ९ ॐउरुविष्णो विक्रमस्वोरुक्षयाय नस्कृधि घृतं घृतयोने पिब प्रप्रयज्ञपतिन्तिरस्वाहा १० इतिमन्त्रैः सूत्रमावेष्ट्य तत्सूत्रं
पञ्चगुणं कृत्वा अर्कस्कन्धे बद्ध्वा बृहसोमेति रक्षां कृत्वा ततो वरः आचार्यो वा अष्टदिक्षु कलशान्संस्थाप्य वस्त्रेण त्रिगुणसूत्रेण वा
कलशकण्ठे आवेष्ट्य हरिद्रादि निक्षिप्य तेषु कलशेषु इदं विष्णुरितिविष्णुमावाहयेत् ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य
पाᳪसुरे इत्यावाह्य अर्कस्योत्तरे स्थंडिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य एतन्त इत्यादिना वरदनामाग्निं प्रतिष्ठाप्य पाद्यादिभिः सम्पूज्य
आघाराज्यभागौ हुत्वा द्रव्यत्यागं कुर्यात् अद्येहेत्यादि अर्कविवाहकर्मणाऽहं यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोमं बृहस्पतिं अग्निं अग्निं
वायुं सूर्यं प्रजापतिं चाज्येनाहं यक्ष्ये प्रधानहोममन्त्रौ ( सङ्गोभिरित्यस्याङ्गिरा ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवता आज्यहोमे विनियोगः)
ॐसंगोभिरांगिरसो नक्षमाणो भग इवेदर्य्यमणं निनाय जनेमित्रो न दम्पतीऽअनक्ति बृहस्पतये वाजयाऽऽशूँरिवाजौ स्वाहा । इदं बृहस्पतये
( यस्मै त्वेति वामदेव ऋषिस्त्रिष्टुब्छन्दोऽग्निर्देवताऽऽज्यहोमे विनियोगः ) ॐयस्मै त्वा काम कामाय वयᳪसम्राड्यजामहे तम-
स्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा। इदमग्नये ततो व्यस्तसमस्तव्याहृतिभिर्जुहुयात् ॐभूः स्वाहा इदमग्नये ॐभुवः स्वाहा इदं
वायवेॐस्वः स्वाहा इदं सूर्याय ॐभूर्भुवः स्वः स्वाहा इदं प्रजापतये ततो भूरादिनवाहुतिहोमं विधाय पूर्णपात्रदानान्तं कर्म समाप्य अर्कं

प्रदक्षिणीकृत्य प्रार्थयेत् मया कृतमिदं कर्म स्थावरेषु जरायुणा। अर्काऽपत्यानि मे देहि तत्सर्वं चन्तुमर्हसि ॥ इति सम्प्रार्थ्य शान्तिसूक्तं पठित्वा अर्कप्रतिष्ठितं सूर्यं विसृज्य आचार्याय गोयुग्मं दक्षिणां दद्यात् अन्येभ्योऽपि ब्राह्मणेभ्यो यथाशक्ति दत्त्वा पूजोपकरणानि आचार्याय दत्वा दिनचतुष्टयम् अर्कं कुम्भाँश्च रक्षयेत् ततः पञ्चमे पूर्ववत्प्रपूज्य विसृज्य चैव होमाग्निं विधिना मानुषीं पराम्। उद्वहेदन्यथा नैव पुत्रपौत्रसमृद्धिमान् ॥ गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः। इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चाऽपिशक्तितः। तत्सर्वं गुरवे दत्वा पुण्याहं वाक्यमाचरेत् ॥ एवमर्कविवाहं कृत्वा तृतीयं विवाहं कुर्यात् ॥ इत्यर्कविवाहप्रयोगः ॥

## अथ कुम्भविवाहः❀

तत्र हेतुः—बालवैधव्ययोगे तु कुम्भादिप्रतिमां भुवि। कृत्वा लग्नं ततः पश्चात्कन्योद्वाहं समाचरेत् ॥ विवाहात्पूर्वकाले च चन्द्रताराबलान्विते। विवाहोक्ते शुभे लग्ने कन्यां कुम्भेन चोद्वहेत् ॥ तत्र पुनर्भूदोषाभाव उक्तो विधानखंडे—स्वर्णादिपिप्पलानां च प्रतिमा विष्णुरूपिणी। तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ इति तत्र प्रयोगः पूर्वं गणेशं सम्पूज्य कन्यादानकर्त्ता पित्रादिः देशकालौ संकीर्त्य अद्येह अमुकगोत्राया अमुकराशेरस्याः कन्याया अमुकस्थानस्थितदुष्टग्रहजनितवैधव्यदोषोपशान्तये वैधव्यहरणार्थं कुम्भविवाहं करिष्ये तत्पूर्वांगत्वेन मातृपूजाभ्युदयिकपुण्याहवाचनानि करिष्ये इति संकल्प्य मातृपूजादिपुण्याहवाचनांतं कर्म्म ( पृ० ३–८ ) कृत्वा कलशे नवग्रहानावाह्य सम्पूज्य तस्मिन्कलशे सुवर्णप्रतिमायां विष्णुवरुणौ अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां विष्णुवरुणौ सुप्रतिष्ठितौ भवतम्। पूजासंकल्पः अद्येह अमुकगोत्रा अमुकराशिरमुकीदेव्यहं वैधव्यदोषपरिहारार्थं सुवर्णप्रतिमायां विष्णुवरुणयोः पूजनं करिष्ये इति संकल्प्य ॐविष्णवे नमः ॐवरुणाय नमः इति नाममंत्राभ्यां ॐविष्णोरराटमसि विष्णोःश्नप्त्रेस्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ इति ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो

❀ अथ कन्याया वैधव्ययोगशान्तिर्लिख्यते, वैधव्ययोगश्च प्रश्नलग्नात् जन्मलग्नाच्च सम्भवति उभयथापि शान्तिप्रकारश्चेत्थम्। तत्र प्रमाणम्—जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः। सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा विवाहं स्फुटं दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ॥ अन्वयः–प्रश्नलग्नात् यथा बालविधवायोगो विचार्यते तथैव जन्मोत्थं च ( जन्मलग्नादपि ) बालविधवायोगं विलोक्य हि ( निश्चयेन ) सुतया सवित्र्या व्रतम् उत तथा पैप्पलं व्रतं विधाय इमां ( सुतां ) चिरजीविने वराय दद्यात् वा सल्लग्ने रहः ( एकान्ते ) अच्युतमूर्तिपिप्पलघटैः स्फुटं विवाहं कृत्वा तां चिरजीविने वराय दद्यात् तथाकृते अत्र पुनर्भूदोषः न भवेत् ॥ इति ॥

एते कुम्भविवाह विष्णुप्रतिमाविवाह–पिप्पलविवाहाः पद्धतिलिखितानुसारेण बोध्याः। विवाहात्रयोप्येते कन्याविवाहदिने विवाहात् पूर्वं क्रियन्ते कुम्भाश्वत्थादिविवाहे कृते पुनः पुरुषेण सह जाते विवाहे तु कन्यायाः पुनर्भूदोषस्तु न भवेदेव। यतश्चोक्तं धर्मशास्त्रे यत्किञ्चित् कथितं शास्त्रे शान्तिकं पतिरक्षणे। तत्पापमपि पापं न येनधर्मोऽभिरक्ष्यते। एवं–स्वर्णाम्बुपिप्पलानाञ्च प्रतिमा विष्णुरूपिणी। तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ लक्ष्मीनारायणप्रीत्यै या दत्ता कन्यका बुधैः। तारयेत् सकलं दातुः कुलं पूर्वापरं सदा ॥ चन्द्रगन्धर्ववह्न्यम्बु शक्रसोमस्मरा इमे। पतयः कन्यकानां च बाल्यात् सन्ति सदैव ते। तदुद्वाहर्विधियेनात्कृतो नो जनयेदघम्। यथालिभुक्तं कमलं देव नां पूजनाय वै। अहं भवति सर्वत्र तथा कन्या नृणां भवेत् ॥ दोषः पुनर्भूभव इतिपद्यार्थः ॥

हविर्भिः अहेडमानो वरुणे ह बोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ इति वैदिकमंत्राभ्यां च पाद्यादिनीराजनान्तं विष्णुवरुणौ सम्पूज्य प्रार्थयेत्—देहि विष्णो वरं देव कन्यां पालय दुःखतः । पतिं जीवय कन्यायाश्चिरं देव यथासुखम् ॥ अथ वरुणप्रार्थना-वरुणांगस्वरूपस्त्वं जीवनानां समाश्रयः । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ इति सम्प्रार्थ्य विष्णुवरुणस्वरूपिणे कुम्भाय इमां श्रीरूपिणीं वरार्थिनीं कन्यां समर्पयामि परित्वेत्यादिमंत्रैरधस्तादुपरिष्टाच्च मंत्रावृत्त्या दशतन्तुकेन सूत्रेण कन्यां कुम्भञ्च परिवेष्टय ततः कुम्भं च निःसार्य्य विसृजेत्सलिलाशये पञ्चपल्लवसहितेन जलेन समुद्रज्येष्ठा इत्यादिमन्त्रैः कन्यामभिषिंच्य दक्षिणासंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशेः कन्यायाः अमुकस्थानस्थितदुष्टग्रहसूचितवैधव्यदोषपरिहारार्थं सौभाग्यफलप्राप्तये कुम्भविवाहकर्मणि सुवर्णप्रतिमायां विष्णु-वरुणयोः पूजनकर्मणः साद्गुण्यार्थम् इमां सुपूजितां विष्णुवरुणयोः प्रतिमां आचार्याय दास्ये तथा इमां भूयसीं दक्षिणां च ब्राह्मणेभ्यो विभज्य दास्ये तथा सिद्धान्नेन यथासंख्याकान् ब्राह्मणाँश्च भोजयिष्ये ॐतत्सत् संकल्प्य आचार्याय प्रतिमां सदक्षिणां दत्वा ब्राह्मणेभ्यो दक्षिणां विभज्य अभिषेकतिलकमंत्रपाठादिकं कारयित्वा ब्राह्मणेभ्यो भोजनं च दत्वा कन्याविवाहं कुर्यात् शुभं भवेत् ॥ इति कुम्भविवाहप्रयोगः ॥

## अथ विष्णुप्रतिमाविवाहः ।

कन्याया जन्मकालीनग्रहादिसूचितवैधव्ययोगहरणाय विष्णुप्रतिमाविवाहं पूर्वं कृत्वा पुनः पाणिग्रहणमाचरेत् ॥ तत्र कर्त्ता सुस्नातः स्वाचान्तः स्वासन उपविश्य प्राङ्मुखः पूर्वं विष्णुप्रतिमाविवाहांगत्वेन गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोऽहं अमुकराशेरस्याः कन्याया जन्मसमयलग्नादेर्वैधव्यसम्भावनासूचकैर्ग्रहैः सूचितारिष्टनिवृत्तये सौभाग्यप्राप्तये विष्णुप्रतिमया सह विवाहं करिष्ये प्रतिमादानं च करिष्ये तत्प्रतिग्रहार्थं आचार्यस्य पूजनपूर्वकं वरणं च करिष्ये इति संकल्प्य आचार्यं सम्पूज्य वृत्वा मातृपूजाभ्युदयिकपुण्याहवाचनानि (पृ० ३–८) विधाय विष्णुप्रतिमाया अग्न्युत्तारणपूर्वकं एतन्त इति ॐभूर्भुवः स्वः विष्णुप्रतिमायां विष्णो इहागच्छ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठां विधाय अद्येहेत्यादि अमुकगोत्राया ममाऽस्याः कन्याया जन्मसमयवर्त्तिलग्नादे-र्वैधव्यसम्भावनासूचकैर्ग्रहादिभिः सूचितारिष्टनिवृत्तये सौभाग्यसमृद्धये सुवर्णप्रतिमायां श्रीविष्णोः पूजनं करिष्ये इति संकल्प्य निर्मितां रुचिरां शंखगदाचक्राऽब्जसंयुताम् । दधानां वाससी पीते कुमुदोत्पलमालिनीम् ॥ इति ध्यात्वा ॐतद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ ॐत्रीणि पदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः अतो धर्माणि धारयन् ॥ ॐतद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते विष्णोर्यत्परमं पदम् ॥ इति वैदिकेन ॐविष्णवे नम इति नाममन्त्रेण च आवाहनादिनीराजनान्तं सम्पूज्य प्रार्थयेत् देहि विष्णो वरं देव कन्यां पालय दुःखतः । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु १ वरुणांग स्वरूपस्त्वं जीवनानां समाश्रय । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु २ इति सम्प्रार्थ्य परित्वेत्यादि अर्कविवाहस्थितैर्दशभिर्मन्त्रैः (पृ०–९८) अधस्तादुपरिष्टाच्च मंत्रावृत्त्या कन्यां प्रतिमां च दशतन्तुसूत्रेण परिवेष्टयेत् । ततः किञ्चित्स्थित्वा प्रतिमां निस्सार्य दक्षिणासंकल्पं कुर्यात् अद्येह अमुकोऽहं अमुकराशेरस्या कन्याया वैधव्याद्यशुभफलनिवृत्तिद्वारा सौभाग्यादिशुभफलप्राप्तये कृतस्य विष्णुप्रतिमाविवाहकर्मणः साद्गु-

णयार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये तथैतत्कर्मणो न्यूनातिरिक्तदोषपरिहाराय इमां दक्षिणां भूयसीत्वेन नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये तथाऽमुकसंख्यया ब्राह्मणाँश्च भोजयिष्ये ॐतत्सत् ततो विष्णुप्रतिमादानम् अद्येहेत्यादि अमुकगोत्राऽमुकराशिरमुकीदेव्यहं मम जन्मसमयवर्त्तिलग्नादौ वैधव्यसंभावनासूचकैर्ग्रहादिभिः सूचितारिष्टनिवृत्तये सौभाग्यप्राप्तये इमां सौवर्णीं सुपूजितां विष्णुप्रतिमां अमुकगोत्राय अमुकशर्मणे आचार्याय तुभ्यमहं सम्प्रददे ॐतत्सत् न मम । दानवाक्यम् यन्मया प्राचि जनुषि घ्नन्त्या पतिसमागमम् । विषोपविषशस्त्राद्यैर्हतो वाऽपि विरक्तधा १ प्राप्नुवन्त्या महाघोरं यशः सौख्यधनापहम् । वैधव्याद्यतिदुःखौघं तन्नाशाय सुखाप्तये २ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् । सौवर्णीं निर्मितां शक्त्या तुभ्यं सम्प्रददे द्विज ३ द्विजकरे प्रतिमां दत्वा अनघाहमस्मि इति त्रिर्वदेत् ब्राह्मणश्च द्यौस्त्वा ददातु पृथिवी त्वा गृह्णातु ॐस्वस्ति कोदादिति पठित्वा ॐअनघा भव इति त्रिर्वदेत् ततः कृतैतत्प्रतिमादानप्रतिष्ठासिद्ध्यर्थं इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा ब्राह्मणाय दास्ये इति दत्वा अभिषेकतिलकमंत्रपाठादि कारयित्वा यथा सुखं विहरेदिति विष्णुप्रतिमाविवाहपद्धतिः वैधव्यहरविष्णुप्रतिमादानविधिश्च ॥

## अथ सावित्रीव्रतम्

सावित्रीव्रतं च ज्येष्ठासितामायां त्रयोदशीतस्त्रिदिनात्मकं सम्पन्नं भवति । तदशसामर्थ्ये दर्शे चैकदिनात्मकमपि भवति वैधव्यपरिहारार्थं क्रियमाणस्य व्रतस्यास्य विधानन्तु भविष्यपुराणोक्तम् । यथा—

अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥ गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ॥ सावित्रीप्रतिमां कुर्यात् सौवर्णीं वापि मृण्मयीम् । सार्धं सत्यवता साध्वी फलनैवेद्यदीपकैः ॥ रजन्यां कण्ठसूत्रैश्च शुभ्रैः कुङ्कुमकेसरैः । पूजयेत् परया भक्त्या वित्तशाठ्यविवर्जिता ॥ सावित्र्याख्यानकं ( देवीभागवतोक्तं ) वापि वाचयीत द्विजोत्तमैः । रात्रौ जागरणं कृत्वा प्रभाते विमले ततः । प्रतिमां ब्राह्मणे दत्वा प्रणिपत्य समापयेत् । प्रतिमादानमन्त्रः—सावित्रीयं मया दत्ता सहिरण्या महासती । ब्रह्मणः प्रीणनायास्तु ब्राह्मणः प्रतिगृह्यताम् ॥ इति सावित्रीव्रतम् ॥

## अथ पिप्पलव्रतम्

हेमाद्रौ—पिप्पलव्रतञ्चेदं चैत्रकृष्णतृतीयातोऽथवा आश्विनाऽसिततृतीयातो मासमेकं निरन्तरं क्रियते वैधव्ययोगपरिहारार्थं सौभाग्यावाप्तये च फलश्रुतिश्चास्येत्थम्—बलवद्विधवायोगे बाल्ये सति मृगीदृशाम् । पिता रहसि कुर्वीत तद्व्रतं शास्त्रसम्मतम् ॥ सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते । अवैधव्यकरे योगे लग्ने ग्रहबलान्विते ॥ व्रतारम्भं प्रकुर्वीत बालवैधव्यनाशनम् । सुस्नातां चित्रवसनां कन्यां पितृगृहाद्बहिः ॥ नीत्वाऽश्वत्थशमीस्थाने यद्वा बदरिकाश्रमे । आलवालं प्रकुर्वीत विपुलं मृदु कर्षितम् ॥ कुमार्याचार्यनिर्दिष्टं कृत्वा संकल्पमादरात् । करकाम्बुप्रपूर्णेन सेचनं प्रतिवासरम् । चैत्रेवाश्विनमासे च तृतीयाऽसितपक्षतः । यावत् कृष्णतृतीयाऽन्या मासमेकं यथाविधि । उपचारैर्यथाशक्त्या नैवेद्यैः प्रतिवासरम् । एवं व्रतप्रभावेण बालवैधव्यनिष्कृतिः । जायते कन्यकानां च ततः पाणिग्रहक्रिया ॥ इति पिप्पलव्रतम् ॥

# अथ अश्वत्थविवाहविधिः

द० प० उक्तं च सूर्यारुणसंवादे—सुहृद्द्विजगुरून्नारी मङ्गलोच्चारणैः समम् । आहूयोद्वाहकाले च रम्यभूमौ सुमण्डपे ॥ गत्वा अश्वत्थ.
प्रणम्य गौरीं च गणनाथं च भूरुहम् । भवानीं चैव मन्थानीं पिता मन्त्रमुदीरयेत् ॥ उद्वाहयिष्ये विधिवदश्वत्थेन मनोहराम् । कन्यां
सौभाग्यसौख्यार्थहेतवेऽहं द्विजोत्तम ॥ नमस्ते विष्णुरूपाय जगदानन्दहेतवे । पितृदेवमनुष्याणामाश्रयाय नमोनमः ॥ वनानां १०२
पतये तुभ्यं विष्णुरूपाय भूरुह । नमोनिखिलपापौघनाशनाय नमोनमः ॥ पूर्वजन्मभवं पापं बालवैधव्यकारकम् । नाशयाशु सुखं देहि कन्यायाः मम भूरुह ॥ इति ।

अथ कन्यापिता विवाहात्पूर्वं चन्द्रतारानुकूले शुभदिने स्नात्वा नित्यकर्म समाप्य नवमहतं वासः परिधाय गृहाद्बहिर्वोपवने गत्वैकान्ते पिप्पलसमीपे रम्यभूमौ मण्डपे शुभासने प्राङ्मुखः समुपविश्य स्वदक्षिणतः संस्कार्यकन्यां चोपवेश्य दीपं प्रज्वलय्य स्वाचान्तः स्वस्तिवाचनं शान्तिपाठादिकं कृत्वा सुमुखश्चेत्यादिगणेशादिस्मरणानन्तरं निर्विघ्नतासिद्धये श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति सङ्कल्प्य गणपत्यादिपूजनं कृत्वा सङ्कल्पं कुर्यात् । तद्यथा अद्येहेत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्रायाः अमुकराशेरमुकनामधेयाया अस्याः कन्याया जन्मसामयिकलग्नाद् अमुकस्थानस्थितामुकदुष्टग्रहसंसूचितवैधव्यादिदोषनिराकरणपूर्वकं सौभाग्यप्राप्तिद्वारा भविष्यद्भर्तुरायुरारोग्यैश्वर्यसुखावाप्तये श्रीपरमेश्वरप्रीतये च अश्वत्थेन सह कन्योद्वाहकर्माहं करिष्ये, तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति पूर्वोक्तवद्विधाय कलशं संस्थाप्य तत्र नवग्रहानावाह्य संपूज्य रक्षासूत्रं चाभिमंत्र्य पूजन पूर्वकमाचार्यं वृत्वा । उद्वाहयिष्ये विधिवदश्वत्थेन मनोहराम् । कन्यां सौभाग्यसौख्यार्थं हेतवेऽहं द्विजोत्तम ॥ इति सम्प्रार्थ्य सौवर्णीं विष्णुप्रतिमां अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य पिप्पलवृक्षाधःस्थापितकलशे संस्थाप्य ॐएतंते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वेदेवा स इह मादयन्तामों ३ प्रतिष्ठ ॐभूर्भुवः स्वः श्रीविष्णो इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य कन्याया मङ्गलस्नानं कारयित्वा कङ्कणबन्धननूतनचित्रवस्त्रभूषणादिभिस्तामलंकृत्य पिप्पलसमीपे समानीय कन्याहस्तेन पूजनसङ्कल्पं कारयेत् । अद्येह अमुकगोत्राया अमुकराशेः अमुकनामधेयाया मम जन्मसामयिकलग्नादमुकामुकस्थानस्थितामुकामुकदुष्टग्रहसंसूचितवैधव्यदोषनिराकरणपूर्वकसौभाग्यसमृद्धिद्वारा भविष्यद्भर्तृशरीरारोग्यायुर्वृद्धिकामा श्रीपरमेश्वरप्रीतये श्रीविष्णुस्वरूपपिप्पलपूजनकर्माहं करिष्ये, इति सङ्कल्प्य—ॐविष्णोरराटमसि विष्णोः श्नप्त्रे स्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा । इति पठित्वा श्रीविष्णुस्वरूपिणे अश्वत्थाय नमः, इति यथोपचारैः विष्णुं सम्पूज्य पुष्पाञ्जलिं गृहीत्वा अश्वत्थप्रार्थनां कुर्यात्—नमस्ते विष्णुरूपाय जगदानन्दहेतवे । पितृदेवमनुष्याणामाश्रयाय नमोनमः ॥ वनानां पतये तुभ्यं विष्णुरूपाय भूरुह । नमो निखिलपापौघनाशनाय नमोनमः ॥ पूर्वजन्मभवं (भयं) पापं बालवैधव्यकारकम् । नाशयाशु सुखं देहि कन्याया मम भूरुह । इति सम्प्रार्थ्य मधुपर्केण अर्चयित्वा वस्त्रालङ्कारादीन् समर्प्य कन्याश्वत्थान्तरालेऽन्तःपटं धृत्वा कन्यावस्त्रोपवस्त्रपरिधानानन्तरमन्तः पटमपसार्य

समञ्जनान्ते विवाहोपयोगिमङ्गलपद्यपाठं कारयित्वा कन्यापिता कन्यादानसङ्कल्पं कुर्यात्—ॐविष्णुः ३ इत्यादि अद्येह अमुकोऽहं अमुकगोत्राया ममास्याः कन्याया जन्मसामयिकलग्नात् अमुकस्थानस्थितामुकदुष्टग्रहसंसूचितवैधव्यदोषनिराकरणपूर्वकं सौभाग्यप्राप्तिद्वारा अस्या भविष्यद्भर्तुः शरीरारोग्यायुर्वृद्धिकामः अमुकगोत्रामुकप्रवराम् अमुकनाम्नीं श्रीस्वरूपिणीं वरार्थिनीं इमां कन्यां श्रीविष्णुस्वरूपिणे अश्वत्थाय तुभ्यं सम्प्रददे ॐतत्सत् इति सङ्कल्प्य दत्वा—अद्य वैधव्यदोषनिवृत्तये कृतैतदश्वत्थविवाहकर्मणि कन्यादानप्रतिष्ठार्थं इमां दक्षिणां विष्णुस्वरूपिणे अश्वत्थाय तुभ्यमहं सम्प्रददे, इति समर्पयेत्। तदुत्तरम् ( अञ्चलग्रन्थिबन्धनादि सर्वं विवाहविधिवत्कृत्वा, 'परित्वा'(पृ०-९८) इत्यर्कविवाहस्थैर्दशभिर्मन्त्रैरधस्तादुपरिष्टाच्च मन्त्रावृत्या कन्यामश्वत्थं च दशतन्तुकसूत्रेण परिवेष्टयेत्। ततः किञ्चित् स्थित्वा वेष्टितसूत्राण्यपनीय पञ्चपल्लवजलेन कन्यामभिषिच्य प्रतिमां वैवाहिकवस्त्रादीनि च आचार्याय प्रयच्छेत्। तत्रसङ्कल्पः अद्येह अमुकगोत्रा अमुकराशिरमुकनामधेयाहं मम जन्मसामयिकलग्नाद् अमुकामुकस्थानस्थितामुकामुकदुष्टग्रहसंसूचितवैधव्यदोषनिराकरणपूर्वकभविष्यद्भर्तृशरीरारोग्यायुर्वृद्धिकामा सौभाग्यफलप्राप्तये श्रीविष्णुप्रीतये च इमां सुपूजितां विष्णुप्रतिमां अग्निदैवतां इदं द्रव्यं सप्रतिष्ठम् सदक्षिणं च अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे इति सङ्कल्प्य दद्यात्। ॐस्वस्तीति प्रतिवचनम्। ततोऽभिषेकतिलकविप्राशीर्वादग्रहणम्। सम्प्रदायानुरोधेनान्येभ्योऽपि ब्राह्मणेभ्यो भूयसीदक्षिणादानम्। यथाशक्ति ब्राह्मणभोजनादिकञ्च कार्यम्। ततः कन्याविवाहं कुर्यात्॥ इति अश्वत्थविवाहविधिः॥

## अथ तुलसीविवाहप्रयोगः

यदुक्तं विष्णुयामले—आदावेवाथ तुलसीं वने वा स्वगृहेऽपिवा। मासत्रयेण संवर्ध्य ततो यजनमारभेत्॥ सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा। अथवा कार्तिके मासि भीष्मपंचदिनेषु वा॥ वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः। कृत्वा च रौप्यतुलसीं सौवर्णं स्थापयेत् हरिम्॥ संपूज्यालंकृतां तां च प्रदद्याद्विधिना हरेः। विवाहकर्मवत् सर्वं कर्तव्यं देशिकोत्तमैः॥ इत्यादि।

तत्र विवाहवत्सर्वं मण्डपं वेदीं च निर्माय तुलस्या दामोदरस्यच हरिद्रासुगन्धतैलादिभिर्मङ्गलस्नानं कारयित्वा स्वासन उपविश्य दीपं प्रज्वलय्याचम्य प्राणानायम्य सुमुखश्चेत्यादि पुष्पाञ्जलिं समर्प्य अर्घस्थापनं कृत्वा सूर्यायार्घं दत्त्वा भूतोत्सादनपूर्वकं पुनरर्घं संस्थाप्य संकल्पः—ॐविष्णुः ३ अद्येहेत्यादि अमुकोहं करिष्यमाणतुलसीविवाहकर्मणि निर्विघ्नतासिद्धये श्रीगणेश्वरस्य पूजनं करिष्ये इति यथाविधि ( पृ० १–३ ) गणेशं सम्पूज्य प्रधानसंकल्पः—ॐविष्णुः ३ अद्येहेत्यादि अमुकोऽहं ममाखिलविधपातकशमनपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीतये ( राधादामोदरप्रीत्यर्थं वा ) तुलसीविवाहं करिष्ये तत्पूर्वाङ्गत्वेनाखण्डदीपस्थापनं मातृपूजानान्दीश्राद्धपुण्याहवाचनानि ग्रहपूजनं च करिष्ये। इति संकल्प्य पूर्वोक्तरीत्या ( पृ० ३–१२ ) मातृपूजादि सर्वं विधाय पञ्चघोषपूर्वकं शिविकादिना आगतं श्रीभवन्तं वरमानेतुं कतिचित् पदानि गत्वा द्वारमानाय्य यथाशक्ति पुष्पाञ्जलिसमर्पणपूर्वकं यानादवतार्य स्वस्तिकादिशोभितायां शुद्धायां भूमौ स्वासने प्राङ्मुखमुपवेश्य स्वयमुदङ्मुख उपविशेत् आचम्य प्राणानायम्य आपद्घनध्वान्त० इति आचार्यपादौ प्रक्षाल्य तथैव भगवत्पादौ प्रक्षालयेत् ततो वाग्दानसंकल्पः—ॐविष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणतुलसीविवाहाङ्गभूतं

वाग्दानं करिष्ये इतिसंकल्प्य कुङ्कुमाक्तानि पञ्चपूगीफलान्यादाय अमुकगोत्रः अमुकप्रवरोऽमुकशर्माऽहं व्याघ्रपदगोत्राय वैयाघ्रपदगार्ग्यवासिष्ठेति त्रिप्रवराय देवमीढवर्मणः प्रपौत्राय, शूरसेनवर्मणः पौत्राय, वसुदेववर्मणः पुत्राय अनेककोटिब्रह्माण्डनायकाय दामोदराय श्रीधराय वराय आलम्बायनगोत्राम् आलम्बायनदेवलगौतमेति त्रिप्रवरां विश्वकर्मणः प्रपौत्रीं प्रजापतेः पौत्रीम् ईश्वरस्य पुत्रीं तुलसीं कन्यां शुभमुहूर्ते दास्ये इति वाचा सम्प्रददे तत्प्रतिग्रहार्थमेभिर्गन्धाक्षतपुष्पपूगीफलैस्त्वामहं वृणे वृतोऽस्मीति प्रत्युक्तिः, पुनरर्घं संस्थाप्य वरणसंकल्पः—ॐविष्णुः अद्येहेत्यादि अमुकोहं करिष्यमाण तुलसीदानप्रतिग्रहार्थं द्वारदेशागतस्य श्रीदामोदरवरस्य पूजनपूर्वकं वरणं करिष्ये तत्पूर्वाङ्गत्वेन तुलसीविवाहकर्मणि आचार्यकर्म कर्तुमाचार्यस्य पूजनं वरणं च करिष्ये भूमिदेवाग्रेति अर्घ्यं दत्वा गन्धाक्षतपुष्पमालादिभिः सम्पूज्य आपः क्षीर० सम्पादिताष्टाङ्गार्घेण आचार्यसम्मुखः—अर्घोऽर्घोऽर्घः प्रतिगृह्यताम् । अहं प्रतिगृह्णामि इत्याचार्यः । ततो वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षत० तुलसीविवाहकर्मणि आचार्यत्वेन त्वामहं वृणे, वृतोस्मि इति प्रत्युक्तिः । आचार्यस्तु० इति सम्प्रार्थ्य अर्घः ३ प्रतिगृह्यताम् इति पुनरर्घं दद्यात् । अहं प्रतिगृह्णामीत्याचार्यः । पुनः पूर्ववत् अष्टाङ्गमर्घमादाय—आगतोऽसि वरश्रेष्ठ० असौ यस्ताम्रो० असौयोऽवसर्पति० इति नाभ्यादिवक्त्रपर्यन्तमर्घं दत्वा नमोस्त्वनन्तायेति संपूज्य वरणसामग्रीमादाय एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यादिभिः करिष्यमाण तुलसीदानप्रतिग्रहणार्थं व्याघ्रपदगोत्रं वैयाघ्रपादगार्ग्यवासिष्ठेति त्रिप्रवरं श्रीदामोदरं वरत्वेन त्वामहं वृणे वृतोऽस्मि इति प्रत्युक्तिः । तत आचार्यो यजमानाय तिलकाशीर्वचनं कुर्यात् ततः वाद्यघोषपुरस्सरं शान्तिपाठं पठन्तो विवाहस्थलं प्रविशेयुः तत्र रक्तकम्बलादिना तुलसीदामोदरयोर्मध्येऽन्तःपटं विधाय प्राङ्मुखीं दामोदरप्रतिमां पश्चिमाभिमुखीं रौप्यमयीं तुलसीमवस्थाप्य स्वयं दाता उदङ्मुखो भूत्वा स्वासने उपविश्य मधुपर्केण अर्चयेत् । आचम्य-प्राणानायम्य अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहमागतं दामोदरं श्रीधरं वरं मधुपर्केण अर्चयिष्ये इति संकल्प्य विवाहप्रकरणोक्तरीत्या (पृ०-७६) विष्टरदानादि मधुपर्कदानान्तं कृत्वा बहिः शालायां पञ्चभूसंस्कारपूर्वकमग्निस्थापनं कृत्वा यजमानः वस्त्रचतुष्टयं दामोदराय दद्यात्। तत्र वस्त्रद्वयं तुलसीपरिधानार्थं बोध्यम् । जरां गच्छ० या अकृन्तन्० इति मंत्रद्वयेन तुलसीं वस्त्रे परिधापयेत् । यदाबध्नन्० इति कङ्कणं च बध्नीयात् ततः परस्परं समञ्जेथामिति प्रेष्य तुलसीदामोदरौ सम्मुखीकुर्यात् । तत उभयपक्षीया शाखोच्चारं च कुर्युः । तत्र किंगोत्रस्य किंप्रवरस्य इत्यादिप्रश्नोत्तरेषु निम्नप्रकारेण वक्तव्यम्—व्याघ्रपदगोत्रस्य वैयाघ्रपदगार्ग्यवासिष्ठेति त्रिप्रवरस्य देवमीढवर्म्मणः प्रपौत्राय व्याघ्रपदगो० वैयाघ्र० शूरसेनवर्म्मणः पौत्राय व्याघ्रपदगो० वैयाघ्र० त्रिप्रवरस्य वसुदेववर्मणः पुत्राय अनन्तकोटिब्रह्माण्डनायकाय दामोदराय श्रीधराय वराय । कन्यापक्षेतु—आलम्बायनगोत्रस्य आलम्बायनदेवलगौतमेति त्रिप्रवरस्य विश्वकर्मणः प्रपौत्रीम् आल० गो० आल० त्रिप्रवरस्य प्रजापतेः पौत्रीम् आल०गो० आल० त्रिप्रवरस्य ईश्वरस्य पुत्रीमिति वक्तव्यम् । ततः समाच रात् परिधास्यै० इति यशसा० इतिमंत्राभ्यां दामोदरस्य वस्त्रद्वयपरिधानं कारयेत् । ततश्छोलिकाभरणं कृत्वा लग्नदानं विधाय तुलसीदानसंकल्पं कुर्यात्—कुशतिलयवजलान्यादाय तुलसीशाखां कांस्यपात्रोपरि हस्ते धृत्वा ॐविष्णुः ३ अद्येहेत्यादि देशकालकीर्तनान्ते अमुकोहं सपत्नीक० व्याघ्रपदगोत्रस्य वैयाघ्रपदगार्ग्यवासिष्ठेति त्रिप्रवरस्य देवमीढवर्मणः प्रपौत्राय शूरसेन वर्म्मणः

 

पौत्राय वसुदेववर्म्मणः पुत्राय अनन्तकोटिब्रह्माण्डनायकाय दामोदराय श्रीधराय वराय आलम्बायनगोत्रस्य आलम्बायनदेवलगौतमेति-त्रिप्रवरस्य विश्वकर्मणः प्रपौत्रीं प्रजापतेः पौत्रीम् ईश्वरस्य पुत्रीं संवर्धितां श्रीरूपिणीं तुलसीं कन्यां यथाशक्त्यलंकृतां यथाशक्त्युपकल्पित-यौतुकयुतां प्रजापतिदेवतां मम जन्मप्रभृति उपार्जितकायिकवाचिकमानसिकत्रिविधपापक्षयपूर्वकसमस्तपितॄणां निरतिशयानन्दब्रह्म-लोकावाप्त्यादि कन्यादानफलपुत्रपौत्राद्यनवच्छिन्नसन्ततिलक्ष्मीप्राप्त्यादि तुलाकल्पोक्तफलसिद्धि-एकविंशतिपुरुषोद्धरणवैकुण्ठभवन-गमन तत्रत्यविपुलभोगोपभुक्त्यनन्तरं विष्णुसायुज्यप्राप्त्यर्थं तुभ्यं सम्प्रददे, इत्युक्त्वा सकुशाक्षतजलं तुलसीपल्लवं दक्षिणहस्ताङ्गुष्ठेन परिकल्प्य दामोदरहस्ते दद्यात् । कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ इति दान-वाक्यं पठेत् ततः तुलसीदामोदरयोः पूजनं कृत्वा प्रार्थयेत्–त्रैलोक्यनाथ देवेश सर्वभूतदयानिधे। दानेनानेन सुप्रीतः सदा शान्तिं प्रयच्छ मे ॥ तत आचार्यः देवस्यत्वा सवितुः० प्रजापतये कन्यां प्रतिगृह्णामि ॐद्यौस्त्वा ददातु पृथ्वी त्वा प्रतिगृह्णातु ॐस्वस्ति इत्युक्त्वा दक्षाङ्गुष्ठ-त्वेन परिकल्पितं तुलसीपल्लवं गृहीत्वा कामस्तुतिं पठेत् ॐकोऽदात् कस्मा अदात्० इति । ततो यजमानः सुवर्णतिलकुशयवजला-न्यादाय ॐविष्णुः २ अद्येह अमुकोऽहं तुलसीरूपकन्यादानकर्म्मणः फलप्रतिष्ठासिध्यर्थमिदं सुवर्णमग्निदैवतं दामोदराय वराय तुभ्यं सम्प्रददे न मम इत्युक्त्वा दद्यात् । आचार्यः ॐस्वस्तीति वदेत् । अथाचारात् पुरोहितादिः द्रव्यपूगीफलादिभिः तुलसीदामोदरयो-रञ्चलग्रन्थिं यज्ञोपवीतेन बद्ध्वा एतन्ते० अञ्चलग्रन्थे सुप्रतिष्ठितो भवेति प्रतिष्ठापयेत् । ततः विवाहवेदिं गत्वा ब्रह्मोपवेशनादि पर्युक्षणान्तं कृत्वा प्रोक्षणीं संस्थाप्य अग्निं सम्पूज्य जिह्वारेखापूजनं च विधाय आघाराज्यभागौ हुत्वा महाव्याहृतीः सर्वप्रायश्चित्तं राष्ट्रभृद्धोमं जयाहोममभ्यातानहोमं च कृत्वा प्राजापत्यं हुत्वा स्विष्टकृद्धोमानन्तरं ॐनमो भगवते वासुदेवाय स्वाहा इति नवाहुतीः ॐकेशवाय नमः स्वाहा । ॐनारायणाय नमः स्वाहा । ॐमाधवाय नमः स्वाहा । ॐगोविन्दाय नमः स्वाहा । ॐविष्णवे० ॐमधुसूदनाय० ॐत्रिविक्रमाय० ॐवामनाय० ॐश्रीधराय० ॐहृषीकेशाय० ॐपद्मनाभाय० ॐदामोदराय० ॐउपेन्द्राय० ॐवासुदेवाय० ॐअनिरुद्धाय० ॐअच्युताय० ॐअनन्ताय० ॐगदिने० ॐचक्रिणे० ॐविष्वक्सेनाय० ॐवैकुण्ठाय० ॐजनार्दनाय० ॐमुकुन्दाय० ॐअधोक्षजाय नमः स्वाहा । इति चतुर्विंशत्याहुतीर्जुहुयात् । सपत्नीको यजमानः विष्णुना सह तुलस्याश्चतस्रः प्रद-क्षिणाः कुर्यात् । शतकुम्भसूक्तं नवर्चं पावमानं जीवसूक्तं नवसूक्तं शन्तिकाध्यायं वैष्णवसंहितां जपेत् । नार्यो मंगलगीतादिकुर्युः । तत आचार्यः पूर्णाहुतिं कृत्वा तुलसीमूर्धनि ॐआपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् इत्यनेन आपोहिष्ठे-त्यादि ऋचेन च अभिषिञ्चेत् हरिद्रासिन्दूरादिदने च कुर्यात् । संस्रवप्राशनादि प्रणीताविमोकान्तं कुर्यात् ततो यजमानः ब्रह्मणे वृषभं तन्निष्क्रयं वा दत्त्वा आचार्याय गां शय्यां च यथासम्भवं दद्यात् अन्ते रौप्यतुलसीप्रतिमासहितां दामोदरप्रतिमां च पुनः सम्पूज्य दद्यात्, दक्षिणां भूयसीं च ब्राह्मणेभ्यो विसज्य मिष्टान्नेन सिद्धान्नेन वा तान् भोजयित्वा विसृजेत् । आचार्यश्च तुलसीसहितं दामोदरं शिविकारूढं कृत्वा स्वगृहमानाय्य मङ्गलवाद्यपुरस्सरं जीवन्तिकापूजनपूर्वकनृत्यगीतादि भोजनोत्सवं कुर्वीत ॥ इति तुलसीविवाहविधिः ॥

## अथ तुलसीपूजाप्रयोगः

तत्रादौ तुलसीसमीपे प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य । देशकालौ स्मृत्वा मम समस्तपातकशमनपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथामिलितोपचारैः श्रीतुलसीपूजां करिष्ये । इति संकल्पयेत् । 'ध्यायामि तुलसीं देवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मकह्लारवराभयचतुर्भुजाम् ॥ १ ॥ किरीटहारकेयूरकुण्डलादिविभूषिताम् ॥ धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ॥ ॥ २ ॥" इति ध्यानम् । भगवत्यै तुलस्यै नमः आवाहनम् ॥ १ ॥ विष्णुवल्लभायै नमः आसनम् ॥ २ ॥ सर्वदेवमयायै नमः पाद्यम् ॥ ३ ॥ सर्वतीर्थमयायै नमः अर्घ्यम् ॥ ४ ॥ दैत्यान्तकप्रियायै नमः आचमनीयम् ॥ ५ ॥ सर्वलोकहितायै नमः स्नानम् ॥ ६ ॥ लक्ष्मीसहोदरायै नमः वस्त्रयुग्मं कंचुकीं च ॥ ७ ॥ महादेव्यै नमः गंधं कुंकुमं च ॥ ८ ॥ रमावासायै नमः पुष्पाणि ॥ ९ ॥ अभीष्टदायै नमः धूपम् ॥ १० ॥ पापहारिण्यै नमः दीपम् ॥ ११ ॥ भगवत्यै नमः नैवेद्यम् । आचमनं च ॥ १२ ॥ अमृतसंभूतायै नमः मुखवासतांबूलं ऋतुफलानि च ॥ १३ ॥ अमृतरूपिण्यै नमः दक्षिणाम् ॥ १४ ॥ जगद्धात्र्यै नमः कर्पूरेण नीराजनम् ॥ १५ ॥ सुदक्षिणायै नमः प्रदक्षिणाम् ॥ १६ ॥ परमेश्वर्यै नमः पुष्पांजलिम् ॥ १७ ॥ अभीष्टदायै नमः नमस्कारम् ॥ १८ ॥ एवं षोडशोपचारैः संपूज्य प्रार्थयेत् । "सौभाग्यं संततिं देहि धनं धान्यं च मे सदा ॥ आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ १ ॥ अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये । देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः ॥ २ ॥ अतो मां सर्वदा भक्त्या कृपादृष्ट्या विलोकय । पतेरायुश्च भाग्यं च सदा देहि हरिप्रिये ॥ ३ ॥ पूतनाभयसंत्रासाद्रक्षितश्च यथा हरिः । तथा संसारसंत्रासाद्रक्ष मे वंशमुत्तमम् ॥ ४ ॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनः प्रिये ॥ ५ ॥ तुलसीमंगलम् । "श्रीमत्कार्तिकशुक्लगा तिथिवरा चैकादशी द्वादशी तस्यां गोरजलग्नके वधुवरौ साक्षाज्जगत्त्रायकौ । श्रीकृष्णस्तुलसीविवाहमकरोत्तस्मिन् विवाहोत्सवे तौ देवौ भवतां सदा शुभकरौ लक्ष्मीकरौ मंगलम् ॥ १ ॥" इति तुलसीपूजाविधानम् ।

## अथ धात्री ( आमलकी ) पूजनम्

तच्च । आश्विनपौर्णमासीमारभ्य कार्तिकपूर्णिमापर्यन्तं कार्यम् । अशक्तौ तु अंतिमदिनत्रयं पूर्णिमायामामलक्येकादश्यां वा कर्तव्यम् । तत्र तावत् धात्रीसमीपे स्वासने प्राङ्मुख उपविश्य । आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममाखिलपापक्षयपूर्वकधर्मार्थकाममोक्षसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं धात्रीमूले विष्णुपूजां धात्रीपूजां च करिष्ये । इति संकल्प्य गणेशं पूजयेत् । ततो वेदीमध्ये विष्णुप्रतिमां संस्थाप्य षोडशोपचारैः संपूज्य पुष्पपूजांते पुष्पाक्षतैरंगपूजां कुर्यात् तद्यथा—दामोदराय नमः पादौ पूजयामि ॥१॥ केशवाय नमः कटिं पूजयामि ॥२॥ नारायणाय नमः उदरं पूजयामि ॥ ४ ॥ श्रीधराय नमः बाहुद्वयं पूजयामि ॥ ५ ॥ गोविंदाय नमः मुखं पूजयामि ॥ ६ ॥ सहस्राक्षाय नमः नेत्रे पूजयामि ॥ ७ ॥ सर्वेश्वराय नमः ललाटं पूजयामि ॥ ८ ॥ विष्णवे नमः शिरः पूजयामि ॥ ९ ॥ त्रिविक्रमाय नमः सर्वाङ्गं पूजयामि ॥ १० ॥ ततो नमस्कारानंतरं विशेषार्घ्यं पुष्पश्रीफलसुवर्णसहितं दद्यात् । तत्र

मंत्रः । नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः । नमस्ते सहस्रपदे पुरुषाय नमोऽस्तु ते ॥ १ ॥ सहस्रनाम्ने देवेश प्रसीद त्वं ममाच्युत । अर्घ्यं गृहाण भगवन् सर्वकामप्रदो भव ॥ २ ॥ ततः प्रार्थयेत् । भगवन् देवदेवेश लोकनाथ जगत्पते । अक्षया संततिर्मेऽस्तु दामोदर नमोऽस्तुते ॥ १ ॥ ततो धात्रीपूजनम् । धात्र्यै नमः । इति नाममंत्रेण षोडशोपचारैः धात्रीं संपूज्य । गंधोत्तरमंगपूजा कार्या । विश्वरूपायै नमः पादौ पूजयामि ॥ १ ॥ सुरूपायै० कटिं० ॥ २ ॥ अब्धिसंभवायै० हृदयं० ॥ ३ ॥ लोकमात्रे० मुखं० ॥ ४ ॥ धात्र्यै नमः शिरः पूजयामि ॥ ५ ॥ एवं संपूजयेत् । ततोऽष्टदिक्षु अष्टौ दीपान् बलिं च धात्र्यै नमः इति दत्त्वा । तथैव अष्टकृत्वः सूत्रेण वेष्टयित्वा अष्टौ प्रदक्षिणाः कृत्वा षोडश नमस्कारांश्च कुर्यात् । तद्यथा––शान्त्यै नमः ॥ १ ॥ कान्त्यै नमः ॥ २ ॥ मेधायै नमः ॥ ३ ॥ प्रकृत्यै नमः ॥ ६ ॥ रमायै नमः ॥ ७ ॥ कमलायै नमः ॥ ८ ॥ इंदिरायै नमः ॥ ९ ॥ कल्याण्यै नमः ॥ १० ॥ कमनीयायै० ॥ ११ ॥ सावित्र्यै नमः ॥ १२ ॥ जगद्धात्र्यै नमः ॥ १३ ॥ गायत्र्यै नमः ॥ १४ ॥ धृत्यै नमः ॥ १५ ॥ अव्यक्तायै नमः ॥ १६ ॥ ततः "धात्रिदेवि नमस्तुभ्यं सर्वपापक्षयंकरि । वर्चस्वं कुरु मां देवि धनवंतं तथा कुरु ॥ १ ॥ पुत्रान् पौत्रान् बलं प्रज्ञां देहि मे जगदीश्वरि । संवत्सरकृतं पापं दूरीकुरु ममाक्षये ॥ २ ॥ इति प्रार्थयेत् । ततो धात्रीमूले सव्येनैव तर्पणं कुर्यात् । "पितापितामहाश्चान्ये अपुत्रा ये च गोत्रिणः । वृक्षयोनिगता ये च ये च कीटत्वमागताः ॥ १ ॥ तिर्यग्योनिगता ये च ये च ब्रह्माण्डमध्यगाः । पिशाचत्वं गता ये च ये च प्रेतत्वमागताः ॥ २ ॥ ते पिबंतु मया दत्तं धात्रीमूलेऽक्षयं पयः । ते सर्वे तृप्तिमायान्तु धात्रीमूले निषेचनात्" ॥ ३ ॥ एवं तर्पणं कृत्वान्ते उद्यापनं कुर्यात् ॥ इति धात्रीपूजाप्रयोगः ॥

## अथ अश्वत्थपूजनविधिः

आचम्य प्राणानायम्य देशकालौ स्मृत्वा मम समस्तपापक्षयपूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमश्वत्थपूजां करिष्य इति संकल्प्य गणपतिं स्मरेत् । ततः । "अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने । अन्ततः शिवरूपाय वृक्षराजाय ते नमः ॥१॥" ॐ अश्वत्थाय नमः आवाहनम् । मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥२॥ ॐ अश्वत्थाय नमः आसनम् । अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः । हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोस्तु ते ॥ ३ ॥ इति पाद्यम् । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ ४ ॥ इत्यर्घ्यम् । त्वं क्षीरफलकश्चैव शीतलश्च वनस्पते । त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ ५ ॥ इत्याचमनीयम् । चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे । बोधिसत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ६ ॥ इति स्नानम् । एकादशात्मरुद्रोऽसि वसूनां च शिरोमणिः । नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ ७ ॥ इति वस्त्रम् । क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते । सत्येन तेन वृक्षेंद्र मामपि श्रीर्निषेवताम् ॥ ८ ॥ इति यज्ञोपवीतमाचमनं च ॥ श्रीखण्डं चंदनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ गृहाण देवपिप्पल ॥ ९ ॥ इति गंधम् । यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते । यदाश्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम् ॥ १० ॥ इति पुष्पाणि । वनस्पतिरसोद्भूतः

सर्वौषधिविजृंभितः । आग्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ११ ॥ इति धूपम् । साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश मम ज्ञानप्रदो भव ॥ १२ ॥ इति दीपम् । नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि परत्रेह परां गतिम् ॥ १३ ॥ इति नैवेद्यम् आचमनीयं च ॥ आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम् । देहि देव महावृक्ष त्वामहं शरणं गतः ॥१४॥ इति पूगीफलं तांबूलं च । ऋग्यजुःसाममंत्रात्मा सर्वरूपी परात्परः । अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥१५॥ इति दक्षिणा । ततः कर्पूरेण नीराजनम् ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले । अन्तः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥ १६ ॥ इति पुष्पांजलिम् । यानि कानि च पापानि जन्मांतरकृतानि च । तानि सर्वाणि नश्यंतु प्रदक्षिणपदे पदे ॥ १७ ॥ इति सप्तप्रदक्षिणाः । एवं षोडशोपचारैः संपूज्य प्रणमेत् । इत्यश्वत्थपूजनम् ।



## अथ गोत्रप्रवराध्यायी

कात्यायनगोत्रस्य कात्ययनविष्णवांगिरसेति त्रिप्रवरस्य १ गर्गगोत्रस्य गर्गगार्ग्यघृतकौशिकमांडव्याथर्ववैशम्पायनेति पञ्चप्रवरस्य २ पाराशरगोत्रस्य वशिष्ठशक्तिपराशरेति त्रिप्रवरस्य ३ कश्यपगोत्रस्य काश्यपापवत्सनैध्रुवेति त्रिप्रवरस्य ४ वत्सगोत्रस्य वत्सऔर्वच्यवनभार्गवजामदग्न्यति पञ्चप्रवरस्य ५ बृहस्पतिगोत्रस्य बृहस्पतिकपिलपार्वणेति त्रिप्रवरस्य ६ अगस्तिगोत्रस्य अगस्तिजैमिनिदधीचेति त्रिप्रवरस्य ७ गौतमगोत्रस्य अङ्गिरोवशिष्ठबार्हस्पत्येति त्रिप्रवरस्य ८ कानगोत्रस्य अश्वत्थदेवलदेवसेनेति त्रिप्रवरस्य ९ भारद्वाजगोत्रस्य भारद्वाजाङ्गिरसबार्हस्पत्येति त्रिप्रवरस्य १० कौशिकगोत्रस्य कौशिकजामदग्न्यायम्येति त्रिप्र० ११ विश्वामित्रगोत्रस्य विश्वामित्रमरीचिकौशिकेति त्रिप्र० १२ मिहिरासनगोत्रस्य मिहिरासनवशिष्ठऔर्वच्यवनजामदग्न्येति पञ्चप्र० १३ मिहिलगोत्रस्य मिहिलासितदेवलेति त्रिप्र० १४ आत्रेयगोत्रस्य आत्रेयशातातपसांख्येति त्रिप्र० १५ वशिष्ठगोत्रस्य वशिष्ठवाशिष्ठशाक्तपाराशरच्यवनेति पञ्चप्र० १६ भार्गवगोत्रस्य भार्गवच्यवनअनर्घ्यजामदग्न्येति पञ्चप्र० १७ शांडिल्यगोत्रस्य शांडिल्यासितदेवलेति त्रिप्र० १८ सांकृत्यगोत्रस्य सांकृत्यवशिष्ठव्याहरेति त्रिप्र० १९ कृष्णात्रिगोत्रस्य कृष्णात्रेयआप्लावनसारस्वतेति त्रिप्र० २० शौनकगोत्रस्य शौनकवशिष्ठपाराशरेति त्रिप्र० २१ हारीतगोत्रस्य हारीतदेवराजविश्वामित्रेति त्रि० २२ कौण्डिन्यगोत्रस्य कौण्डिन्यअत्रिकौशिकेति त्रि० २३ आलाबुकगोत्रस्य सागरगौतमवशिष्ठेति त्रि० २४ विष्णुवृद्धिगोत्रस्य विष्णुवृद्धिकौवपुच्छदश्वितेति त्रिप्र० २५ उपमन्युगोत्रस्य उपमन्युकपिलविरुजेति त्रि० २६ कनवटगोत्रस्य कनवटाश्वत्थदेवलेति त्रि० २७ कृष्णावसुगोत्रस्य सव्यव्ययनसारस्वतेति त्रि० २८ शिशिहरगोत्रस्य शिशिहरकौशिकजामदग्न्येति त्रि० २९ वैयाघ्रगोत्रस्य वैयाघ्रसांकृतिमांडव्येति त्रि० ३० शाकटायनगोत्रस्य शाकटायनांगिरसअलमथाथर्वणवैशम्पायनेति पञ्च० ३१ जमदग्निगोत्रस्य जमदग्निवशिष्ठऔर्वेति त्रि० ३२ कपिलगोत्रस्य कपिलकांचनविश्वामित्रेति त्रि० ३३ सावर्णगोत्रस्य सावर्णऔर्वच्यवनजामदग्न्यआप्लानेति पञ्च० ३४ आङ्गिरसगोत्रस्य आङ्गिरसबार्हस्पत्यऔदुंबरेति त्रि० ३५ मौनसगोत्रस्य मौनसवैतहव्यसेति त्रि० ३६ गौतमगोत्रस्य गौतमांगिरसौतथ्येति त्रिप्रवरस्य ३७ ॥ इतिगोत्रप्रवराध्यायी ॥

## अथ सर्वसाधारणशान्तयः

गर्गः—दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गण्डेऽतिगण्डे च परिघे यमघण्टके १ कालदण्डे मृत्युयोगे दग्धयोगे सुदारुणे । तस्मिन्गण्डदिने प्राप्ते प्रसूतिर्यदि जायते २ विचार्य्य तत्र दैवज्ञः शान्तिं कुर्य्याद्यथाविधि । यजनं देवतानां च ग्रहाणां चैव पूजनम् ३ दीपं शिवालये शक्त्या घृतेन परिदापयेत् । अभिषेकं शंकराय ह्यश्वत्थस्य प्रदक्षिणम् ४ आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनम् । गुरुदैवतविप्राणां पूजनं गोप्रवर्द्धनम् ५ गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् । शान्तिजाप्यं रुद्रजाप्यं कृत्वा मृत्युञ्जयो भवेत् ६ मूले वा सार्प्पगण्डेषु कुर्य्यादेतानि यत्नतः ॥

## अथ गोमुखप्रसवविधिः

स च गोमुखप्रसवो मूलादिशान्तिषु प्रथमं कार्य्यः तदुक्तं प्रयोगपारिजाते—पित्ररिष्टे मात्ररिष्टे सुतारिष्टे तथैव च । प्रायश्चित्तं तथा कुर्य्यात्तत्तद्दोषस्य शान्तये ॥ पूषाश्विनौ गुरुः सार्प्पं मघा चित्रैन्द्रमूलके । ऋक्षेष्वेतेषु जातस्य कुर्य्याद्गोजननं तथा ॥ जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने । कृत्वाऽथयज्ञादिकं पूर्वं गृहालङ्कारपूर्वकम् ॥ गोमयेनोपलिप्याऽथ गृहस्येशानभागके । पङ्कजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥ व्रीहींस्तत्र विनिक्षिप्य यथावित्तानुसारतः । नवशूर्प्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥ स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् । प्राङ्मुखं तमवाक्पादं तिलगर्भगतं शिशुम् ॥ गोमुखं दर्शयित्वा तु पूर्वं जातं तु गोमुखात् । विष्णुर्योनीति सूक्तेन गव्येन स्नापयेच्छिशुम् ॥ गव्यमंगेषु मंत्रेण गवामङ्गेषु संस्पृशेत् । विष्णोः श्रष्ठेति मंत्रेण गोप्रसूतं तु बालकम् ॥ आचार्यस्तु समादाय पश्चान्मात्रे ददेत्तदा । माता जघन्यभागस्था शिशुमादाय तं मुखात् ॥ ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् । वस्त्रे स्थाप्य पिता तत्र पुत्रस्य मुखमीक्षयेत् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च संयुतम् । आपोहिष्ठादिभिर्मंत्रैरभिषिंचेत्ततः शिशुम् ॥ मूर्द्ध्नि चाघ्राय तं पुत्रं तन्मंत्रेण तदा पिता । अङ्गादङ्गादिति मूर्द्ध्नि त्रिरवघ्राय तं शिशुम् ॥ पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः । दरिद्रायाथ विप्राय तां गामभ्यर्च्य दापयेत् ॥ गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात् । यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता ॥ ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः । उल्लेखनादिकं कृत्वा आज्यभागान्तमाचरेत् ॥ होमस्येशानदिग्भागे धान्योपरि घटं शुभम् । पञ्चगव्यं घटे स्थाप्य गन्धादिभिरथार्चयेत् ॥ क्षीरद्रुमकषायाँश्च पञ्चरत्नानि निक्षिपेत् । वस्त्रयुग्मेन सञ्छाद्य तिलाँस्तत्र विनिक्षिपेत् ॥ विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः । यत इन्द्रादिभिर्मंत्रैः कुम्भं स्पृष्ट्वाऽभिमंत्रयेत् ॥ दधिमध्वाज्ययुक्तेन होमं कुर्य्याद्विधानतः । आपोहिष्ठेति तिसृभिरप्सु मे सोम इत्यथ ॥ तद्विष्णोःपरमं पदमक्षिभ्यामिति सूक्ततः । ऋग्भिराभिः प्रत्यृचं चाष्टाविंशतिसंख्यया ॥ अशक्तौ चाष्टसंख्यं वा दधिमध्वाज्यसंयुतम् । आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकम् ॥ अथ गोमुखप्रसवप्रयोगः । शुद्धदेशे शुभासने उपविश्याचम्य अर्घं संस्थाप्य गणेशं नमस्कृत्य सम्पूज्य प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादिना असुकोहं असुकराशेरस्य शिशोरमुकनक्षत्रोत्पत्तिसूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीतये गोमुखप्रसवं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजाभ्युदयिकपुण्याहवाचनानि करिष्ये तथा

आचार्य्यस्य पूजनपूर्वकं वरणं च करिष्ये इतिसंकल्प्य आचार्य्यवरणान्तं यथाविधि कुर्य्यात् तत आचार्यः श्वेताष्टदलपंकजमध्ये यथाशक्ति द्रोणादिप्रमाणव्रीहीन्निक्षिप्य तत्र नवीनं शूर्प्पं निधाय तस्मिन् रक्तवस्त्रं प्रसार्य्य तिलपूरितं कृत्वा तिलगर्भगतं शिशुं प्राङ्मस्तकं प्रत्यक्पादं कृत्वा सशूर्प्पं शिशुं रक्तसूत्रेणावेष्ट्य शिशुमर्मापि गोमुखमानीय शिशुना संयोज्य गोमुखात्प्रसवं भावयित्वा शिशुं विष्णुर्योनिमिति सूक्तेन पञ्चगव्येन स्नापयेत् मंत्रः ॐविष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते १ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ २ हिरण्मयीऽअरणी यान्यां निर्म्मन्थतामश्विनावुभौ तत्ते गर्भं दधामहे दशमे मासि प्रसूतवे ३ इति पञ्चगव्येनाऽभ्युक्ष्य गवामिति मंत्रेण गोःसर्वाङ्गेषु स्पृशेत् ॐगवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मेस्यादिह लोके परत्र चेति ॥ तत आचार्यः ॐविष्णोः श्रेष्ठेन रूपेणास्यां नार्य्यां गवीन्याम् पुमांसं पुत्रानाधेहि दशमे मासि प्रसूतवे ॥ अनेन मंत्रेण प्रसूतं बालकमादाय गोजघनस्थायै मात्रे दद्यात् माता च बालकं गोमुखपर्य्यन्तमानीय पित्रे दद्यात् पिता च मात्रे दद्यात् माता च नववस्त्रे स्थापयेत् । ततः पिता नववस्त्रस्थितस्य पुत्रस्य मुखं पश्येत् आपोहिष्ठेति तिसृभिः पञ्चगव्येन शिशुमभिषिञ्चेत् ततश्च ॐअङ्गादङ्गात्संभवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतम् इतिमन्त्रेण मूर्द्धिन शिशुं त्रिरवघ्राय स्थापयेत् ततः पुण्याहं भवन्तो ब्रुवन्त्विति ब्राह्मणान्पुण्याहं वाचयित्वा तां गां दरिद्राय कुटुंबिने ब्राह्मणाय दद्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं अमुकराशेरस्य बालकस्य अमुककालोत्पत्तिसूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृतैतद्गोमुखप्रसवकर्मणः साङ्गतासिद्ध्यर्थमिमां सवत्सां गां ब्राह्मणाय तुभ्यमहं संप्रददे इति दत्वा दानप्रतिष्ठां च दद्यात् ततो ग्रहाणां प्रीतये प्रत्येकं गोवस्त्रसुवर्णादि च यथाशक्ति दत्वा भूयसीं च दद्यात् । तत आचार्यो वेद्यां पञ्चभूसँस्कारपूर्वकमग्निं संस्थाप्य ब्रह्मोपवेशनादि पर्य्युक्षणान्तं कर्म्म कृत्वा अग्निं प्रतिष्ठाप्य पाद्यादिभिः सम्पूज्य कलशद्वयं स्थापयेत् तत्रैकस्मिन्कलशे महीद्यौरित्यादिना यथाविधि ब्रह्मवरुणसहितादित्यादिनवग्रहानावाहयेत् द्वितीये महीद्यौरित्यादिभिः पञ्चरत्नपञ्चपल्लवादीन्निक्षिप्य पञ्चगव्यतिलक्षीरद्रुमशाखासर्षपान् विशेषद्रव्याणि निक्षिप्य वस्त्रयुग्मेन सञ्छाद्य गन्धादिभिरभ्यर्च्य पूर्णपात्रोपरि ताम्रपात्रे देवतात्रयं स्थापयेत् तद्विष्णोरिति विष्णुप्रतिमां तत्त्वायामीति वरुणप्रतिमाम् अक्षिभ्यामिति यक्ष्महप्रतिमां स्थापयेत् तत्र विष्णुवरुणमन्त्रौ प्रसिद्धौ यक्ष्महमंत्रो लिख्यते ॐअक्षिभ्यान्ते कर्णाभ्यान्नासिकाभ्याञ्चिबुकादधि यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥ इतिसंस्थाप्य एतन्त इति ॐभूर्भुवः स्वः विष्णुवरुणयक्ष्महणः इहागच्छन्त्विहतिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य अर्घं संस्थाप्य पूजासंकल्पः अद्येहेत्यादि अमुकोहं अमुकराशेरस्य बालकस्य अमुककालोत्पत्तिसूचितारिष्टनिरसनाय कलशे सुवर्णप्रतिमासु विष्णुवरुणयक्ष्मघ्नां यथामिलितोपचारैः पूजनं करिष्ये विष्णुध्यानम् प्रदक्षिणं दक्षिणाधः करादारभ्य नित्यशः । विष्णुः कौमोदकीपद्मशंखचक्रगदाधरः । वरुणध्यानम् नागपाशधरो रक्तभूषणः पद्मिनीप्रियः । वरुणोंबुपतिः स्वर्णवर्णो मकरवाहनः ॥ यक्ष्मघ्नो ध्यानम् क्षुत्क्षामाधोमुखो नग्नचारी काकसमस्वरः । यक्ष्मा चैवंविधः सृष्टो ब्रह्मणा तपसो निधिः ॥ इति ध्यात्वा पूर्वोक्तमन्त्रैरर्घ्यादिनीराजनान्तं सम्पूज्य कुम्भं स्पृशन्मन्त्रं पठेत् मंत्रस्तु ॐयत इन्द्र भयामहे ततो नोऽअभयं कृधि । मघवञ्छग्धि तवतन्न ऽऊतीभिर्विद्विषो

विमृधो जहि ॥ ततो मिलितैर्दधिमध्वाज्यैर्होमं प्रत्यृचं अष्टाविंशतिसंख्यया अष्टसंख्यया वा कुर्यात् तत्र द्रव्यत्यागसंकल्पः अद्येहेत्यादि अमुकोहं शान्तिकर्म्मणा यक्ष्ये तत्र प्रजापत्यादीनाज्येन विष्णुं वरुणं यक्ष्महणं आदित्यादिनवग्रहांश्च दधिमध्वाज्यद्रव्येण शेषेण स्विष्टकृतं भूराद्याहुतीश्च यक्ष्ये इदं सम्पादितं दधिमध्वाज्यादिद्रव्यं मया परित्यक्तं यथादैवतमस्तु इति त्यागं विधाय आघाराज्यभागौ हुत्वा प्रधानं जुहुयात् तत्र मन्त्राः (तद्विष्णोरिति मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता अमुकसंख्यया होमे विनियोगः) ॐतद्विष्णोः परमं पदॐसदा पश्यन्ति सूरयः दिवीव चक्षुराततम् स्वाहा। इदं विष्णवे (आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता होमे विनियोगः) ॐआपोहिष्ठा० ॐयोवः० ॐतस्माऽअरं० (अप्सु सोम इति मेधातिथिर्ऋषिरनुष्टुप्छन्द आपो देवताः अमुकसंख्यया होमे विनियोगः) ॐअप्सु मे सोमोऽअब्रवीदन्तर्विश्वानि भेषजा अग्निं च विश्वसम्भुवा स्वाहा। इदं वरुणाय (अक्षीभ्यामति षण्णां वृहायण ऋषिरनुष्टुप्छन्दो यक्ष्महा देवता अमुकसंख्यया होमे विनियोगः) ॐअक्षीभ्यां ते कर्णाभ्यान्नासिकाभ्याञ्चिबुकादधि यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वया विवृहामि ते स्वाहा १ ॐग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्योऽनूक्यात् यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते स्वाहा २ ॐआन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते स्वाहा ३ ॐऊरुभ्यां तेऽअष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां यक्ष्मन् श्रोणिभ्यां भाससाद्भंससो विवृहामि ते स्वाहा ४ ॐमेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः यक्ष्मन्सर्वस्मादात्मनस्तमिदं विवृहामि ते स्वाहा ५ अङ्गादङ्गाल्लोम्नोलोम्नोजातं पर्व्वणिपर्व्वणि यक्ष्मन् सर्वस्मादात्मनस्तमिदं विवृहामि ते स्वाहा ६ इत्येतैः नवग्रहमंत्रैश्च दधिमध्वाज्यं हुत्वा कर्म्मशेषं समापयेत् ॥ इति गोमुखप्रसवशान्तिः ॥

## अथ मूलशान्तिविचारः प्रयोगश्च

अथातः संप्रवक्ष्यामि मूलजातहिताय वै। मातापित्रोर्धनस्यापि कुलज्ञातिहिताय च १ त्यागो वा मूलजातानां स्यादष्टाब्दात्तु दर्शनम्। अभुक्तमूलजातानां परित्यागो विधीयते २ अदर्शनाद्वापि पितुः सोपि तिष्ठेत्समाष्टकम्। एवं दुहितरि प्रोक्तं मूलजायां फलं बुधैः ३ ग्रन्थान्तरे कन्यायाः फलमन्यथा पठ्यते यथा—न बाला हन्ति पितरं मूलर्क्षे मातरं तथा। मूलजा श्वशुरं हन्ति व्यालजा श्वशुराङ्गनाम् ४ माहेन्द्रजाग्रजं हन्ति देवरं तु द्विदैवजा। तत्र शान्तिःपुष्कलाचेत्तर्हि दोषो न कश्चन ५ समाष्टके द्वादशाब्दे कुर्य्याच्छान्तिकमादरात्। मुख्यं कालं प्रवक्ष्यामि शान्तिहोमजपं ततः ६ जातस्य द्वादशाहे च जन्मर्क्षे वा शुभे दिने यदैव शांतिकं कुर्य्यात्कर्म तत्र प्रचक्ष्महे ७ संस्कृते पुण्यदेशे तु मण्डपं कारयेद्बुधः। मंत्राभिमंत्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः ८ तत्रोदकुम्भं सुश्लक्ष्णं रक्तं व्रणविवर्जितम्। सुवर्त्तुलं च निर्णिक्तं कारयेन्निर्म्मलाम्भसा ९ वस्त्रावगुण्ठितं कुर्य्यात्पूरयेत्तीर्थवारिणा। कूर्चहेमसमायुक्तं चूतपल्लवशोभितम् १० स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवम्। द्रोणव्रीहींश्च निक्षिप्य चेशाने च निधापयेत् ११ पञ्चरत्नानि निक्षिप्य सर्वौषधिसमन्वितम्। अर्चितं गन्धपुष्पाद्यैः श्रीरुद्रं च पृथक्जपेत् १२ षडङ्गसहितं शान्त्यै जपेद्वै रुद्रसंख्यया। बह्वृचै रुद्रसूक्तैर्वा छन्दोगै रुद्रसामभिः १३ एकादशाष्टत्रिद्व्येकसंख्यया शक्तितो जपेत्। तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककम् १४ रुद्रानुवाकं च तथा रक्षोघ्नं च जपन्स्पृशेत्। त्रैयम्बकं जपेत्सूक्तमष्टोत्तरसहस्रकम् १५

एकवारं तथा वापि पावमानीः पृथक् जपेत् । जपस्य पञ्च कुम्भाः स्युर्द्वयं वा तदलाभतः १६ श्रीरुद्रस्यैककुम्भश्च सर्वसूक्तानि तत्र तु । तथान्यं च शुभं कुंभं पूर्वोक्तैर्लक्षणैर्युतम् १७ चतुः प्रस्रवणं कुर्यात्पञ्चवक्त्रं तु तद्भवेत् [ अत्रायं सम्प्रदायः आद्यपक्षे षट्कुम्भाः एको रुद्रस्य तस्मिन् शतरुद्रीसूक्तचतुष्टयविधिः मध्ये त्र्यंबकमन्त्रपावमानीजपः एवं पञ्चकुम्भाशक्तौ चतुः प्रस्रवणमेकं द्वितीयं रुद्रकुम्भमादाय चतुः प्रस्रवणमेव पञ्चकुम्भस्थाने कृत्वा एवं पञ्चवक्त्रं भवेत् । ] गजाश्वरथ्यावल्मीकात्संगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् १८ कुम्भस्य नैर्ऋते देशे होमवेदीं प्रकल्पयेत् । गोमयालेपिते देशे कुर्यात्स्थंडिलमुत्तमम् १९ कृत्वाग्निमुखपर्यन्तमुल्लेखादि स्वशक्तितः । पूर्णपात्रनिधानान्तं कृत्वा पूजां समारभेत् २० नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः । निष्कमात्रेण वार्द्धेन पादेनाथ स्वशक्तितः २१ प्रतिमां लक्षणोपेतां कारयित्वा विचक्षणः । यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् २२ [ मूल्यमिति प्रतिमामूल्यमित्यर्थः ] सुवर्णं सर्वदैवत्यं सर्वदेवात्मकोऽनलः । सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः २३ संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनम् । रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितम् २४ प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् । पंकजं कारयेद्भूमौ रञ्जितैर्व्रीहितंडुलैः २५ चतुर्विंशदलोपेतं शुक्लैर्वा कर्णिकान्वितैः । तस्योपरि न्यसेत्पात्रं सौवर्णं रौप्यमृण्मयम् २६ शुद्धवस्त्रेण संछाद्य तत्र मूलानि निक्षिपेत् । मूलानि शतमूलानि स्वयमुत्पाटयेत्पिता २७ मंगल्याश्च पवित्राश्च ओषध्यः कथयाम्यहम् । आसां मूलानि गृह्णीयाच्छतालाभे विशेषतः २८ विष्णुक्रान्ता सहदेवी तुलसी च शतावरी । स्थापयेत्कर्णिकामध्ये वस्त्रगन्धाद्यलंकृतम् २९ कूर्चहेमजलोपेतं कुम्भमौषधिसंयुतम् । कुम्भोपरि न्यसेद्विद्वान्मूलनक्षत्रदैवतम् ३० अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशतः । अधिदेवं यजेदादौ ज्येष्ठानक्षत्रमुत्तमम् ३१ पूर्वाषाढां प्रत्यधिदैवतं पूजयेत्ततः । उत्तराषाढमभ्यर्च्य अनुराधान्तमर्चयेत् ३२ पञ्चामृतेन संस्नाप्य आवाह्याथ समर्चयेत् । उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ३३ रक्तचन्दनगन्धाढ्यैः पुष्पैश्चैव सितासितैः । मेषशृङ्गादिधूपैश्च गन्धपुष्पाक्षतैस्तथा ३४ सुरापोलिकमांसाद्यैर्नैवेद्यैश्चौदनादिभिः । मत्स्य मांससुरादीनि ब्राह्मणश्च विवर्जयेत् ३५ सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् । पायसं लवणोपेतं मांसस्थाने प्रदापयेत् ३६ रक्तगन्धाद्यलाभे तु यथालाभं समर्चयेत् । पुष्पाञ्जलिं समभ्यर्च्य होमं कुर्याद्यथोदितम् ३७ निवापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि । हविर्गृहीत्वा विधिवन्नैर्ऋत्यैव ऋचा हुनेत् ३८ मोषु णः परावरेति यत्तेदेवीति वै पुनः । पायसं घृतसम्मिश्रं हुनेदष्टोत्तरं शतम् ३९ समिदाज्यचरून्पश्चाच्छक्तितः संख्यया हुनेत् । अधिदैवतयोश्चापि जुहुयात्स्वस्वमंत्रतः ४० चतुर्थ्यन्तैर्नमोन्तैश्च स्वाहान्तैश्च स्वमन्त्रकैः । नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् ४१ कृणुष्वेति दशर्भिस्तु जुहुयात्क्रमशं ततः । गायत्र्या जातवेदसे त्र्यम्बकमिति क्रमात् ४२ सीरा युञ्जन्ति तामग्नि वास्तोष्पत्यग्निमेव च । क्षेत्रस्य पतिना गृणाना अभिभूतं तथैव च ४३ श्रीसूक्तेन तथा विद्वान्समिदाज्यचरून्क्रमात् अष्टोत्तरशतैर्वापि अष्टाविंशतिभिः क्रमात् ४४ अष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः । त्वन्नःसोमेति पायसं जुहुयात्तु त्रयोदश । ४५ चतुर्गृहीतमाज्यं च यातेरुद्रेतिमंत्रतः । स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् ४६ हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् । आचार्यो यजमानो वा वह्नौ पूर्णाहुतिं हुनेत् ४७ समुद्रादितिसूक्तेन प्राजापत्यऋचा क्रमात् । पूर्णादर्विपरापत एतैः पूर्णाहुतिं हुनेत् ४८ होमशेषं समाप्याथ वह्निमारोपयेद्बुधः । कुम्भाभिमन्त्रणं कुर्याद्दक्षिणेनाभिमंत्रयेत् ४९ मृत्युप्रशमनायाथ जपेत्त्र्यम्बकं

# मूलशान्तिचक्रम्




ईशान
पूर्व
आग्नेय
उत्तर
दक्षिण
पश्चिम
मित्रः
विश्वेदेवाः
गोविन्दः
वसवः
इन्द्राग्नी
वायुः
त्वष्टा
रविः
अजपात्
अहिर्बुध्न्यः
पूषा
रक्तः
रक्त
श्वेत
श्याम
धूम्र
अधिदेवता
प्रधान
देवता
प्रत्यधिदेवता
इन्द्रः
निर्ऋतिः
तोयं
ज्येष्ठा
मूल
पूर्वाषाढा
रक्तः
श्यामः
श्वेतः

# आश्लेषाशान्तिचक्रम्



शतम् । रुद्रकुम्भोक्तमंत्रेण रुद्रकुम्भं स्पृशञ्जपेत् ५० धूपदीपौ च नैवेद्यं कुम्भयुग्मे निवेदयेत् । प्रसादयेत्ततो देवमभिषेकार्थमादरात् ५१ अभिषेकविधिं वक्ष्ये पूर्वाचार्य्यैरुदाहृतम् । भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः ५२ दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेचनम् । अक्षोभ्यामितिसूक्तेन पावमानीभिरेव च ५३ आपोहिष्ठेति नवभिर्यतइन्द्रद्वयेन च । सहस्राक्षऋचेनापि देवस्यत्वेति मंत्रकैः ५४ ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । यजमानो दक्षिणाभिस्तोषयेदृत्विजादिकान् ५५ धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् । निर्ऋतिप्रतिमां वस्त्रं हेमकुम्भं च दापयेत् ५६ ग्रहाणां प्रतिमावस्त्रं तत्तज्जापाँश्च दापयेत् । श्रीरुद्रजापिने देयः कृष्णोऽनड्वान्प्रयत्नतः ५७ इतरेभ्योपि विप्रेभ्यो यथाशक्त्या च दक्षिणाम् । उक्तालाभे यथा दद्यादाचार्यब्रह्मऋत्विजाम् ५८ तत्तन्मूल्यं प्रदातव्यं शक्त्या वाथ प्रदापयेत् । आचार्य्याय च यद्दत्तं तदर्द्धं ब्रह्मणो भवेत् ५९ सदस्याय ब्रह्मणोर्धमृत्विग्भ्यश्च तदर्धकम् । गृह्णीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् ६० दद्यादन्नं पायसादि ब्राह्मणान्भोजयेच्छतम् । अलाभे सति पञ्चाशद्दशकं तदभावतः ६१ सर्वशान्तेश्च पठनं ब्राह्मणैराशिषस्ततः । गृही क्षमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति ६२ विधाने चरिते ह्यस्मिन् ततः शान्तिर्भवेद्ध्रुवम् । गण्डान्तेष्वेवमेवं स्यात्सार्पाद्येष्वेवमेव हि ६३ समाष्टके द्वादशाहे कुर्य्याद्वै शान्तिमादरात् ६४ ॥ इतिशौनकोक्तो मूलशांतिविधिक्रमः ॥ अथ मूलशान्ति-प्रयोगः ॥ तत्र कर्त्ता पिता मूलजातस्य द्वादशाहे जन्मनक्षत्रे वा शुभदिनेऽष्टमे मासेऽष्टमे वर्षे वा मूलशान्त्यर्थं पूर्वं गणेशपूजनं कुर्य्यात् । शुभासन उपविश्याचम्य अर्घं संस्थाप्य संकल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशिरमुकशर्म्माहम् अमुकराशेः पुत्रस्य कन्याया वा मूलनक्ष-त्रस्यामुकपादजननशान्तिकर्मणि गोमुखप्रसवकर्मणि च निर्विघ्नतया कार्य्यसिद्ध्यै भगवतो गणेश्वरस्य पूजनं करिष्ये इति गणेशं यथोक्तप्रकारेणाभ्यर्च्य तिलकुशयवजलान्यादाय पञ्चाङ्गस्मरणपूर्वकं प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादि स्मृत्वा अमुकगोत्रोऽमुकराशिर-मुकनाम्नः पुत्रस्य मूलनक्षत्रामुकपादजननामुकारिष्टनिवृत्तिपूर्वकसर्वोपद्रवशान्त्यर्थं शुभफलप्राप्तये शौनकोक्तप्रकारेण गोमुखप्रसवपूर्वकं मूलशान्तिं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजापुण्याहवाचननान्दीश्राद्धानि करिष्ये तथा मूलशान्तिकर्म्मसम्पत्तये आचार्यब्रह्मणोः सदस्यर्त्विजां च सप्तशतीशान्तिकसूक्तादिपाठकर्तृणां ब्राह्मणानां पूजनपूर्वकं वरणं च करिष्ये इति संकल्प्य मातृपूजानान्दीश्राद्धपुण्या-हवाचनानि ( पृ० ३–८ ) यथाविधि विधाय आचार्य्यादीनां पूजनपूर्वकं वरणं च कृत्वा यजमानः साञ्जलिपुटो भूत्वा यथाविहितं कर्म्म कुरुध्वम् इति ब्रूयात् ते च करवाम यथामतीति ब्रूयुः तत आचार्यः यथावद्विहिते मण्डपे गृहशालायां वा ऋत्विक्सदस्यान्यथास्थानं संवेश्य पुण्यतीर्थाभिमंत्रितैस्तोयैः पञ्चगव्येन च भूमिं सम्प्रोक्ष्य नैर्ऋत्यां दिशि कुण्डे स्थण्डिले वाग्निमुपसमाधाय ब्रह्मोपवेशनादिपर्युक्षणान्तं ( पृ० ११-१२ ) कृत्वा तत्र वेद्यां चतुर्विंशतिदलं कमलं कर्णिकाकेसरान्वितं रक्तशुक्ल तण्डुलैर्लिखित्वा तन्मध्ये सुलक्षणं रक्तं व्रणवर्जितं सुवर्त्तुलं चतुःप्रस्रवणं ताम्रकुम्भं संस्थाप्य चतुष्कोणेषु वेद्याः कलशचतुष्टयं संस्थाप्य मध्यकलशे यथोक्तलक्षणां मूलस्वामिनिर्ऋतिप्रतिमां सौवर्णीम् अग्न्युत्तारणपूर्वकं ( पृ० ६६ ) संस्थाप्य कुम्भविधिना पूर्वं कलशं संस्थाप्याभिमंत्र्य च तदुपरि स्वर्णरूप्यताम्रादिस्थाल्यां निष्कनिष्कार्द्धनिष्कपादादिप्रमाणेन यथाशक्ति निर्मितां निर्ऋतिप्रतिमां हिमस्य त्वेत्यग्न्युत्तारणपूर्वकं पयोदधिघृतक्षौद्रशर्करा इति पञ्चामृतेन संस्नाप्य स्थाल्यां निधाय एतन्त० इत्यादि ॐभूर्भुवःस्वः

मूलनक्षत्रस्वामिन्निर्ऋते इहागच्छेहतिष्ठ सुप्रतिष्ठितो वरदो भव १ इति निर्ऋतिप्रतिमां प्रतिष्ठाप्य तद्दक्षिणभागे अधिदैवतं ज्येष्ठानक्षत्रदेवं इन्द्रं स्थापयेत् २ तद्वामभागे प्रत्यधिदैवतं पूर्वाषाढादेवं तोयं स्थापयेत् ३ ततश्चतुर्विंशतिदलकमले पूर्वादीशानपर्यन्तं उत्तराषाढादि अनुराधानक्षत्रान्तं यथाक्रमं नक्षत्राणि तत्तन्नक्षत्रदेवताश्च स्थापयेत् तत्रायंक्रमः ॐभूर्भुवःस्वः उत्तरादेवाः विश्वेदेवा इहागच्छन्तु इहतिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु ४ एवं ॐभूर्भुवःस्वः श्रवणदेव गोविन्द इहा० ५ ॐभूर्भुवःस्वः धनिष्ठादेवाः वसवः० ६ ॐभूर्भुवःस्वः शतभिषादेव वरुण० ७ ॐभूर्भुवःस्वः पूर्वाभाद्रपदादेव अजचरण० ८ ॐभूर्भुवःस्वः उत्तराभाद्रपदादेव अहिर्बुध्न्य० ९ ॐभूर्भुवःस्वः रेवतीदेव पूषन्० १० ॐभूर्भुवःस्वः अश्विनीदेवौ दस्रौ० ११ ॐभूर्भुवःस्वः भरणादेव यम० १२ ॐभूर्भुवःस्वः कृत्तिकादेव अग्ने० १३ ॐभूर्भुवःस्वः रोहिणीदेव ब्रह्मन्० १४ ॐभूर्भुवःस्वः मृगशिरोदेव चन्द्र० १५ ॐभूर्भुवःस्वः आर्द्रादेव शिव० १६ ॐभूर्भुवःस्वः पुनर्वसुदेवते अदिते० १७ ॐभूर्भुवःस्वः पुष्यदेव गुरो० १८ ॐभूर्भुवःस्वः अश्लेषादेवाः सर्पाः० १९ ॐभूर्भुवःस्वः मघादेवाः पितरः० २० ॐभूर्भुवःस्व पूर्वफल्गुनीदेव भग० २१ ॐभूर्भुवःस्वः उत्तरफल्गुनीदेव अर्यमन्० २२ ॐभूर्भुवःस्वः हस्तदेव रवे० २३ ॐभूर्भुवःस्वः चित्रादेव त्वष्टः० २४ ॐभूर्भुवःस्वः स्वातिदेव वायो० २५ ॐभूर्भुवःस्वः विशाखादेवौ इन्द्राग्नी० २६ ॐभूर्भुवःस्वः अनुराधादेव मित्र इहा० २७ इति क्रमेण संस्थाप्य एतन्त इत्यादि ॐभूर्भुवःस्वः विश्वेदेवाआरभ्यमित्रपर्यन्ता देवताः सुप्रतिष्ठिता भवन्तु ततो वेद्या ईशाने कलशविधिना ( पृ० ८ ) कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य पूजयेत् पूजासंकल्पः अद्येहेत्यादि अमुकराशिरमुकशर्म्माहं अमुकराशेः पुत्रस्य मूलनक्षत्रामुकपादजननामुकारिष्टनिवृत्तये शुभफलप्राप्तये मूलशान्तिकर्म्मणि सुवर्णप्रतिमायां अधिदेवता प्रत्यधिदेवतासहितस्य मूलाधिदेवस्य निर्ऋतेः उत्तराषाढादिनक्षत्रदेवतानां विश्वेदेवादिमित्रान्तानां पूजनं करिष्ये तथा कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां साधिप्रत्यधिदेवानां च यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य प्रथमं निर्ऋतिं ध्यायेत्—संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनम् । रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितम् ॥ तत इन्द्रं ध्यायेत्—वराभयकरःसाक्षाद्द्विभुजो रक्तवर्णकः । पद्मासनोपविष्टश्च ध्यातव्यो मघवा नरैः । अथ तोयध्यानम् पाशयुग्मवरो देवो द्विभुजः श्वेतवाहनः । ध्यातव्यस्तोयदेवस्तु मीनस्योपरि संस्थितः ॥ अन्येषां विश्वेदेवादीनां नाममंत्रेण ध्यानम् अथ निर्ऋतिम् ॐमोषु ण परावरा निर्ऋतिर्दुर्हणावधीत् तदतृष्णा तृष्णया सह इतिमंत्रेणावाहनासनादिभिः पूजयेत् अधिदेवताप्रत्यधिदेवतयोस्तु ॐअधिदेवाय इन्द्राय नमः ॐप्रत्यधिदेवाय तोयाय नमः इतिनाममंत्राभ्यामावाहनादिकम् अन्येषां नाममंत्रेण पूजनम् यथा ॐविश्वेभ्यो देवेभ्यो नमः ॐगोविन्दाय नमः ॐवसुभ्यो नमः ॐवरुणाय नमः ॐअजचरणाय नमः ॐअहिर्बुध्न्याय नमः ॐपूष्णे नमः ॐदस्राभ्यां नमः ॐयमाय नमः ॐअग्नये नमः ॐब्रह्मणे नमः ॐचन्द्राय नमः ॐशिवाय नमः ॐअदितये नमः ॐगुरवे नमः ॐसर्प्पेभ्यो नमः ॐपितृभ्यो नमः ॐभगाय नमः ॐअर्यम्णे नमः ॐरवये नमः ॐत्वष्ट्रे नमः ॐवायवे नमः ॐशक्राग्निभ्यां नमः ॐमित्राय नमः इतिसर्वेषां नाममन्त्रैः पूजनं कलशे आदित्यादि नवग्रहाणां आकृष्णेनेत्यादि वेदमन्त्रैः आदित्याय नम इत्यादि नाममन्त्रैश्च पूजनं ततो निर्ऋतिदेवं रक्तचन्दनगन्धाद्यैः पुष्पैः कृष्णासितादिभिः उक्तगन्धाद्यलाभे च यथाप्राप्तेन पूजयेत् एवं पुष्पसमर्पणान्तं निर्ऋतिं अन्याः देवताश्च-

पूजयेत् ॥ तत ऐशान्यां रुद्रकलशं स्थापयेत् पञ्चवर्णैः स्वस्तिकं विधाय तत्र द्रोणपरिमितान्धान्यान्निक्षिप्य तत्र श्लक्ष्णं रक्तमव्रणं सुवर्तुलं कलशं कलशविधिना संस्थाप्य तदुपरि ताम्रादिपात्रे सुवर्णघटितां श्रीरुद्रप्रतिमां अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य कलशे संस्थाप्य पूजयेत् तत्र संकल्पः अद्येहेत्यादि असुकोहं मूलशान्तिककर्म्मणि रुद्रकलशे सुवर्णप्रतिमायां श्रीरुद्रस्य पूजनं करिष्ये एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां श्रीरुद्र सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ध्यायेत् ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात् ॥ अनेनैव आवाहनासनपाद्यादिभिः श्रीरुद्रं पूजयेत् ततो रुद्रजापकस्तं कुम्भं स्पृशन् षडङ्गन्यासपूर्वकं एकादशावृत्या रुद्राध्यायं जपेत् तत आशुःशिशान इति अप्रतिरथकवचं नमस्ते रुद्रमन्यव इति षोडशर्चं शतरुद्रानुवाकं त्वं यविष्ठदाशुषे इत्यादि रक्षोघ्नं रक्षोहणमिति च कृणुष्वपाज इत्यादीन् एकादशवारं जपेत् अष्टोत्तरसहस्रं त्र्यम्बकमंत्रं जपेत् एकवारं पुनन्तु मा देवजना इति पावमानीश्च जपेत् इति रुद्रकलशे रुद्रजापी जपेत् । ततः प्रधाननिर्ऋतिपूजायां धूपविशेषः--मेषशृङ्गादिधूपैश्च दीपैश्चैव विशेषतः । सुरापोलिकमांसाद्यैस्तथा गोरोचनादिभिः ॥ मत्स्यमांससुरादीनि ब्राह्मणः परिवर्जयेत् । सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् । पायसं लवणोपेतं मांसस्थाने प्रदापयेत् ॥ इति समर्प्य सर्वेषां देवानां नीराजनं विधाय पुष्पाञ्जलिं समर्प्य ततो होमवेदीसमीपमागत्य स्वगृह्योक्तप्रकारेण पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म कृत्वा पायसकृसरचरुं श्रपयित्वा वरदनामाग्निं प्रतिष्ठाप्य पाद्यादिनीराजनान्तं सम्पूज्य द्रव्यत्यागसंकल्पं कुर्यात् अद्येहेत्यादि असुकोहं मूलशान्तिकर्मणा यक्षे तत्र आघाराज्यभागदेवताभ्य इदमाज्यं तथा इदं सम्पादितं पायसमिक्तृसरादिचरुद्रव्यं निर्ऋतीन्द्रतोयविश्वेदेवागोविन्दवसुवरुणाजपादहिर्बुध्न्यपूषदस्रयमाग्निप्रजापतीन्दुशिवादितिगुरुसर्पपितृभगार्यमसवितृत्वष्टृवायुइन्द्राग्निमित्रनवग्रहरक्षोघ्नवामदेवदुर्गाऋतिकृत्तुवास्तोष्पत्यग्निक्षेत्रपालमित्रावरुणविरूपाक्षाग्निश्रीसोमरुद्रास्विष्टकृदग्निभ्यो महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये च मया परित्यक्तं ॐ तत्सत् यथादैवतमस्तु इति द्रव्यत्यागं विधाय ततो दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धो मनसा प्रजापतिं ध्यात्वा आघारावाज्यभागौ जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय अथ प्रधानहोमः प्रथमं घृतमिश्रेण पायसेनाष्टोत्तरशतसंख्यया पालाशखदिरान्यतरसमिद्भिराज्येन चरुणा निर्ऋतिमंत्रेण जुहुयात् ( मोषूणपरावरेति अघोरकर्णऋषिर्गायत्रीछन्दो निर्ऋतिर्देवता घृतमिश्रितपायसादिद्रव्येणाष्टोत्तरशतसंख्यया होमे विनियोगः ) ॐमोषू णःपरावरा निर्ऋतिर्दुर्हणावदी तदतृष्णः तृष्णया सह स्वाहा इदं निर्ऋतये । ततः अधिदेवताप्रत्यधिदेवतयोरष्टाविंशतिसंख्यया होमः ( इन्द्रआसामिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता पायसाज्येनाष्टाविंशतिसंख्यया होमे विनियोगः ) ॐइन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञःपुरऽएतु सोमः देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रम् स्वाहा इदमिन्द्राय । ( आपोहिष्ठेति सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता अपां प्रीतये अष्टाविंशतिसंख्यया होमे विनियोगः ) ॐआपोहि ष्ठा मयोभुवस्तानऽऊर्ज्जे दधातन महेरणाय चक्षसे स्वाहा इदमद्भ्यः । तत उत्तराषाढादिदेवानां नाममन्त्रेण प्रत्येकमष्टसंख्यया पायसाज्येन जुहुयात् यथा ॐविश्वेभ्यो देवेभ्यः स्वाहा इदं विश्वेभ्यो देवेभ्यः ॐगोविन्दाय स्वाहा इदं गोविन्दाय । ॐवसुभ्यः स्वाहा इदं वसुभ्यः । ॐवरु-

णाय नमः स्वाहा। इदं वरुणाय । ॐअजचरणाय नमः स्वाहा । इदमजचरणाय । ॐअहिर्बुध्न्याय नमः स्वाहा। इदमहिर्बुध्न्याय । ॐपूष्णे नमः स्वाहा । इदं पूष्णे । ॐदस्राभ्यां नमः स्वाहा । इदं दस्राभ्याम् । ॐयमाय नमः स्वाहा । इदं

द० प० यमाय । ॐअग्नये नमः स्वाहा । इदमग्नये । ॐधात्रे नमः स्वाहा । इदं धात्रे । ॐचन्द्रमसे नमः स्वाहा । इदं चन्द्रमसे । ॐशर्वाय मू०

नमः स्वाहा । इदं शर्वाय । ॐअदितये नमः स्वाहा । इदमदितये । ॐबृहस्पतये नमः स्वाहा । इदं बृहस्पतये । ॐसर्पेभ्यो नमः ११८

स्वाहा । इदं सर्पेभ्यः । ॐपितृभ्यो नमः स्वाहा । इदं पितृभ्यः । ॐभगाय नमः स्वाहा । इदं भगाय । ॐअर्यम्णे नमः स्वाहा । इदमर्यम्णे । ॐसवित्रे नमः स्वाहा । इदं सवित्रे । ॐत्वष्ट्रे नमः स्वाहा । इदं त्वष्ट्रे । ॐवायवे नमः स्वाहा । इदं वायवे । ॐशक्राग्निभ्यां नमः स्वाहा । इदं शक्राग्निभ्याम् । ॐमित्राय नमः स्वाहा । इदं मित्राय । इति नक्षत्रदेवताभ्यो हुत्वा आकृष्णे-नेत्यादिमंत्रैः अष्टसंख्यया प्रत्येकं नवग्रहेभ्यो जुहुयात् । अथ कृसरहोमः ( कृणुष्वेति पञ्चर्चस्य वामदेवऋषिस्त्रिष्टुप्छन्दो रक्षोहा देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐकृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ २॥ इभेन तृष्वीमनुप्रसितिं द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः स्वाहा । इदमग्नये १ ॐतव भ्रमासऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्व-गुल्काः स्वाहा । इदमग्नये २ ॐप्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्या अदब्धः । यो नो दूरेऽअघशंसो योऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् स्वाहा इदमग्नये ३ ॐउदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ २॥ ओषतात्तिग्महेते । यो नोऽअरातिंसमिधान चक्रे नीचा तं धक्ष्यतसन्न शुष्कं स्वाहा इदमग्नये ४ ॐऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् स्वाहा इदमग्नये ५ ॥ ( गायत्र्या विश्वामित्रऋषिर्गायत्रीछन्दः सविता देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐभूर्भुवःस्वः तत्स....प्रचोदयात् स्वाहा इदं सवित्रे ॥ ( जातवेदस इति कश्यपऋषिस्त्रिष्टुप्छन्दो दुर्गा देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐजातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः स्वाहा इदं दुर्गायै ॥ ( त्र्यम्बकमिति वशिष्ठऋषिः पंक्तिश्छन्दो रुद्रो देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय माऽमृतात् स्वाहा इदं रुद्राय ॥ ( सीरायुञ्जन्तीति बुधसौम्यऋषिर्गायत्रीछन्दःऋत्विक्स्तुतिर्देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐसीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् धीरा देवेषु सुम्नया स्वाहा इदम् ऋत्विक्स्तुतये ( तामग्निवर्णामिति सौभरि ऋषिस्त्रिष्टुप्छन्दो दुर्गा देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐतामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्म्मफलेषु जुष्टाम् दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसेनमः स्वाहा इदं दुर्गायै ॥ ( वास्तोष्पते इति वसिष्ठ ऋषिस्त्रिष्टुप्छन्दो वास्तोष्पतिर्देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐवास्तोष्पते प्रतिजानीह्यस्मान्त्स्वा-वेशोऽअनमीवो भवा नः यत्त्वेमहे प्रति तन्नो जुषस्व शंनो भव द्विपदे शं चतुष्पदे स्वाहा इदम् वास्तोष्पतये ॥ ( अग्निमील इति काण्वो मेधातिथिर्ऋषिर्गायत्रीछन्दोग्निर्देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐअग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम् स्वाहा इदमग्नये ॥ ( क्षेत्रस्येति वामदेवऋषिरनुष्टुप्छन्दः क्षेत्रपालो देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐक्षेत्रस्य

पतिना वयं हितेनेव जयामसि गामश्वं पोषयित्वा स नो मृडातीदृशे स्वाहा इदम् क्षेत्रपालाय ॥ ( गृणानेति जमदग्निर्ऋषि-र्गायत्री छन्दो मित्रावरुणौ देवते अष्टसंख्यया कृसरहोमे विनियोगः ) ॐगृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृता वृधा स्वाहा इदम् मित्रावरुणाभ्याम् ॥ ( अग्निंदूतमिति विरूपाक्ष ऋषिरनुष्टुप्छन्दो अग्निर्देवता अष्टसंख्यया कृसरहोमे विनियोगः ) ॐ अग्निं दूतम्पुरो दधे हव्यवाहमुपब्रुवे देवाँ २॥ आसादयादिह इदं विरूपाक्षायाग्नये ॥ इति-कृसरहोमः ॥ अथ प्रत्यर्चं श्रीसूक्तेन समिदाज्यचरुद्रव्यं जुहुयात् ( हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्द-कर्दमचिक्लीतेन्दिरासुता ऋषय आद्यानां तिसृणामृचामनुष्टुभश्चतुर्थ्या बृहती पञ्चमीषष्ठ्योस्त्रिष्टुभौ सप्तम्यादिचतुर्दशीपर्यन्तानामनुष्टुभः पञ्चदश्याः प्रस्तारपंक्तिश्छन्दांसि सर्वमंत्राणां श्रीर्देवता प्रत्यर्चं यथासंख्यया समिदाज्यचरुहोमे विनियोगः ) ॐहिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह स्वाहा इदं श्रियै १ ॐताम्मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् स्वाहा इदं श्रियै २ ॐअश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् स्वाहा इदं श्रियै ३ ॐकां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् स्वाहा इदं श्रियै ४ ॐचन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् तां पद्मनीमीं शरणं प्रपद्येऽअलक्ष्मीर्मे नश्यतां त्वां वृणोमि स्वाहा इदं श्रियै ५ ॐआदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोथ बिल्वः तस्य फलानि तपसा नुदन्तु मायाऽ-न्तरा याश्च बाह्याऽअलक्ष्मीः स्वाहा इदं श्रियै ६ उपैतु मां देवसखः कीर्तिश्च मणिना सह प्रादुर्भूतोस्मि राष्ट्रेस्मिन्कीर्त्तिमृद्धिं ददातु मे स्वाहा इदं श्रियै ७ ॐक्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् अभूतिमसमृद्धिं च सर्व्वां निर्णुद मे गृहात् स्वाहा इदं श्रियै ८ ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम् स्वाहा इदं श्रियै ९ मनसः काममाकूतिं वाचः सत्यमशीमहि पशूनां रूपमन्नस्य मयि श्रीःश्रयतां यशः स्वाहा इदं श्रियै १० ॐकर्दमेन प्रजा भूता मयि सम्भव कर्दम श्रियं वासय मे कुले मातरं पद्ममालिनीम् स्वाहा इदं श्रियै ११ ॐआपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे नि च देवीं मातरं श्रियं वासय मे कुले स्वाहा इदं श्रियै १२ ॐआर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह स्वाहा इदं श्रियै १३ ॐ आर्द्रां यष्करिणीं यष्टिं सुवर्णां हेममालिनीम् सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह स्वाहा इदं श्रियै १४ ताम्मऽ-आवह जातवेदो लक्ष्मीमनपगामिनीम् यस्यां हिरण्यं प्रभूतं गावो दास्योश्वान् विन्देयं पुरुषानहम् स्वाहा इदं श्रियै १५ इतिपञ्चदशर्च-होमः ॥ ततः पायसेन (त्वन्नःसोम इति प्रगाथऋषिस्त्रिष्टुप्छन्दः सोमो देवता त्रयोदशसंख्यया पायसहोमे विनियोगः) ॐत्वन्नः सोम विश्वतो गोपा अदाभ्यो भव सेधराजन्नपस्रिधो विवोमदेमानो दुःशंस ईशताविवक्षसे स्वाहा इदं सोमाय ॥ (यातेरुद्रेति कश्यप ऋषिर-नुष्टुप्छन्दः स्वराट्रुद्रो देवता चतुर्गृहीताज्यहोमे विनियोगः ) ॐया ते रुद्र शिवा तनूरघोरा पापकाशिनी तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा इदं रुद्राय ॥ इतिमन्त्रैर्होमं विधाय ततः पायसकृसराज्यसमिद्भिः ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ततो भूरादिनवाहुतिहोमः ॐभूःस्वाहा इदमग्नये ॐभुवःस्वाहा इदं वायवे ॐस्वः स्वाहा इदं सूर्य्याय ॐत्वन्नोऽअग्ने वरु-

णस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत् स्वाहा इदमग्नीवरुणाभ्याम् ॐस त्वन्नोऽअग्ने वमो भवोती नेदिष्टोऽअवयक्ष्व नो वरुणᳬरराणो वीहि मृडीकᳬसुहवो नऽएधि स्वाहा इदमग्नीवरुणाभ्याम् ॐअयाश्चाग्नेस्यन-भिशस्तिपाश्च सत्यमित्त्वमयाऽअसि अया नो यज्ञं वहास्ययानो धेहि भेषजᳬस्वाहा इदमग्नये ॐये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा-वितता महांतः तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमᳬश्रथाय अथा वयमादित्यव्रते वयं तवानागसोऽअदितये स्याम स्वाहा इदम् वरुणायादित्यै। ॐअग्नये प्रजापतये स्वाहा इदमग्नये प्रजापतये। ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते। संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानसंकल्पः अद्येहेत्यादिना अमुकोहं मूलशान्तिकर्माङ्गहोमकर्मणः सांगफलप्राप्तये साद्‌गुण्यार्थम् अपूर्णपूर्णार्थं सद्रव्यं पूर्णपात्रं ब्रह्मणे तुभ्यं सम्प्रदद्दे मन्त्रपाठः अक्रन्कर्म्म कर्म्मकृतः सह वाचा मयोभुवा देवेभ्यः कर्म्म कृत्वास्तं प्रेत सचाभुवः॥ ततो निर्ऋतये इन्द्राय अद्भ्यो विश्वेदेवादिनक्षत्रदेवताभ्यः रुद्राय आदित्यादिनवग्रहेभ्यः अधि-देवताभ्यः प्रत्यधिदेवताभ्यः विनायकादिपञ्च०इन्द्रादिदशदिक्पालेभ्यः क्षेत्रपालाय च सदीपमाषभक्तपायसादिबलीन् यथाक्रमेण दत्वा ( बलिदानप्रकारस्तु पृ०४९ द्रष्टव्यः ) पूर्णाहुतिं जुहुयात् तत्र यजमानो वा आचार्य्यो वा समुद्रादूर्मीत्यादिमंत्रैर्द्वादशधा चतुर्धा वा गृहीतेनाज्येन जुहुयात् तत्र संकल्पः अद्यहामुकोहं पुत्रस्य मूलनक्षत्रजननशान्तिहोमकर्म्मणः अपूर्णपूर्णार्थं न्यूनातिरिक्तपरिपूर्त्यर्थं च मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये नारिकेल पूगीफलं वा रक्तवस्त्रसहितं कृत्वा स्रुवं स्रुचिं सम्पूज्य जुहुयात् होममन्त्राः ॐसमुद्रा-दूर्म्मिर्म्मधुमाँ २॥ उदारदुपाᳬशुना सममृतत्वमानट् घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः १ ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयᳬ स्याम पतयो रयीणाम्। २ ॐरुद्र यत्ते क्रिविपरं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहा ३ ॐपूर्णा दर्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणावहाऽइषमूर्जᳬशतक्रतो स्वाहा ४ ॐसप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ५ ॐमूर्द्धानं दिवोऽअरतिं। पृथिव्या वैश्वानरमृतऽआजातमग्निम् कविᳬ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः स्वाहा ६ ॐसदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् सनिम्मेधामयासिषᳬ स्वाहा ७ ॐयाम्मेधान्देवगणाः पितरश्चोपासते तया मामद्य मेधयाऽअग्ने मेधाविनं कुरु स्वाहा ८ इतिमन्त्रैः पूर्णाहुतिं हुत्वाग्निं प्रार्थयेत् श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं बलं श्रियम्। आयुष्यं द्रव्यमारोग्यं देहि मे हव्यवाहन ॐतनूपा अग्नेसि तन्वं मे पाहि। आयुर्दा अग्नेस्यायुर्मेदेहि वर्चोदा अग्नेऽसि वर्चोमे देहि अग्ने यन्मे तन्वा ऊनं तन्म आपृण मेधां मे देवःसविता आदधातु मेधां मे देवी सरस्वती आदधातु मेधामश्विनौ देवावा-धत्तां पुष्करस्रजौ ॐअङ्गानि च म आप्यायन्ताम् इतिसर्वाङ्गे। वाक् च म आप्यायतामिति मुखे। प्राणश्च म आप्यायतामिति नासिकायां चक्षुश्चम आप्यायताम् इति नेत्रयोः श्रोत्रं च म आप्यायतामिति श्रोत्रयोः यशोबलं च म आप्यायतामिति बाह्वोः। ततस्त्र्यायुषं कुरुते भस्मना ॐत्र्यायुषं जमदग्नेः इति ललाटे कश्यपस्य त्र्यायुषम् इति ग्रीवायाम् यद्देवेषु त्र्यायुषम् इति दक्षिणांसे तन्नोऽअस्तु त्र्यायुषम् इति हृदि ॐत्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् इति

सर्वाङ्गमालभेत् । ततो होमदक्षिणासंकल्पः अद्येहेत्यादि अमुकोहं मूलशांतिनिमित्तकहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्याय च इमां दक्षिणां आचार्याय तुभ्यं सम्प्रददे इति ततोग्निं विसर्जयेत् गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ भो भो वह्ने महाशक्ते सर्वकामप्रसाधक । कर्मान्तरेपि संप्राप्ते सान्निध्यं कुरु सादरम् ॥ इतिविसृज्य ततो दक्षिणकरेण प्रधाननिर्ऋतिकुम्भाभिमंत्रणं कृत्वा मृत्युप्रशमनार्थाय अष्टोत्तरशतधा जप्तेन त्र्यम्बकमंत्रेण पूर्वोक्तैर्मन्त्रैश्च रुद्रकलशमभिमंत्र्य एतत्कलशद्वये नवग्रहकुम्भे च पूर्ववद्धूपदीपनैवेद्यानि समर्प्य यजमानाभिषेकार्थं आदरादेवं प्रसादयेत् ततः प्राङ्गणे कल्पितस्नानमण्डपे गोमयोपलिप्तस्वस्तिकादिशोभितश्रीपर्णादिपीठे नव्यवस्त्रं प्रसार्य्य तत्रोपविष्टः पुत्रपत्नीसहितो यजमानः शंखवाद्यादिरवे जायमाने मङ्गलगीतानि शृण्वन् स्नानसंकल्पं कुर्य्यात् अद्येहेत्यादिसपुत्रःसपत्नीकोहं मम पुत्रस्य मूलनक्षत्रामुकपादजननसूचितारिष्टनिवृत्तये शुभफलप्राप्तये अभिषेकमन्त्रैर्यज्ञान्तस्नानं करिष्ये ततो दारपुत्रसहितस्य प्राङ्मुखस्योदङ्मुखस्य वा यजमानस्य शिरसि आचार्यादयो ब्राह्मणाः वक्ष्यमाणमन्त्रैरभिषेकं कुर्य्युः तत्र मंत्रा उच्यन्ते--अक्षिभ्यामिति सूक्तेन पावमानीभिरेवच आपोहिष्ठेति नवभिर्यतइन्द्रद्वयेन च १ सहस्राक्षऋचा चैव देवस्यत्वेतिमन्त्रकैः शिवसंकल्पमंत्रेण वक्ष्यमाणैश्च मंत्रकैः २ ॥ ॐअक्षिभ्यां ते नासिकाभ्यां कर्णाभ्यां चिबुकादधि यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते १ ग्रीवाभ्यस्तऽउष्णिहाभ्यः कीकसाभ्यो अनूक्यात् यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते २ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो हृदयादधि यक्ष्मं मतस्नाभ्यां यक्नःप्लाशिभ्यो विवृहामि ते ३ ऊरुभ्यान्ते अष्ठिवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते ४ मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ५ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्व्वणि पर्व्वणि यक्ष्मं सर्व्वस्मादात्मनस्तमिदं विवृहामि ते ६ ॥ यः पावमानीरध्येत्यृषिभिः सम्भृतं रसम् सर्वं सपूतमश्नातु स्वदितं मातरिश्वना ७ पावमानी ये अध्येत्यृषिभिः सम्भृतं रसम् तस्मै सरस्वती दुहे क्षीरं सर्पिर्म्मधूदकम् ८ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतम् ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ९ पावमानीर्दहन्तु नऽइमं लोकमथोऽअमुम् कामान्संवर्द्धयन्तु नो देवी देवैः समाहिताः १० येन देवाः पवित्रेणात्मानं पुनते सदा तेन ते सहस्रधारेण पावमानीः पुनन्तु नः ११ पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् पुण्यांश्च भक्षान्भक्षयत्यमृतत्वं गच्छति तरत्समन्दीधावति १२ ॥ ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्जे दधातन महेरणाय चक्षसे १३ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः १४तस्माऽअरं गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः १५ त्रायन्तामिनदेवास्त्रायन्तां मरुतां गणाः त्रायतं विश्वा भूतानि यथामरय आसत १६ आपऽइद्वाऽउ भेषजं आपोऽअमीवचातनी आपः सर्व्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् १७ हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचपुरोगवी अनामयित्नुभ्यान्त्वाजाभ्यान्त्वोपस्पृशामसि १८ इमा आपः शिवतमा इमा राष्ट्रस्य भेषजी इमा राष्ट्रस्य वर्द्धनी इमा राष्ट्रभृतो मताः १९ याभिरिन्द्रमभ्यषिञ्चन्प्रजापतिं सोमं राजानं वरुणं ताभिरिन्द्रमभिषिञ्चामि २० महान्तं त्वा महीनं सम्राज चर्षणीनाम् देवी जनित्र्यजीजनत् भद्रा जनित्र्यजीजनत् २१ ॥ ॐयत इन्द्र भयामहे ततो नोऽअभयं कुरु मघवञ्छिन्धि तव तन्नऽऊतिभिर्विद्विषो जहि २२ त्वं हि राधसपते राधसो महः क्षयस्यासि विधतः तं त्वा वयं मघवन्निन्द्रगिर्व्वणः सुतावन्तो हवामहे २३ सहस्राक्षेण शतशारदेन शता-

युषा हविषा हार्षमेनम् शतं यथेमं शरदो न यातीन्द्रो विश्वस्य दुरितस्य पारम् २४ ॐशतञ्जीव शरदो वर्द्धमानः शतं हेमन्ताच्छतं वसन्ता-
च्छतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुहुः २५ आहार्षं विदुस्त्वा पुनरागाः पुनर्नवः सर्वाङ्ग सर्वं ते चक्षुः सर्व्वमायुश्च
ते विदुः २६ तदोजो वृणीमहे गां तुषायमगोतु यज्ञपतये देवो स्वस्तिरस्तु नः स्वस्ति मानुषेभ्यः उद्र्ध्वतिर्ज्ञातुभषजं शन्नोऽअस्तु द्विपदे शं 
चतुष्पदे २७ ॐसमुद्रज्येष्ठा सलिलस्य मध्यात्पुनाना यंत्यनिविशमानाः इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु २८ 
या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याःस्वयंजाः समुद्रार्थाः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु २९ यासां
राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् समुदार्था मधुश्च्युतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु
३० यासु राजा वरुणो यासु सोमो विश्वेदेवाः या सूर्ज्जं मदन्ति वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ३१
ॐदेवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नेस्तेजसा सूर्य्यस्य वर्चसेन्द्रस्येन्द्रियाभिषिञ्चामि बलाय श्रियै यशसेऽ
न्नाद्याय ३२ ॐयज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु ३३ येन कर्म्माण्य-
पसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ३४ यत्प्रज्ञानमुतचेतो धृतिश्च
यज्ज्योतिरन्तरमृतं प्रजासु यस्मान्न ऋते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ३५ येनेद भूतम्भुवनम्भविष्यत्परि गृहीतम-
मृतेन सर्व्वम् येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ३६ यस्मिन्नृचः सामयजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः
यस्मिꣳश्चित्तꣳसर्व्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्प मस्तु ३७ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्व्वाजिन इव हृत्प्रतिष्ठं
यदजिरञ्जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ३८ ॐदेवस्य त्वा सवितुः प्रसवेश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचोर्जयन्तु-
र्यंत्रेणाग्ने साम्राज्येनाभिषिञ्चामि ३९देवस्य त्वा सवितुः प्रसवेश्विनोर्व्वाहुभ्यां पूष्णो हस्ताभ्यां अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसाया-
भिषिञ्चामि ४० सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामि इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ४१ कोसि कत-
मोसि कस्मै त्वा कामाय त्वा सुश्लोक सुमङ्गल सत्य राजन् ४२ शिरो मे श्रीर्यशो मुखं त्विषिकेशाः श्मश्रूणि सजा मे प्राणोऽअमृतꣳ
सम्राट् चक्षुर्विराट् श्रोत्रम् ४३ जिह्वा मे भद्रं वाङ् महो मन्युः स्वराट् भामः मोदाः प्रमोदा अंगुलीभिरंगुलीरंगानि मित्रं मे सह
बाहू मे बलमिन्द्रियं हस्ता मे कर्म्म वीर्य्यं आत्मा क्षेत्रमुरो मम ४४ पृष्ठिर्म्मे राष्ट्रमुदरꣳ सौग्रीवाश्च श्रोणी ऊरू अरत्नी जानुनी
विशो मेङ्गानि सर्व्वतः ४५ नाभिर्म्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिं भसत् आनन्दनन्दावाण्डौ मे भगः सौभाग्यं यशः ४६ जंघाभ्यां
पद्भ्यां धर्म्मोस्मि विशि राजा प्रतिष्ठितः प्रतिक्षेत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु प्रत्यङ्गेषु प्रतितिष्ठामि आत्मनि
प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे प्रतिद्यावापृथिवीभ्यां त्वा प्रतितिष्ठामि यज्ञे ४७ त्रयोदेवा एकादश त्रयस्त्रिꣳशाः सुराधसः बृहस्पतिपुरोधा
देवस्य सवितुः सवे ४८ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यजूꣳषि सामभिः सामान्यृग्भिः ऋचः पुरोनु-
वाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या व्वषट्कारैर्व्वषट्कारा आहुतीभिराहुतयो मे कामान्संवर्द्धयन्तु ४९ सर्व्वे समुद्राः सरितस्ती-
र्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः ५० स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्ता-

ष्टोंऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ५१ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यंतरिक्षे पयोधाः पयस्वतीः प्रदिशःसन्तु मह्यम् ५२ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ५३ अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता व्वरुणो देवता ५४ मूर्द्धासि राड्ध्रुवासि धरुणा धर्त्र्यसि धरणी आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ५५ द्यौःशान्तिरन्तरिक्षᳬशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिर्व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्वᳬशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ५७ विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रं तन्नऽआसुव ५७ ॥ अथ पौराणिकमंत्राः सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु महेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः १ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा २ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताश्चैव दिक्पालाःपान्तु वः सदा ३ कीर्त्तिर्लक्ष्मी धृतिर्म्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुःशान्तिस्तुष्टिःकान्तिश्च मातरः ४ एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ५ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ६ ऋषयो मनवो गावो देवमातर एव च देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ७ अस्त्राणि सर्व्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ८ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्व्वकार्य्यार्थसिद्धये ९ अथाष्टदिक्पालमन्त्रैरभिषेकः योसौ वज्रधरो देवो महेन्द्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु १ योसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः । सप्तजिह्वः स देवोग्निर्मूलदोषं व्यपोहतु २ योसौ दण्डधरो देवो धर्म्मो महिषवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ३ योसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः ४ योसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेतानो मूलोत्थाघं व्यपोहतु ५ योसौ देवो जगत्प्राणो मारुतो मृगवाहनः प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम् ६ योसौ निधिपतिर्देवो गदाभृन्नरवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ७ योसाविन्दुधरो देवो पिनाकी वृषवाहनः । अश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ८ विघ्नेशः क्षेत्रपा दुर्गा पिनाकी गरुडध्वजः । सर्व्वदोषप्रशमनं सर्व्वे कुर्व्वन्तु शान्तिदाः ९ ॥ ॥ ॐशान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेय-तदस्तु रोगः शोकः कष्टं दुःखं दारिद्रयं तत् दूरे प्रतिहतमस्तु ॐभूर्भुवः स्वः अमृताभिषेकोस्तु इत्यभिषेकं कृत्वा सपुत्रपत्नीकं यजमानं कलशजलेन सहस्रधारया स्नापयेयुः स्नातो यजमानश्च शुक्लाम्बरधरो भूत्वा रूपंरूपमिति मन्त्रेण घृतच्छायादर्शनं कुर्य्यात् मन्त्रः ॐरूपं रूपं प्रतिरूपो बभूव तदस्यरूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शता दश ॥ इति ततः स्नानवस्त्राणि आचार्य्याय समर्प्य सुमुहूर्त्ते गीतवाद्यशंखरवे जायमाने स्वयं स्वस्तिवाचनं पठन् पुत्रस्य मुखं पश्येत् मंत्रेण अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इतिमंत्रेण पुत्रमुखं दृष्ट्वा स्वाङ्के निधाय गोदानप्रतिमादानादिसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशिरमुकशर्म्मा सपुत्रसपरिवारोहं मम पुत्रस्य मूलनक्षत्रामुकपादजनिसूचितारिष्टनिवृत्तिपूर्व्वकशुभफलप्राप्तये सर्वोपद्रवशान्त्यर्थं शौनकोक्तप्रकारेणानुष्ठितस्य मूलशान्तिकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं कृतस्य होमकर्म्मणः साद्गुण्यार्थं सवत्सामिमां धेनुं तथा

अधिदेवताप्रत्यधिदेवतासहितां सवस्त्रकुम्भां मूलनक्षत्रदेवनिर्ऋतिप्रतिमां ग्रहपूजासामग्रीं च आचार्य्याय दास्ये तथा श्रीरुद्रप्रतिमां कृष्ण-वृषभं कुम्भं च रुद्रजापिने दास्ये तथा सदस्यर्त्विग्भ्यो यथायथं सूक्तपाठादिशान्तिकाध्यायादिपाठकजापकेभ्यो ब्राह्मणेभ्यो यथांशेन दक्षिणां भोजनं च दास्ये तथेमां भूयसीं दक्षिणां भोजनं च अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् इतिसंकल्प्य यथाक्रमेण दद्यात् तत्र क्रमः आचार्य्याय निष्कं निष्कार्द्धं वा दक्षिणा तदर्द्धं ब्रह्मणे ब्रह्मणोर्द्धं सदस्याय तदर्द्धमृत्विग्भ्यः तदर्द्धं सूक्तादिपाठकेभ्य इति ततः पायसादिना यथाशक्ति शतं पञ्चाशत् दश वा ब्राह्मणान् भोजयेत् तत आचार्य्यादयो यजमानं घृतच्छायादर्शनं कारयित्वा तिलकाक्षता-रोपणं मंत्रपाठादिकं रक्षाबन्धनं त्र्यायुषकरणं च कुर्य्युः यजमानश्च तेभ्य आशिषो गृहीत्वा प्रणिपत्य क्षमापयेत् ततः कांस्यपात्रोपरि स्थाप्य दीपान्प्रज्वलितान्पुनः प्रकुर्यान्मङ्गलार्थं च महानीराजनं विधिम् तत उक्तप्रकारेण ब्राह्मणान्भोजयित्वा तेभ्य आशिषो गृहीत्वा अनेन शान्तिकर्म्मणा ॐतत्सत् यज्ञपुरुषः प्रीयतां तत्प्रीत्या निर्ऋतिदेवः प्रीयतामिति वदेत् ततो ब्राह्मणानुज्ञया स्वजनबंधुभिः सहितो भुञ्जीत विधाने चरिते ह्यस्मिन्ततः शांतिर्भवेद्ध्रुवम् । गण्डांतेष्वेवमेवं स्यादश्लेषास्वेवमेव हि १ इत्युक्तं मुनिना सम्यग्मूलजातहिताय च । मातापित्रोर्द्धनस्यापि बन्धुकोपप्रशांतये २ ॥ इतिशौनकोक्तो मूलशांतिप्रयोगः ॥



## अथाश्लेषानक्षत्रजननशांतिः

तत्र फलं मूलनक्षत्रवत् व्यत्ययेन ज्ञेयम् यथा—आद्ये पितानाशमुपैति मूलं पादे द्वितीये जननी तृतीये । धनं चतुर्थोऽस्यशुभोऽथ शांत्या सर्वत्र मत्स्यादहिभे विलोममिति ॥ अहिभे अश्लेषानक्षत्रे विलोमं विपरीतं फलं स्यात् । यथा चतुर्थपादे पितृनाशः तृतीये जननीनाशः द्वितीये धननाशः प्रथमः शुभ इति । तत्र यस्य यस्मिन्पादे जनिस्तदरिष्टपरिहाराय मूलनक्षत्रवत् अत्रापि शान्तिः कर्त्तव्या तत्र प्रथमं गोमुखप्रसवं कुर्य्यात् मूलनक्षत्रवन्मण्डलं विधाय गोमयोपलिप्तभूमौ शुभासन उपविश्याचम्य प्रथमं गणेशपूजनं कुर्यात् तत्र सङ्कल्पः अद्येहेत्यादि अमुकोहं अमुकराशेः पुत्रस्य अश्लेषानक्षत्रामुकपादजननसूचितपित्राद्यरिष्टनिरसन द्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुख-प्रसवपूर्वकं शौनकोक्तप्रकारेणाश्लेषाशान्तिं करिष्ये तत्पूर्वाङ्गत्वेन गणेशपूजामातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इतिसंकल्प्य कर्म्मचतुष्टयमनुष्ठाय ( पृ० १–८ ) गोमुखप्रसवं विधिना अनुष्ठाय ( पृ० १०६ ) आचार्य्यादीनां वरणं कुर्य्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं करिष्यमाणाश्लेषाशान्तिकर्म्मणि आचार्य्यादिकर्म्म कर्तुम् आचार्य्यादीनां पूजनपूर्वकं वरणं करिष्ये इतिसंकल्प्य आचार्य्यं ब्रह्माणं सदस्यान् ऋत्विजः सूक्तसप्तशतीशान्तिकाध्यायपाठकारकान् वृत्वा यथाविहितं कर्म्म कुरुध्वमिति यजमानेनोक्ते कर-वाम इति ते वदेयुः तत आचार्यो मूलनक्षत्रशान्तिवत् गृहशालायां पञ्चगव्येन पुण्यतोयेन भूमिं सम्प्रोक्ष्य तत्र मध्ये वेद्यां चतुर्विं-शतिदलोपेतं कर्णिकाकेसरयुतं रक्तशुक्लतण्डुलैः पङ्कजं निर्माय तत्र सुलक्षणं रक्तं व्रणविवर्जितं चतुःप्रस्रवणं कुम्भं पद्ममध्ये संस्थाप्य वेद्याः चतुष्कोणेषु कलशचतुष्टयं संस्थाप्य मध्यकलशे सुवर्णनिर्मितां अश्लेषास्वामिनः सर्प्पस्य तथाधिदेवस्य पुष्यनक्षत्रस्वामिनो गुरोः तथा प्रत्यधिदेवानां मघास्वामिनां पितॄणां प्रतिमाः स्थापयेत् चतुर्विंशतिदलेषु भगादिचतुर्विंशतिदेवानां पूर्वादिक्रमेण स्थापनमावाहनम्

तदीशाने रुद्रकलशे श्रीरुद्रप्रतिमायां रुद्रावाहनं कलशे नवग्रहावाहनं पूजनं च लिखितचक्रक्रमेण कुर्य्यात् तत्र होमवेद्यां पञ्चभूसँस्कार-पूर्व्वकमग्निं संस्थाप्य मूलशान्तिविधिना कलशं संस्थाप्य तत्र सुवर्णप्रतिमायां सर्पस्य गुरोः पितॄणाम् अन्यदेवानां च आवाहनं कुर्य्यात् ॐभूर्भुवःस्वःसुवर्णप्रतिमायाम् अश्लेषानक्षत्रदेव सर्प्प इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि १ ॐभूर्भुवःस्वः सर्पाधिदेव पुष्यनक्षत्र-देव गुरो इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि २ ॐभूर्भुवःस्वः सर्पप्रत्यधिदेवाः मघानक्षत्रदेवाः पितर इहागच्छन्तु इहतिष्ठन्तु पूजार्थं युष्मानावाहयामि ३ ॐभूः० पूर्वफल्गुनीदेव भग इहा० ४ ॐभूः० उत्तरफल्गुनीदेव अर्य्यमन् इहा० ५ ॐभूः० हस्तदेव रवे इहा० ६ ॐभूः० चित्रादेव त्वष्टः इहा० ७ ॐभूः० स्वातीदेव वायो इहा० ८ ॐभूः० विशाखादेवौ शक्राग्नी इहागच्छतं इह-तिष्ठतं पूजार्थं युवां आवाहयामि ९ ॐभूः० अनुराधादेव मित्र इहा० १० ॐभूः ज्येष्ठादेव इन्द्र इहा० ११ ॐभूः० मूलदेव निर्ऋते इहा० १२ ॐभूः० पूर्वाषाढादेव तोय इहा० १३ ॐभूः० उत्तराषाढादेवा विश्वेदेवाः इहागच्छन्तु इह तिष्ठन्तु पूजार्थं युष्मा-नावाहयामि १४ ॐभूः० श्रवणदेव गोविन्द इहा० १५ ॐभूः० धनिष्ठादेवाः वसव इहागच्छन्त्विहतिष्ठन्तु पूजार्थं युष्मानावाहयामि १६ ॐभूः० शतभिषादेव वरुण इहा० १७ ॐभूः० पूर्व्वभाद्रपदादेव अजचरण इहा० १८ ॐभूः० उत्तरभाद्रपदादेव अहिर्बुध्न्य इहा० १९ ॐभूः० रेवतीदेव पूषन् इहा० २० ॐभूः० अश्विनीदेवौ दस्रौ इहागच्छतं इहतिष्ठतं पूजार्थं युवां आवाहयामि २१ॐभूः० भरणीदेव यम इहा० २२ ॐभूः० कृत्तिकादेव अग्ने इहा० २३ ॐभूः० रोहिणीदेव ब्रह्मन् इहा० २४ ॐभूः० मृगशिरो देव चन्द्र इहा० २५ ॐभूः० आर्द्रादेव शिव इहा० २६ ॐभूः० पुनर्व्वसुदेवते अदिते इहागच्छेहतिष्ठ पूजार्थं त्वामावाहयामि २७ एवं संस्थाप्य एतन्त इत्यादिना प्रतिष्ठाप्य ॐभूर्भुवः स्वः चतुर्विंशतिदलकर्णिकामध्ये कलशोपरि पुष्यनक्षत्रदेवअधिदेवगुरुसहितमघानक्षत्रदेव प्रत्यधि देवपितृसहितअश्लेषानक्षत्रदेव सर्प्प इहागच्छेहतिष्ठ तथा चतुर्विंशतिदले पूर्व्वादिक्रमेण पूर्वफल्गुन्यादि चतुर्विंशतिनक्षत्रदेवाः भगाद्य-दितिपर्यन्ताः इहागच्छन्तु सुप्रतिष्ठिता वरदा भवन्तु तथा रुद्रकलशे सुवर्णप्रतिमायां श्रीरुद्र इहागच्छेहतिष्ठ तथा कलशे ब्रह्मवरुण-सहिताः आदित्यादिनवग्रहाः साधिदेवप्रत्यधिदेवदशदिक्पालाः सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य पूजासंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहम् अमुकराशेरस्य बालकस्य अश्लेषानक्षत्रामुकपादजननसूचितारिष्टनिरसनपूर्व्वकसर्वोपद्रवशान्त्यर्थं आयुरारोग्यप्राप्तये चतुर्विंशतिदलकर्णिकायां सुवर्णप्रतिमासु अधिदेवताप्रत्यधिदेवतासहितस्य सर्प्पस्य तथा चतुर्विंशतिदलेषु दध्यक्षतपुञ्जेष्वावाहितानां भगाद्यदितिपर्यंतानां देवानां तथा सुवर्णप्रतिमायां श्रीरुद्रस्य कलशे ब्रह्मवरुण सहितादित्यादिनवग्रहाणां साधिदेवप्रत्यधिदेवानां दशदिग्पा-लसहितानां च पूजनं करिष्ये इति संकल्प्य प्रथमं सर्प्पं ध्यायेत् सर्प्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । वरदाभयहस्तश्च दिव्याभरण-भूषितः ।। अथ गुरुध्यानम् पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः दधाति दण्डं च कमण्डलुं च तथाक्षसूत्रं वरदोस्तु मह्यम् ।। अथ पितृध्यानम् शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः । आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः ।। अन्येषां भगा-द्यदितिपर्य्यंतानां नाममन्त्रेण तथा रुद्रस्य ब्रह्मवरुणसहितादित्यादिनवग्रहाणां च नाममन्त्रेण ध्यानं कुर्यात् सर्पपूजने मन्त्रः ॐनमोस्तु सर्प्पेभ्यो ये के च पृथिवीमनु ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।। सर्पाय नमः गुरुमंत्रः ॐबृहस्पते ऽअति यदर्य्योऽअर्हाद्-

द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॐगुरवे नमः ॥ अथ पितृमंत्रः ॐपुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनंतु प्रपितामहाः पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॐपितृभ्यो नमः ॥ इतिमंत्रैः प्रधानदेवताः अधिदेवता प्रत्यधिदेवतानां पूजनम् ३ अन्येषां पूर्वफल्गुन्यादिदेवतानां नाममन्त्रैर्यथा पूर्वफल्गुनीदेवाय ॐभगाय नमः ४ उत्तरफल्गुनीदेवाय ॐअर्यम्णे नमः ५ हस्तनक्षत्रदेवाय ॐरवये नमः ६ चित्रादेवाय ॐत्वष्ट्रे नमः ७ स्वातीदेवाय ॐवायवे नमः ८ विशाखादेवाभ्यां ॐशक्राग्निभ्यां नमः ९ अनुराधादेवाय ॐमित्राय नमः १० ज्येष्ठादेवाय ॐइन्द्राय नमः ११ मूलदेवाय ॐनिर्ऋतये नमः १२ पूर्वाषाढादेवाय ॐतोयाय नमः १३ उत्तराषाढादेवेभ्यः ॐविश्वेभ्योदेवेभ्यो नमः १४ श्रवणदेवाय ॐगोविन्दाय नमः १५ धनिष्ठादेवेभ्यः ॐवसुभ्यो नमः १६ शतभिषादेवाय ॐवरुणाय नमः १७ पूर्वभाद्रपदादेवाय ॐअजचरणाय नमः १८ उत्तरभाद्रपदादेवाय ॐअहिर्बुध्न्याय नमः १९ रेवतीदेवाय ॐपूष्णे नमः २० अश्विनीदेवाभ्यां ॐअश्विभ्यां नमः २१ भरणीदेवाय ॐयमाय नमः २२ कृत्तिकादेवाय ॐअग्नये नमः २३ रोहिणीदेवाय ॐ ब्रह्मणे नमः ४२ मृगशिरोदेवाय ॐचन्द्रमसे नमः २५ आर्द्रादेवाय ॐशिवाय नमः २६ पुनर्वसुदेवतायै ॐअदितये नमः २७ इतिनाममंत्रैः पाद्यादिभिः पूजनम् रुद्रकलशे ॐश्रीरुद्राय नमः अन्यस्मिन्कलशे ॐब्रह्मणे नमः वरुणाय नमः ॐआदित्याय नमः ॐसोमाय नमः ॐभौमाय नमः ॐबुधाय नमः ॐगुरवे नमः ॐशुक्राय नमः शनैश्चराय नमः ॐराहवे नमः ॐकेतुभ्यो नमः ॐअधिदेवताभ्यो नमः ॐप्रत्यधिदेवताभ्यो नमः । ॐइन्द्रादिदशदिक्पालेभ्यो नमः ॐविनायकादिपञ्चलोकपालेभ्यो नमः ॐवास्तोष्पतये नमः ॐक्षेत्राधिपतये नमः इतिनाममंत्रैः सर्वेषां पाद्यादिनीराजनान्तं पूजनं विधाय रुद्रकलशे शतरुद्रीयपाठम् एकादशवारम् अन्यानि सूक्तानि च मूलशांतिवत् प्रधानकलशे जप्तव्यानि ततो होमवेद्यां ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म्म (पृ० ११) कृत्वा होमद्रव्यं पायसकृसरसमिदाज्यादि साधयित्वा द्रव्यत्यागसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं अश्लेषाशान्तिकर्मणा यक्ष्ये तत्रेदं सम्पादितं आज्यपायससमित्कृसरादिचरुद्रव्यं आघाराज्यभागदेवताभ्यः सर्प्पगुरुपितृभगार्य्यमरवित्वष्टृवायुशक्राग्नीमित्रेन्द्रनिर्ऋतितोयविश्वेदेवाविष्णुवरुणाजपादहिर्बुध्न्यपूषन्दस्रयमाग्निब्रह्मचन्द्रशिवादितिभ्यः नवग्रहरक्षोघ्नवामदेवदुर्गाऋत्विक्स्तुत् दुर्गावास्तोष्पतिअग्निक्षेत्रपालमित्रावरुणविरूपाक्षाग्निश्रीसोमरुद्रस्विष्टकृदग्निभ्यो महाव्याहृतिदेवताभ्यः सर्व्वप्रायश्चित्तदेवताभ्यः प्रजापतये च मया परित्यक्तं यथादैवतमस्तु इति द्रव्यत्यागं विधाय ब्रह्मणान्वारब्धः आघाराज्यभागौ हुत्वा घृतमिश्रितेन पायसेन प्रधानहोमं कुर्य्यात् ॐ नमोस्तु सर्प्पेभ्यो ये के च पृथिवीमनु येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यः स्वाहा इदं सर्पेभ्यः २८ ॐबृहस्पतेऽअति यदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् स्वाहा इदं बृहस्पतये ॐपुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै स्वाहा इदं पितृभ्यः इतिमंत्रत्रयेण देवतात्रयाय प्रत्येकमष्टाविंशतिसंख्यया हुत्वा ततो नाममंत्रैर्भगादिचतुर्विंशतिदेवताभ्योऽष्टसंख्यया जुहुयात् ॐभगाय स्वाहा इदं भगाय ॐअर्य्यम्णे स्वाहा इदमर्य्यम्णे ॐरवये स्वाहा इदं रवये ॐत्वष्ट्रे स्वाहा इदं त्वष्ट्रे ॐवायवे स्वाहा इदं वायवे ॐशक्राग्निभ्यां स्वाहा इदं शक्राग्निभ्याम् ॐमित्राय स्वाहा इदं मित्राय ॐइन्द्राय स्वाहा इदमिन्द्राय ॐनिर्ऋतये स्वाहा इदं निर्ऋतये ॐतोयाय स्वाहा इदं

तोयाय ॐविश्वेभ्योदेवेभ्यःस्वाहा इदं विश्वेभ्योदेवेभ्यः ॐगोविन्दाय स्वाहा इदं गोविन्दाय ॐवसुभ्यः स्वाहा इदं वसुभ्यः ॐवरुणाय स्वाहा इदं वरुणाय ॐअजचरणाय स्वाहा इदमजचरणाय ॐअहिर्बुध्न्याय स्वाहा इदमहिर्बुध्न्याय ॐपूष्णे स्वाहा इदं पूष्णे ॐदस्राभ्यां स्वाहा इदं दस्राभ्याम् ॐयमाय स्वाहा इदं यमाय ॐअग्नये स्वाहा इदमग्नये ॐब्रह्मणे स्वाहा इदं ब्रह्मणे ॐचन्द्रमसे स्वाहा इदं चन्द्रमसे ॐशिवाय स्वाहा इदं शिवाय ॐअदित्यै स्वाहा इदमदित्यै २४ इति प्रत्येकमष्टसंख्यया हुत्वा आकृष्णेनेत्यादिमन्त्रैः प्रत्येकमष्टसंख्यया नवग्रहहोमं तथाधिदेवताप्रत्यधिदेवताहोमं कृणुष्वपाजेतिपञ्चमंत्रैः (पृ० ११८) प्रत्येकमष्टसंख्यया कुमरहोमं च विधाय समिदाज्यपायसचरुणा प्रत्यृचमष्टसंख्यया श्रीसूक्तहोमं त्वन्न इतिमंत्रेण त्रयोदशसंख्यया पायसहोमं याते रुद्रेतिमंत्रेणाष्टसंख्ययाज्यहोमं कुर्य्यात् मन्त्राश्चैते मूलशान्तौ द्रष्टव्याः (पृ० ११९) ततो भूरादिनवाहुतिहोमं संश्रवप्राशनादि पूर्णपात्रदानान्तं (पृ० १३) कृत्वा साचार्य्यो यजमानः पूर्णाहुतिं जुहुयात् तत्र संकल्पः अद्येहेत्यादि अमुकोहमश्लेषानक्षत्रजननशान्तिकहोमकर्म्मणः न्यूनातिरिक्तपरिपूर्त्यर्थमपूर्णपूरणार्थं मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये ततो नालिकेरं पूगीफलं वा रक्तवस्त्रसहितं कृत्वा स्रुवे निधाय स्रुवं स्रुचिं च प्रपूज्य ब्रह्मणा चतुर्वारं दत्तमाज्यं यजमानेनान्वारब्ध आचार्य्यो जुहुयात् समुद्रादूर्मिरित्यादिसप्तमंत्रैः पूर्णाहुतिं हुत्वा तनूपा अग्नेसीत्यादिभिः अङ्गानि च म आप्यायन्तामित्यादिभिरङ्गालम्भनं च कृत्वा त्र्यायुषं कृत्वा गच्छगच्छेत्यग्निं विसृज्य क्षमापयेत् ॥ ततो दक्षिणकरेण प्रधानकलशं स्पृष्ट्वा त्र्यम्बकमंत्रेणाष्टोत्तरशतवारमभिमंत्र्य रुद्रकलशं चाभिमंत्र्य कुम्भद्वये पूर्ववद्धूपदीपादि विधाय यजमानाभिषेकार्थं आचार्य्यं आदरादेवं प्रसादयेत् ततो यजमानः प्राङ्गणकल्पितस्नानमण्डपे श्रीपर्ण्यासने नव्यवस्त्रं प्रसार्य्य सपुत्रपत्नीकः शंखादिरवे जायमाने मङ्गलगीतवाद्यानि शृण्वन् स्नानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकराशिरमुकशर्म्मा सपुत्रपत्नीकोहं मम पुत्रस्य अश्लेषानक्षत्रामुकपादजननेन पित्राद्यरिष्टसूचितदोषपरिहारार्थं शुभफलप्राप्तये अभिषेकमन्त्रैर्यज्ञान्तस्नानं करिष्ये इति तत आचार्य्यादयो ब्राह्मणाः मूलशान्तिप्रकरणोक्तैरभिषेकमंत्रैरभिषेकं कुर्य्युः (पृ० १२१) अभिषेकान्ते यजमानः सहस्रधारया स्नात्वा शुक्लाम्बरधरो भूत्वा रूपं रूपमिति मन्त्रेण घृतच्छायादर्शनं कृत्वा स्नानवस्त्राण्याचार्याय दत्वा सुमुहूर्त्ते शंखादिरवे जायमाने स्वस्तिवाचनं पठित्वा अङ्गादङ्गादितिमंत्रेण पुत्रमुखं दृष्ट्वा पुत्रं स्वांके निधाय गोदानप्रतिमादान-होमदक्षिणादिसंकल्पं कुर्य्यात् यथा अद्येहेत्यादि अमुकराशिरमुकशर्म्मा सपुत्रपत्नीकोहं मम अश्लेषानक्षत्रे पुत्रजन्मसूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये सर्वोपद्रवशान्त्यर्थंशौनकोक्तप्रकारेण कृतस्याश्लेषाशान्तिहोमकर्म्मणः साङ्गफलप्राप्तये सादूगुण्यार्थम् इमां सवत्सां गां तथा वस्त्रकुम्भसहिताधिदेवताप्रत्यधिदेवताप्रतिमासहिताश्लेषानक्षत्रदेवसर्प्पप्रतिमां तथेमां नवग्रहपूजासामग्रीं च आचार्य्याय दास्ये तथा श्रीरुद्रजापिने सकुम्भवस्त्रां श्रीरुद्रप्रतिमां कृष्णं वृषभं च दास्ये तथा सदस्यर्त्विक्सप्तशतीशान्तिकाध्यायसूक्तपाठकारकेभ्यो ब्राह्मणेभ्यो यथांशेन दक्षिणां विभज्य दास्ये तथेमां भूयसीं दक्षिणां यथाविभवसिद्धमन्नं च अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सन्न मम इतिसंकल्प्य यथाक्रमं आचार्य्याय सुवर्णं तदर्द्धं ब्रह्मणे तदर्द्धं सदस्याय तदर्द्धमृत्विग्भ्यः तदर्द्धं सूक्तादिपाठकेभ्यो दद्यात् तत आचार्य्यादयो ब्राह्मणास्तिलकाक्षतारोपणरक्षाबन्धनत्र्यायुषकरणमंत्रपाठादिकं कुर्य्युः यजमानश्च तेभ्य आशिषो गृहीत्वा प्रणिपत्य क्षमापयेत् ततः कांस्यपात्रोपरिस्थाप्य दीपान्न-

 

ज्वलितान्बुधः । प्रकुर्य्यान्मङ्गलार्थं च महानीराजनं विधिम् ॥ ततः पायसादिमिष्टान्नेन शतं पञ्चाशत् दश वा ब्राह्मणान्भोजयित्वा तेभ्य आशिषो गृहीत्वा अनेन शान्तिकर्म्मणा ॐतत्सत् श्रीपरमेश्वरः प्रीयतां नमः इति समर्प्य ब्राह्मणानुज्ञया सुहृद्बन्धुयुतः स्वयं भुञ्जीत ॥ इति अश्लेषाशान्तिः प्रायो मूलशान्तिवत् ॥ इतिशौनकोक्तोऽश्लेषानक्षत्रजननशांतिप्रयोगः ॥

## अथोर्द्ध्वदंन्तजननशान्तिविचारः

पद्मपुराणे विष्णुधर्म्मोत्तरे परशुरामं प्रत्याहपुष्करः—दन्तजन्मनि बालानां लक्षणं तं निबोध मे । उपरि प्रथमं यस्य जायन्ते हि शिशोर्द्विजाः ॥ दन्तैर्वा सह यस्य स्याज्जन्मभार्गवनन्दन । मातरं पितरं चैव खादत्यात्मानमेव च ॥ शान्तिं तत्र प्रवक्ष्यामि तां मे निगदतः शृणु । गजपृष्ठस्थितं बालं नौस्थं वा स्थापयेद्बुधः ॥ तदभावे तु सर्वज्ञ काञ्चने वा वरासने । सर्वौषधैःसर्वगन्धैर्बीजैःपुष्पैः फलैस्तथा ॥ पञ्चगव्यैःपञ्चरत्नैर्मृत्तिकाभिश्च भार्गव । स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ॥ सप्ताहं चात्र कर्त्तव्यं तथा ब्राह्मणभोजनम् । अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ॥ काञ्चनं रजतं गां च भुवं चागारमेव च । दन्तजन्मनि सामान्ये शृणु स्नानमतः परम् ॥ भद्रासने निवेश्यैनं मूर्द्ध्नि मूलं फलं तथा । सर्वौषधैः सर्वबीजैः सर्वगन्धैस्तथैव च । स्नापयेत्पूजयेच्चात्र वह्निहोमं समीरितम् ॥ इतिशान्तिसूक्तम् ॥ अथ प्रयोगः चन्द्रतारानुकूले शुभदिने नित्यमनुष्ठाय शुभासन उपविश्याचम्य अर्घ्यं संस्थाप्य प्राणानायम्य गणेशपूजनसंकल्पं कुर्यात् अद्येत्यादि अमुकोहममुकराशेरस्य बालकस्य ऊर्द्ध्वदन्तजननशान्तिकर्म्मणि सर्वविघ्नोपशान्त्यर्थं पूर्वाङ्गत्वेन श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति संकल्प्य यथोक्तविधानेन (पृ० १-३) गणेशं संपूज्य प्रधानसंकल्पं कुर्यात् अद्येत्यादि अमुकोहं अमुकराशेरस्य बालकस्य ऊर्द्ध्वदन्तजननसूचितारिष्टनिवृत्तिद्वारा सर्वोपद्रवशान्त्यर्थं श्रीपरमेश्वरप्रीतये विष्णुधर्मोक्तां शांतिं करिष्ये तत्पूर्वाङ्गत्वेनमातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति संकल्प्य यथोक्तविधिना (पृ० ३-८) तानि विधाय होमवेदीं निर्मायाग्निं संस्थाप्य तदीशाने कलशं संस्थाप्य तत्र नवग्रहानावाह्य सम्पूज्य अन्यत्र द्वितीयं संस्थाप्य तस्मिन् सर्वौषधिसर्व्वबीजसर्व्वगन्धपञ्चरत्नानि च निक्षिप्याभिमन्त्र्य तज्जलेन भद्रासनोपविष्टं नौस्थं गजपृष्ठस्थितं बालकं देवस्यत्वेत्यादिमंत्रैः (पृ० १२२) सुरास्त्वेत्यादि मन्त्रैश्चाभिषिच्य धात्रादिसुवर्णप्रतिमाः पञ्चामृतस्नपनपूर्व्वकं स्थाल्यां संस्थाप्य पूजादिसंकल्पं कुर्यात् अद्येत्यादि अमुकोहममुकराशेः पुत्रस्योर्द्ध्वदन्तजननशांतिकर्मणि होमार्थम् आचार्यब्रह्मणोः पूजनपूर्वकं वरणं करिष्ये तथा सुवर्णप्रतिमासु धातृसोमवह्निवायुपर्वतदेवदेवकेशवानां पूजनं कलशे नवग्रहपूजनं च करिष्ये एतंत इति प्रतिष्ठा ॐभूर्भुवःस्वः सुवर्णप्रतिमासु धातृसोमवह्निवायुपर्वतदेवदेवकेशवाः कलशे ब्रह्मवरुणसहितादित्यादिनवग्रहाः सुप्रतिष्ठिता वरदा भवन्तु नाममंत्रैर्ध्यानावाहनादि कुर्यात् यथा ॐधात्रे नमः ॐसोमाय नमः ॐवह्नये नमः ॐवायवेनमः ॐपर्वताय नमः ॐदेवदेवकेशवाय नमः ॐब्रह्मवरुणसहितादित्यादिनवग्रहेभ्यो नमः इतिमंत्रैः पाद्यादिनीराजनान्तं संपूज्य वरदनामाग्निमावाह्य सम्पूज्य द्रव्यत्याग संकल्पं कुर्यात् यथा अद्येत्यादि अमुकोहम् उर्द्ध्वदन्तजननशान्तिकर्मणा यक्ष्ये तत्र आघाराज्यभागदेवताभ्यः धातृसोमवह्निवायुपर्वतदेवदेवकेशवेभ्यः महाव्याहृतिसर्वप्रायश्चित्तदेवताभ्यः स्विष्टकृते च इदमाज्यं मया परित्यक्तं यथादैवतमस्तु इति द्रव्यत्यागं विधाय ब्रह्मणान्वा-

रब्धो मनसा प्रजापतिं ध्यात्वा जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐ इन्द्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय अथ प्रतिमन्त्रं अष्टाविंशतिसंख्यया प्रधानहोमः ॐधात्रे स्वाहा इदं धात्रे ॐसोमाय स्वाहा इदं सोमाय ॐवह्नये स्वाहा इदं वह्नये ॐवायवे स्वाहा इदं वायवे ॐपर्वताय स्वाहा इदं पर्वताय ॐदेवदेवकेशवाय स्वाहा इदं देवदेवकेशवाय इति-मंत्रैः प्रत्येकमाज्यहोमं कृत्वा भूरादिनवाहुतिहोमं विधाय संस्रवप्राशनम् पवित्रप्रतिपत्तिः ब्रह्मणे पूर्णपात्रदानान्तं विधाय ( पृ० १३ ) कलशजलेन पूर्वोक्तमन्त्रैर्बालकमभिषिच्य प्रतिमाःसम्पूज्य होमसांगदक्षिणाप्रतिमादानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहममुकराशेः पुत्रस्य ऊर्ध्वदन्तजननेन सूचितपित्राद्यरिष्टनिवृत्तये शुभफलप्राप्त्यै सर्वोपद्रवशान्त्यर्थमिमाः सुपूजिताःसौवर्णीः प्रतिमाः तथेमां सुपूजितां सवत्सां गां च आचार्याय दास्ये तथेमां भूयसीं दक्षिणां भोजनं च अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् इति संकल्प्य प्रतिमाः गां होमदक्षिणां चाचार्य्याय दत्वा अन्येभ्यो ब्राह्मणेभ्यो दक्षिणां दत्वा अभिषेकतिलकरक्षाबन्धनघृतच्छायात्र्यायुषकरणमंत्रपाठादिकं कारयित्वा सप्ताहपर्य्यंतं ब्राह्मणान्भोजयेत् अष्टमदिने तेभ्यो दक्षिणां दद्यात् ॥ इत्यूर्ध्वदन्तजननशान्तिप्रयोगः ॥

## एकनक्षत्रजननशान्तिः

तत्र पूर्वविचारः—एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयात् ॥ तत्र शान्तिः प्रकर्त्तव्या सर्वाचार्य्यमतेन तु । शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते । ऋष्टविष्टिविवर्ज्जे च प्रारम्भे दिवसे सुधीः ॥ आचार्य्यं वरयेत्पूर्व्वं चतुरोथ द्विजोत्तमान् । पुण्याहं वाचयित्वा तु नक्षत्रप्रतिमां ततः ॥ तत्तदृक्षोक्तमंत्रेण पूजयेत्कलशोपरि ॥ नक्षत्रमंत्राश्च वशिष्ठ-प्रोक्तकात्यायनपरिशिष्टे उक्ताः—रक्तवस्त्रेण सञ्छाद्य वस्त्रयुग्मेन वेष्टयेत् । स्वशाखोक्तेन मंत्रेण कुर्य्यादग्निमुखं ततः ॥ अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतम् । प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तान्तमेव च ॥ वस्त्रालंकारगोदानैराचार्य्यं पूजयेत्ततः । ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् ॥ देवताप्रतिमादानं धान्यवस्त्रादिभिः सह । यानशय्यासनादीनि दद्यात्तद्दोषशान्तये ॥ भोज-येद्ब्राह्मणान्शक्त्या वित्तशाठ्यविवर्जितः । एवं कृत्वा विधानं तु शान्तिर्भवति निश्चितम् ॥ इत्येकनक्षत्रजननशान्तिसूत्रम् । अथप्रयोगः । मातृ-पितृनक्षत्रे पुत्रजन्मजाते प्रथमं गोमुखप्रसवविधानं कार्य्यम् भ्रातृनक्षत्रे भ्रातुरुत्पत्तौ तु तदंगमेव कर्त्तव्यं शुभदिने शान्तिर्विधेया चन्द्रतारानु-कूले दिने प्रातर्नित्यं कर्म्म समाप्य शुभासन उपविश्याचम्य गणेशं नमस्कृत्यार्घस्थापनं कृत्वा प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं अमु-कराशेरस्य पुत्रस्य पित्राद्येकनक्षत्रजननसूचितारिष्टनिवृत्तये शुभफलप्राप्तये सर्वोपद्रवशान्त्यर्थं श्रीपरमेश्वरप्रीतये एकनक्षत्रजननशान्तिविधा-नेन शांतिं करिष्ये तत्पूर्वाङ्गत्वेन गणेशपूजामातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये तथा होमकार्मार्थमाचार्य्यब्रह्मणोः सप्तशतीशान्ति-काध्यायपाठकारकाणां च पूजनपूर्वकं वरणं करिष्ये इतिसंकल्प्य गणेशपूजनादिपुण्याहवाचनान्तं विधाय आचार्य्यब्रह्मणोर्वरणं कुर्य्यात् तत आचार्य्यः सर्षपान्विकीर्य्य भूमिं सम्प्रोक्ष्य तत्र होमवेदीं कृत्वा पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य वेद्या ईशाने कलशविधिना कलशं संस्थाप्य तत्र नवग्रहानावाह्य कलशोपरि जन्मनक्षत्रप्रतिमां पञ्चामृतेन संस्नाप्य स्थापयेत् एतन्ते इत्यादि ॐभूर्भुवः स्वः सुवर्णप्रतिमायां

जन्मनक्षत्रदेव सुप्रतिष्ठितो भव तन्नक्षत्रदेवमंत्रेण पाद्यादिभिः पूजयेत् पूजायाम् एकं रक्तवस्त्रं श्वेतवस्त्रयुग्मं च समर्प्य कलशे ब्रह्मवरुण-सहितादित्यादिनवग्रहांश्च सम्पूज्य होमवेद्यां ब्रह्मोपवेशनादिपर्य्युक्षणान्तं कर्म्म कृत्वा होमद्रव्यत्यागसंकल्पं कुर्य्यात् अद्येहेत्यादि एक नक्षत्रजननशांतिकर्म्मणाहं यक्ष्ये तत्र आघाराज्यभागदेवताः अमुकनक्षत्रामुकदेवतां समिच्चर्वाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया स्विष्टकृतभूरादिनवाहुतीराज्येन यक्ष्ये तदेतद्धोमद्रव्यं मया परित्यक्तं यथादैवतमस्तु इतिद्रव्यत्यागं विधाय एतन्त इत्यादिना वरद-नामाग्निं प्रतिष्ठाप्य पाद्यादिभिः सम्पूज्य आघाराज्यभागौ हुत्वा नक्षत्रदेवमंत्रेण अष्टोत्तरशतसंख्यया प्रधानहोमं विधाय भूरादिन-वाहुतिहोमं च विधाय पूर्णाहुतिहोमं बलिदानान्तं विधाय संस्रवप्राशनादिपूर्णपात्रदानांतं कृत्वा होमदक्षिणां प्रतिमावस्त्रालङ्कारयुतामा-चार्य्याय दद्यात् ऋत्विग्भ्यो माषत्रयमितं सुवर्णं दत्वा सप्तशतीशान्तिकाध्यायपाठकर्तृभ्यो ब्राह्मणेभ्योपि दक्षिणां दद्यात् धान्यवस्त्र-शय्यासनादीनि च यथाशक्तिदद्यात् अन्येभ्यो भूयसीं च दत्वा अभिषेकतिलकरक्षाघृतच्छायात्र्यायुपलापनमन्त्रपाठादिकं कारयित्वा यथाशक्तिपायसान्नादि ब्राह्मणान्भोजयित्वा क्षमापयित्वा सुखं शांतिर्भवति । इत्यकनक्षत्रजननशान्तिप्रयोगः ॥

## अथ त्रिकप्रसवशान्तिः

तत्र पूर्वं विचारसूत्रम् शान्तिसर्वस्वे—सुतत्रये सुताचेत्स्यात्तत्रये वा सुतो यदि । मातापित्रोः कुलस्यापि तत्रानिष्टं महद्भयम् ॥ ज्येष्ठ-नाशो धने हानिर्दुःखं च सुमहद्भवेत् । जातस्यैकादशाहे वा द्वादशाहे शुभे दिने ॥ आचार्य्यमृत्विजो वृत्वा ग्रहयज्ञपुरस्सरम् । ब्रह्मविष्णुमहे-न्द्राणां प्रतिमाः स्वर्णतः कृताः । पूजयेद्धान्यराशिस्थकलशोपरि संस्थिताः । पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ॥ चत्वारि शांतिसूक्तानि पठनीयानि सर्वतः । द्विज एको जपेद्धोमकाले शुचिसमाहितः ॥ आचार्यो जुहुयात्तत्र समिदाज्यतिलान् चरु । अष्टोत्तरसहस्रं वा शतं वा विंशतिस्तथा ॥ देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरस्सरम् । ब्रह्मादिमन्त्रैरिन्द्रस्य यत इन्द्र भयामहे । ततः स्विष्टकृतं हुत्वा बलि पूर्णाहुति ततः । अभिषेकं कुटुम्बस्य कृत्वाचार्यं प्रतोषयेत् । हिरण्यं धेनुरेका च ऋत्विजां दक्षिणां तथा । प्रतिमा गुरवे देया उपस्करसमन्विताः ॥ कांसाज्य-वीक्षणं कृत्वा शांतिपाठं च कारयेत् ॥ इति शांतिसूत्रम् ॥ अथ प्रयोगः एकादशाहे द्वादशाहेऽन्यस्मिन्वा शुभदिने शांतिसामग्रीं सम्पाद्य शुभासने उपविश्याचम्य गणेशपूजनं कुर्यात् अर्घ्यं संस्थाप्य पूजासंकल्पः ॐविष्णुः ३ अद्येहेत्यादि अमुकोहं त्रिकप्रसवशांति-कर्मणि निर्विघ्नतासिद्ध्यर्थं भगवतो गणेश्वरस्य पूजनं करिष्ये यथाविधि पूजनं विधाय प्रधानसकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं मम सुतात्रयजननानन्तरं सुतजननेन सूचितारिष्टनिवृत्तिद्वारा सर्वोपद्रवशान्त्यर्थं श्रीपरमेश्वरप्रीतये सग्रहमखां शांतिं करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजानांदीश्राद्धपुण्याहवाचनानि करिष्ये तथा शान्तिकर्मार्थं आचार्यब्रह्मर्त्विजां शान्तिसूक्तादिपाठकर्तॄणां च वरणं करिष्ये इति संकल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय आचार्यादीनां वरणं च विधाय होमवेदीं कृत्वा आचार्यः शान्तिभूमिं सम्प्रोक्ष्य होमवेद्याःपूर्वभागे नवग्रहवेदीं कृत्वा तत्र नवग्रहानावाहयेत् असम्भवे कलशोपरि नवग्रहपूजनम् ग्रहवेद्या उत्तरतः पञ्च कलशान् कलश-विधानेन संस्थाप्य कलशोपरि सुवर्णनिर्मिताः ब्रह्मविष्णुमहेन्द्ररुद्रेति पञ्च देवानां प्रतिमाः अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य पञ्चसु-

प्रतिमाःसंस्थाप्य पूजयेत् पूजासंकल्पः ॐविष्णुः ३ अद्येहेत्यादि अमुकोहं त्रिकप्रसवशांतिकर्मणि सुवर्णप्रतिमासु ब्रह्मविष्णुमहेशेन्द्र-
रुद्राणां कलशे वेद्यां वा नवग्रहाणां च पूजनं करिष्ये ॐएतन्ते देव सवितर्यज्ञं प्राहुरित्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमासु ब्रह्मादि-
पञ्चदेवताः तथा कलशे ब्रह्मवरुणसहितादित्यादिनवग्रहाः सुप्रतिष्ठिता वरदा भवन्तु इतिप्रतिष्ठाप्य नाममन्त्रैर्वेदमन्त्रैश्च आवाहनादि
नीराजनान्तं पूजयेत् मंत्राश्च ॐब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः सुबुध्न्याऽउपमाऽअस्य विष्ठाःसतश्च योनिम-
सतश्च विवः ॐब्रह्मणे नमः । ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पाᳬंसुरे ॐविष्णवे नमः ॥ ॐतत्पुरुषाय विद्महे
महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॐ महेशाय नमः ॥ ॐयतऽइन्द्र भयामहे ततो नोऽअभयं कुरु मघवँश्छग्धि तव तन्नऽऊतिः
भिर्विद्विषो जहि ॐइन्द्राय नमः ॥ ॐकद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे वोचेम शन्तमᳬंहृदे सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽअस्तु
ॐरुद्राय नमः ॥५॥ तथा ब्रह्मणे नम इत्यादि नाममन्त्रैर्नवग्रहांश्च पूजयेत् ऋत्विक् सूक्तजपं कुर्यात् ( इमा रुद्रायेति एकादशर्चस्य
सूक्तस्य कुत्सऋषिर्जगतीछन्दो रुद्रो देवता जपे विनियोगः ) ॐइमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः यथा शम-
सद्द्विपदे चतुष्पदे विश्वम्पुष्टं ग्रामेऽअस्मिन्ननातुरम् १ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी शिवा रुतस्य भेषजी तया नो मृड
जीवसे २ परिनो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्म्मतिरघायोः अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ३ मीढुष्टम
शिवतम शिवो नः सुमना भव परमे वृक्षऽआयुधं निधाय कृत्तिं वसानऽआचर पिनाकं बिभ्रदागहि ४ विकिरिद्र विलोहित नमस्तेऽअ-
स्तु भगवः यास्ते सहस्रᳬंहेतयोन्यमस्मन्निवपन्तु ताः ५ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः तासामीशानो भगवः पराचीना
मुखा कृधि ६ असङ्ख्याता सहस्राणि ये रुद्राऽअधिभूम्यां तेषाᳬंसहस्रयोजने वधन्वानि तन्मसि ७ अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽअधि
तेषाᳬंसहस्रयोजने वधन्वानि तन्मसि ८ नीलग्रीवाः शितिकण्ठा दिवᳬंरुद्राऽउपश्रिताः तेषाᳬंसहस्रयोजने वधन्वानि तन्मसि ९ नील-
ग्रीवाःशितिकंठाःशर्वाऽअधःक्षमाचराः तेषाᳬंसहस्रयोजने वधन्वानितन्मसि १० ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः तेषाᳬं-
सहस्रयोजने वधन्वानि तन्मसि ११ ॐआनो भद्राः क्रतवो जन्त्वित्यादि स्वस्तिवाचनपठितं सूक्तं च जपेत् । तथा ऋग्वेदोक्तं आ ते
पितर इत्यादि पञ्चदशर्चं सूक्तं च जपेत् ततो होमवेद्यां अग्निप्रणयनब्रह्मोपवेशनादि पर्युक्षणांतं कर्म्म कृत्वा वरदनामाग्निं प्रतिष्ठाप्य सम्पूज्य
द्रव्यत्यागसंकल्पं कुर्यात् ॐविष्णुः ३ अद्येहेत्यादि त्रिकप्रसवशान्तिहोमकर्म्मणाहं यक्ष्ये तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन ब्रह्माणं
विष्णुं महेशं इन्द्रं रुद्रं प्रत्येकमष्टोत्तरशतसंख्यया समित्तिलाज्येन स्विष्टकृतं चाज्यचरुभ्यां भूरादिनवाहुतीश्चाज्येन यक्ष्ये इदमाज्यमिदं
समित्तिलाज्यद्रव्यं च तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु ॐतत्सत् । इतिकृतद्रव्यत्यागो ब्रह्मणान्वारब्धः ॐप्रजापतये नम
इत्यादि आघाराज्यभागौ हुत्वा ॐब्रह्मयज्ञानमित्यादि पञ्चमंत्रैः प्रधानपञ्चदेवतानां पालाशसमित्तिलाज्यद्रव्येण यथासंख्यं होमं विधाय
तथा नवग्रहमन्त्रैः प्रत्येकमष्टसंख्यया तिलाज्येन नवग्रहहोमं च विधाय । तत आज्येन भूरादिनवाहुतिहोमं कृत्वा संस्रवप्राशनादिपूर्ण-
पात्रदानान्तं विधाय पायसेन दध्यक्षतैर्वा ब्रह्मादिदेवताभ्यो नवग्रहेभ्यो दिक्पालेभ्यश्च बलिदानं विधाय क्षेत्रपालाय च बलिं दत्वा
पूर्णाहुतिहोमं उत्तराङ्गपूजनं च कृत्वा होमदक्षिणाप्रतिमादानसंकल्पं कुर्यात् । ॐविष्णुः ३ अद्येहेत्यादि सपत्नीकोहं मम सुतात्रयानंतरं

सुतजननसूचितारिष्टनिरसनद्वारा सर्वोपद्रवशांत्यर्थं नवग्रहयज्ञपुरस्सरं सुवर्णप्रतिमासु कलशोपरिस्थापितानां ब्रह्मादिपञ्चदेवानां पूजायाः साद्गुण्यार्थं तथा होमवेद्यां समित्तिलाज्यद्रव्यैर्ब्रह्मादिपञ्चमंत्रैर्यथासंख्यया होमकर्मणः साङ्गफलप्राप्त्यै इमां गां गोप्रत्याम्नायीभूतं सुवर्णादिद्रव्यं वा होमदक्षिणां तथेमाः सुपूजिताः सौवर्णीः पञ्चप्रतिमाश्च आचार्याय दास्ये तथेमां भूयसीं दक्षिणां ऋत्विगादिभ्यः सप्तशतीसूक्तपाठादिकर्तृभ्यो ब्राह्मणेभ्योऽन्येभ्यश्च विभज्य दास्ये तथा सिद्धान्नेन यथासंख्याकान्ब्राह्मणांश्च भोजयिष्ये ॐतत्सत् इति-संकल्प्य आचार्याय प्रतिमाः अन्येभ्यश्च यथांशेन दक्षिणां दत्वा अग्निं विसृज्य ततः पट्कलशोदकेन समुद्रज्येष्ठा इत्यादि मन्त्रै-रभिषेकं सपत्नीपुत्रःकारयेत् ततःकांस्यपात्रं घृतपूरितं रूपं रूपमितिमंत्रेणावेक्ष्य तिलकरक्षात्र्यायुषलापनमन्त्रपाठादि कारयित्वा ब्राह्म-णान्भोजयित्वा इष्टबन्धुसहितः स्वयमपि भुञ्जीत एवं कृत्वा शान्तिर्भवति इति त्रिकप्रसवशान्तिः ॥ 

## अथ सहजननशान्तिः

तत्र शान्तिविधिः प्रोक्तः षण्मासान्ते कुहूदिने । गणेशं पूजयेदादौ पूर्वाह्णे मातृकागृहान् १ प्रतिमां कारयेद्देव्याः स्वर्णरौप्यादि-धातुजाम् । तस्यां सम्पूजयेद्देवीं श्यामां वामांगवासिनीम् २ भवस्य भीतिहरणीं सर्वारिष्टप्रणाशिनीम् । रुद्राणीं दक्षजां दक्षां भववामाङ्ग-वासिनीम् ३ भद्रदां भद्रकालीं च त्रिपुरासुरनाशिनीम् । कामदां मोक्षदां चाद्यां मधुकैटभमर्दिनीम् ४ सुरूपां सुन्दरमुखीं सुनेत्रां चारु-भूषणाम् । त्रिनेत्रां बहुनेत्रां च चारुकुण्डलशोभिताम् ५ शिवां शिवप्रियां रम्यां रामदुःखप्रणाशिनीम् । पुराणां पुण्यदां पुण्यामेभिः श्यामां प्रपूजयेत् ६ प्रणवादिनमोन्तैस्तु अष्टाविंशतिभिस्ततः । पूजयेच्छक्तितो देवीं मन्त्रैर्वैदिकतान्त्रिकैः ७ गन्धैःपुष्पैस्तथा धूपैर्दीपनैवेद्य-पायसैः । बलिदानैस्तु सन्तोष्य दक्षिणाभिश्च तोषयेत् ८ सुवासिन्योथ गायन्त्यो गृहाङ्गणविभूषणैः । अर्द्धरात्रे तयोर्मध्ये बालकौ मातृसंयुतौ ९ परस्परांके विन्यस्य मौनेनैव विधान वित् । परस्परोपायनं च पूर्ववत्संप्रकल्पयेत् १० दक्षिणाभिस्तथा वस्त्रैः परस्परोपपाणिषु । मोदकानि विचित्राणि देयानि च तथा क्रमात् ११ अन्योन्यवीक्षणं कुर्याद्बालकेभ्योथ मातृभिः । ततः स्वभवनं विश्य गीतवादित्रनिः-स्वनैः १२ श्यामां पुनःपूज्य महेशतर्प्पिणीं कामप्रदां दुःखनुतां शिवप्रदाम् । बालार्तिहन्त्रीं प्रसवाघनाशिनीं दिव्यां दिविस्थां परितोष-मानाम् १३ इति कृत्वा विनश्येत सहप्रसवसम्भवः । दोषस्तु गिरिजे चान्यद्वक्ष्यामि सुसमाहितः १४ ॥ इतिसहजननशान्तिः ॥

## अथ गण्डान्तशान्तिः

कांस्यपात्रं प्रदातव्यं पलैःषोडशभिर्नवम् । पूरितं नवनीतेन गण्डान्ते शांतिरुच्यते ॥ तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते । काञ्चनं लग्नगंडे तु गंडदोषो विनश्यति ॥ उत्तरे तिलपात्रं स्यात्तिष्ये गोदानमिष्यते । अजाप्रदानं त्वाष्ट्रर्क्षे पूर्वाषाढासु काञ्चनम् ॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजां बुधः ॥ इति तत्र गणेश पूजादिपूर्वाङ्गं विधाय द्रव्य-वस्त्राद्यैराचार्य्यवरणं कृत्वा षोडशपलात्मकं कांस्यपात्रं पलचतुष्टयमितेन पायसेन पूरयित्वा तत्र शंखं नवनीतपूरितं पूर्वाग्रं संस्थाप्य तत्र स्थापितां राजसीं प्रतिमां तन्मत्रेण संपूज्य श्वेतपुष्पसहस्रेण पुष्पाञ्जलिं दत्वा तदुत्तरतः ताम्रपात्रे बृहतीप्रतिमां तन्मंत्रेण पूजयत्

दक्षिणामाचार्य्याय अन्येभ्यो विप्रेभ्यश्च दद्यात् ब्राह्मणांश्च भोजयेत् । ज्योतिर्निबन्धे तु कुंकुमचन्दनकुष्टगोरोचनानि चत्वारि घृतकुम्भचतुष्टये निक्षिप्य सहस्राक्षेण मंत्रेण बालकं स्नापयित्वा घृतपूर्णकांस्यपात्रेण सह क्षीरमौक्तिकशंखश्वेतवस्त्रयुग्मं यजुर्वेदविदे दद्यात् लग्नगण्डांते तु काञ्चनं दद्यात् इतिविशेष उक्तः । इतिगण्डान्तशान्तिः ।

## अथ कार्तिकदंष्ट्राविचारः

दिनषट्कं कन्यकायाः सप्ताहानि च कार्तिके । वराहदंष्ट्रा विज्ञेया वर्जयेत्सर्व्वकर्म्मसु ॥ इति केषांचिन्मतम् अथ सर्वसम्मतम् दंष्ट्राग्रभागे भगवान्धरित्रीं त्रयोदशाहेऽधृत कार्त्तिकस्य । तस्मिन्न कुर्य्याद्व्रतगेहवास्तुविवाहयात्राशुभमङ्गलानि ॥ तत्र शांतिः प्रकर्त्तव्या दंष्ट्रादोषनिवारिका । धेनुं पयस्विनीं दद्यात्सर्वदोषोपशांतये ॥ गर्ग उवाच—अथातः सम्प्रवक्ष्यामि दंष्ट्राया जनने फलम् । सिंहःसर्प्पस्तथा श्वानस्त्रयोदश्यव्यवस्थिताः ॥ प्रथमे ह्यात्मनाशाय पितृनाशो द्वितीयके । तृतीये मातृनाशाय चतुर्थे वंशनाशनम् ॥ पञ्चमे भ्रातरं हंति षष्ठे गोत्रक्षयो भवेत् । सप्तमे मातुलं हंति सर्वस्वं चाष्टमे तथा ॥ नवमे द्रविणं हन्ति दशमे स्वामिनं तथा । श्वश्रूमेकादशे हन्ति द्वादशे श्वशुरं तथा ॥ त्रयोदशे शुभं विद्यात् दंष्ट्रायाः फलमीदृशम् । पाताले स्वर्गमर्त्ये च चत्वारि दिनसंख्यया ॥ फलं वक्ष्यामि लोकेषु दंष्ट्राद्वादशके तथा । स्वर्गलोके भवेत्सौख्यं मर्त्यलोके महद्भयम् ॥ पाताले च भवेल्लाभो दंष्ट्रायास्तु व्यवस्थितिः । तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु ॥ ब्राह्मणान् वृणुयात्पूर्वं कुलीनान्वेदपारगान् । प्रतिमां कारयेद्विष्णोः निष्कनिष्कार्धपादतः ॥ मण्डलं कारयेत्तत्र रक्ताब्जव्रीहितण्डुलैः । तत्रैकं कलशं स्थाप्य पञ्चपल्लवसंयुतम् ॥ शतौषधानि निक्षिप्य सर्वौषधियुतानि च । वेदोक्तेन विधानेन कलशं स्थापयेद्बुधः ॥ तत्रोपरि न्यसेत्पात्रं स्वर्णं वा रौप्यताम्रकम् । तन्मध्ये प्रतिमां स्थाप्य पीताम्बरधरां शुभाम् ॥ विष्णोरराटमंत्रेण प्रतिमां पूजयेत्सुधीः । उपचारैः षोडशभिः किं वा पञ्चोपचारकैः ॥ तस्मात्तु नैर्ऋते देशे स्थण्डिलेऽग्निं प्रकल्पयेत् । स्वस्वशाखोक्तविधिना कुर्यादग्निमुखं ततः ॥ त्रिमध्वाक्तैस्तिलैर्विद्वान् होमं कुर्य्यात्स्वशक्तितः । निवर्त्य चाज्यभागान्तमभिषेकं समाचरेत् ॥ दारपुत्रसमेतस्य यजमानस्य सर्त्विजः । अक्षिभ्यामितिसूक्तेन पावमानीभिरेव च ॥ विष्णोरराटेतिऋचा शिवसंकल्पमंत्रकैः । ततःशुक्लाम्बरधरः सुभगो धातुलेपनः ॥ यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् । धेनुं पयस्विनीं तद्वत्प्रतिमां वस्त्रसंयुताम् ॥ सुप्रसन्नमना भूत्वा आचार्य्याय प्रदापयेत् । अन्येभ्यो दक्षिणां दद्यात्तदा वित्तानुसारतः ॥ भूयसी दक्षिणा देया ब्राह्मणान् भोजयेद्दश । एवं कार्तिकदंष्ट्रायाः शांतिकं कुरुते नरः ॥ सर्वान् कामानवाप्नोति जीवेद्वर्षशतं सुधीः । व्रतबन्धेभवेत्कुष्ठी दीक्षा चापि सुनिष्फला ॥ विवाहे चैव वैधव्यं दंष्ट्रायाः फलमीदृशम् । इतिकार्तिकदंष्ट्राजननशान्तिः ॥

## अथ कृष्णचतुर्दशीजननशान्तिविचारः

कृष्णपक्षे चतुर्दश्यां प्रसूतिर्जायते यदि । चतुर्दश्यास्तु षट्भागान्कुर्य्यादाद्ये शुभं भवेत् ॥ द्वितीये पितरं हन्ति तृतीयेमातरं तथा । चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम्(मातुलस्य)॥ षष्ठे तु धनहानिःस्यादात्मनो वंशनाशनम् । तस्मात्सर्वप्रयत्नेन शांतिं कुर्य्यात्प्रयत्नतः ॥ आचार्य्यं

वरयेद्धीमान् पुत्रदारसमन्वितम् । स्वकर्म्मनिरतं शान्तं श्रोत्रियं वेदपारगम् ॥ सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतम् । ब्राह्मणमृत्विजश्चैव स्वस्तिवाचनपूर्वकम् ॥ रुद्राधिदेवतां तस्याः कर्षमात्रसुवर्णतः । दतर्धेन तदर्धेन कुर्याद्वा शाठ्यवर्जितः ॥ प्रतिमां कारयेच्छक्त्या सर्वलक्षणसंयुताम् । वृषभे च समासीनं वरदाभयपाणिनम् ॥ शुद्धस्फटिकसंकाशं श्वेतमाल्याम्बरान्वितम् । त्रैयम्बकेन मन्त्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुम्भान् चतुर्दिक्षु यथाक्रमम् । पुण्यतीर्थजलोपेतान्धान्यस्योपरि विन्यसेत् ॥ तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् । पञ्चमृत्पंचरत्नानि पञ्चत्वक्पञ्चपल्लवाः ॥ सप्तधान्यं सुवर्णं च तत्तन्मन्त्रैर्विनिक्षिपेत् । सर्वौषधानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ॥ सुरभीणि च सर्वाणि श्वेतानि परिकल्पयेत् । सर्वे समुद्राःसरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः । आवाह्य वारुणैर्मन्त्रैरनेनैव विधानतः ॥ इमम्मे वरुणेत्यनया तत्त्वायामीत्यृचा तथा । त्वन्नोऽअग्न इत्यनया सत्वन्न इति मन्त्रतः ॥ आग्नेयकुम्भमारभ्य पूजां कुर्याद्यथाविधिं । आ नो भद्रा इतिसूक्तं भद्राग्निश्च सुसूक्तकम् ॥ जाप्यं तु पौरुषं सूक्तं रुद्रजाय यथाक्रमम् । ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् ॥ पूजाकर्म्म सुनिर्वर्त्य होमं कुर्याद्विधानतः । गृहादीशानदिग्भागे कुण्डं कुर्याद्यथाविधि ॥ समिदाज्यं चरुश्चैव तिला माषाश्च सर्षपाः । अश्वत्थप्लक्षपालाशसमिद्भिःखदिरैःक्रमात् ॥ अष्टोत्तरसहस्रं तु अष्टोत्तरशतं तथा । अष्टाविंशतिसंख्यैश्च होमं कुर्याद्यथाविधि ॥ त्रैयम्बकेन मन्त्रेण तिलान् व्याहृतिभिःक्रमात् । कृत्वा होमश्च कर्त्तव्य अस्मदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समाप्य च । सर्वालङ्कारसंयुक्तं त्रयाणामभिषेचनम् ॥ त्रयाणां मातापितृशिशूनाम् । चतुर्भिःकलशैरद्भिर्बृहत्कुम्भसमन्वितैः । धौताम्बराणि धृत्वाथ कुर्य्यादाज्यावलोकनम् ॥ पूर्णाहुतिं च जुहुयाद्यजमानःसमाहितः । तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥ सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीम् । प्रतिमां वस्त्रयुग्म च आचार्य्याय निवेदयेत् ॥ भूयसीं चैव दत्वाथ ब्राह्मणान् भोजयेत्तथा । तस्मादेतेन विधिना वित्तशाठ्यविवर्जितः ॥ सर्वान्कामानवाप्नोति चिरजीवी सुखी भवेत् । एवं यः कुरुते शान्तिं स च पापविवर्जितः ॥ इतिकृष्णचतुर्दशीजननशान्तिविचारः ॥

## अथ पितृगृहे जातरजस्वलाशान्तिः

तत्र केनचिद्वाराहपुराणात्कात्यायनविधानमूलकत्वेन पितृगृहे कन्यायाः जातरजोदोषहरणशान्तिरित्थं सूत्रिता अत्र देवताः गणेशसिद्धिबुद्धीन्द्रेन्द्राणीविष्णुश्रियः आसां प्रतिमाःसम्पूज्य अग्निं संस्थाप्य आज्यभागान्ते गणानान्त्वेति गणेशं अम्बे अम्बिके इति सिद्धिं बुद्धिं च इन्द्रं देवा इति इन्द्रेन्द्राण्यौ इदं विष्णुरिति विष्णुम् श्रीश्च त इति श्रियम् सम्पूज्य एभिरेव मन्त्रैरष्टाविंशतिसंख्यया पृथक्पृथक् जुहुयात् तथैव ग्रहाणामपि स्वस्वमन्त्रैरष्टाविंशतिसंख्यया होमं विधाय भूरादिस्विष्टकृदन्तं पूर्णाहुतिं च हुत्वा उत्तराङ्गत्वेन गणेशादीन्सम्पूज्य बलिदानं विधाय आचार्य्याय गोवस्त्रहिरण्यादिप्रतिमाभिःसह दद्यात् ब्राह्मणांश्च भोजयेत् इति अथ प्रयोगसूचिका तत्रादौ प्रधानसंकल्पः अद्येहेत्यादि अमुकोहं मम गृहे कन्यायाः जातप्रथमरजोदर्शनसूचितसकलारिष्टनिवृत्यर्थं वाराहपुराणोक्तप्रकारेण शांतिं करिष्ये तदङ्गतया गणेशपूजामातृपूजापुण्याहवाचनानि करिष्ये इतिसंकल्प्य तानि विधाय आचार्य्यब्रह्मणोर्वरणं कृत्वा वेद्यां पञ्चभूसंस्कारपूर्वकं

वरदनामाग्निं संस्थाप्यावाह्य कलशविधिना कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य रक्षां विधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीताप्रणयनादिपर्य्युक्षणान्तं कर्म्म निर्वर्त्त्य सुवर्णनिर्मितप्रतिमासु गणेशसिद्धिबुद्धीन्द्रेन्द्राणीविष्णुश्रीणां तत्तन्मन्त्रैः पञ्चामृतस्नानपूर्वकं पूजनं कुर्य्यात् मन्त्राश्च गणनान्त्वा० १ अम्बे० २ इन्द्रं देवाऽआवृणानाःसुमृर्डीको भवतु जातवेदाः ३ इदं विष्णुरिति० ४ श्रीश्च त इति ५ ॥ वरदनामाग्निं च सम्पूज्य द्रव्यत्यागसंकल्पं कुर्यात् अद्येहेत्यादि संकीर्त्य स्वगृहजातकन्यारजोदोषशांतिकर्म्मणाहं यक्ष्ये तत्र आघाराज्यभागौ आज्येन गणेशसिद्धिबुद्धीन्द्रेन्द्राणीविष्णुश्रियः प्रत्येकमष्टाविंशतिसंख्ययाज्येन स्विष्टकृतं चाज्येन यक्ष्ये इति द्रव्यत्यागं विधाय पूर्वोक्तैर्मंत्रैः प्रत्येकमष्टाविंशतिसंख्यया हुत्वा तथा नवग्रहाणांच तत्तन्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याभिर्होमं विधाय भूरादिनवाहुतिहोमं स्विष्टकृदग्निं च हुत्वा संस्रवप्राशनादि पूर्णपात्रदानान्तं कर्म्म निर्वर्त्य पूगीफलेन पूर्णाहुतिं हुत्वा उत्तराङ्गपूजनं विधाय आचार्यं सम्पूजयेत् अद्येहेत्यादि अमुकोहं मम गृहे कन्यायाःजातप्रथमरजोदर्शनसूचितमकलारिष्टनिवृत्यर्थं शान्त्यर्थं च वाराहपुराणोक्तप्रकारेण कृतस्यास्य शान्तिकर्म्मणःसाद्गुण्यार्थं इमां गां गोनिष्क्रयीभूतं सुवर्णादिद्रव्यं वा आचार्य्याय तुभ्यं संप्रददे तथेमाःसुपूजिताः सौवर्णीर्गणेशादिप्रतिमाश्च तुभ्यं सम्प्रददे ॐतत्सत् इति दत्वा भूयसीं दक्षिणां च संकल्प्य दत्वा बलिदानं च विधाय घृतच्छायारक्षाबन्धनाभिषेकतिलकाशीर्ग्रहणं च कृत्वा ब्राह्मणान्भोजयित्वा स्वयं भुञ्जीत ॥ इति पितृगृहे जातरजस्वलाशांतिः ॥

## अथ मेषसङ्क्रमणशान्तिः

तत्र पूर्वं गणेशं सम्पूज्य शान्तिकर्म्मणः पूर्वाङ्गत्वेन पुण्याहं वाचयित्वा प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं मम निजनक्षत्रात्संक्रांतिनक्षत्रस्य विषुवत्पुरुषनामपादपतितत्वात् सूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये रुद्रयामलोक्तप्रकारेण मेषसंक्रमणशांतिं करिष्ये इति संकल्प्य आचार्यं गन्धपुष्पाक्षतैः संपूज्य वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यैः करिष्यमाणमेषसंक्रमणशान्तिकर्मणि आचार्य्यकर्म्मकर्त्तुं त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः आचार्य्यस्त्विति० प्रार्थना तत आचार्य्यः हस्तमात्रां वेदीं निर्म्माय तत्र पञ्चभूसंस्कारपूर्वकमग्निसंस्थाप्य कलशविधिना कलशं संस्थाप्य (पृ० ११-१२) तत्र नवग्रहानावाह्य सम्पूज्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म्मकृत्वा ( पृ० १२ ) सुवर्णप्रतिमायां गोविन्दं पूजयेत् प्रतिमाम् अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां गोविन्ददेव सुप्रतिष्ठितो भव इतिप्रतिष्ठाप्य देशकालौ संकीर्त्य अमुकोहं मम निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये सुवर्णप्रतिमायां गोविन्ददेवस्य यथामिलितोपचारैः पूजनं करिष्ये ध्यानम् अधश्चक्रं गदामूर्द्ध्वे वामयोःकरयोः क्रमात् । ऊर्द्ध्वे शंखमधः पद्मं गोविन्दे कपिलाङ्गके ॥ गोविन्दाय नम इति नाममंत्रेण च आवाहनादिनीराजनान्तं सम्पूज्य प्रार्थयेत् नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमोनमः । इतिसम्प्रार्थ्य महाँइन्द्रेतिमंत्रेण मध्वाज्यशर्कराभिर्जुहुयात् द्रव्यत्यागः देशकालकीर्त्तनान्ते अमुकोहं निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये नवानां ग्रहाणां प्रीतये मध्वाज्यशर्कराद्रव्येण यक्षे इदं सम्पादितमध्वाज्य-

शर्कराद्रव्यं माधवप्रीतये मया परित्यक्तं यथादैवतमस्तु ततो वरदनामानमग्निं संस्थाप्यावाह्य आघारावाज्यभागौ हुत्वा ॐमहाँ इन्द्रो-वज्रहस्तः षोडशी शर्म्म यच्छतु हन्तु पाप्मानं योस्मान्द्वेष्टि उपयाम गृहीतोसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा स्वाहा इतिमंत्रेण सहस्रम् अष्टोत्तरशतं अष्टाविंशतिरष्टौवा आहुतीर्जुहुयात् ततो भूरादिनवाहुतीर्हुत्वा स्विष्टकृतं च जुहुयात् ( पृ० १३ ) ततः संस्रव-प्राशनादिपूर्णपात्रदानान्तं कुर्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं मेषसंक्रमणशान्तिकर्मणः अपूर्णपूर्णार्थम् इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं संप्रदद् ब्रह्मा च गृहीत्वा अक्रन्कर्मेति मंत्राशिषं दद्यात् ततो यजमानः उत्तराङ्गत्वेन पूजनं विधाय होमसांगतां कुर्य्यात् अद्येहे-त्यादि अमुकोहं मम निजनक्षत्रात्संक्रांतिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये मध्वाज्यशर्कराद्रव्येण अमुकसंख्यया होमकर्म्मणः साद्गुण्यार्थम् इदं सुवर्णं सुवर्णप्रत्याम्नायीभूतं द्रव्यं वा आचार्य्याय दातुमहमुत्सृजे तथा इमां सुपूजितां सौवर्णीं गोविन्दप्रतिमां च आचार्य्याय सम्प्रदद् तथा इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये तथा सिद्धान्नेन अमुकसंख्याकान् ब्राह्मणाँश्च भोजयिष्ये ॐतत्सत् इति संकल्प्य होमदक्षिणां प्रतिमां च आचार्य्याय दत्वा ब्राह्मणेभ्यो दक्षिणां विभज्य कलशे नवग्रहा-नग्निं च विसृज्य घृतच्छायां रक्षाबन्धनं अभिषेकतिलकाशीग्रहानि कृत्वा कर्मेश्वरार्पणं कुर्यात् मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः । सर्वं करोति निश्छिद्रं नामसंकीर्त्तन प्रभोः ॥ इदं कर्म्मश्रीमाधवार्पणमस्तु ॐयस्यस्मृत्येति पठेत् ॥ इति मेषसंक्रमणशान्तिः ॥

## अथ तुलासंक्रमणशान्तिप्रयोगः

तत्र पूर्वं गणेशं सम्पूज्य शान्तिकर्म्मणः पूर्वाङ्गत्वेन पुण्याहं वाचयित्वा प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं निजनक्षत्र-गणनात्संक्रान्तिनक्षत्रस्य विषुत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तये शुभफलप्राप्तये रुद्रयामलोक्तप्रकारेण शान्तिं करिष्ये तदङ्गत्वेन आचार्य्यस्य पूजनपूर्वकं वरणं च करिष्ये इतिसंकल्प्य आचार्यं अर्घादिभिः सम्पूज्य वरणसामग्रीं करे कृत्वा एभिर्गंधाक्षत-पुष्पपूगीफलद्रव्यैः करिष्यमाणतुलासंक्रमणशान्तिकर्म्मणि आचार्य्यकर्म्म कर्त्तुं आचार्य्यत्वेन त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः । आचार्य्यस्त्वित्यादिप्रार्थना । एवं ब्रह्मवरणं च कुर्यात् तत आचार्य्यः हस्तमात्रां वेदीं निर्माय तत्र पञ्चभूसँस्कारपूर्वक-मग्निं संस्थाप्य वेद्या ईशानभागे कलशविधिना कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीताप्रणय-नादि पर्युक्षणान्तं कर्म्म कुर्यात् ततो गोविन्दप्रतिमां अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां गोविन्ददेव सुप्रतिष्ठितो भव पूजासंकल्पः अद्येहेत्यादि अमुकोहं मम निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारि-ष्टनिवृत्तिपूर्वकशुभफलप्राप्तये सुवर्णप्रतिमायां गोविन्ददेवस्य यथामिलितोपचारैः पूजनं करिष्ये ध्यानम् अधश्चक्रं गदामूर्द्ध्वे वामयोः करयोः क्रमात् । ऊर्द्ध्वे शंखमधःपद्मं गोविन्दे कपिलाङ्कके१ एवं ध्यात्वा ॐविष्णोःरराटमसि विष्णोःश्नप्त्रेस्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा इति वेदमंत्रेण ॐगोविन्दाय नमः इति नाममंत्रेण च आवाहनादि नीराजनान्तं सम्पूज्य प्रार्थयेत् नमो ब्रह्मण्य-देवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥ एवं गोविन्दं सम्पूज्य शुक्रज्योतिरिति मंत्रेण आज्यमधु-

युक्तोदुंबरैर्जुहुयात् उदुंबराभावे तिलाज्येन जुहुयात् द्रव्यत्यागसंकल्पः पूर्ववद्देशकालौ स्मृत्वा अमुकोहं मम निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तये श्रीगोविन्दप्रीतिद्वारा नवानां ग्रहाणां प्रीतये आज्यमधुयुक्तोदुंबरसमिद्द्रव्यैर्यक्ष्ये तत्र आधाराज्यभागदेवताभ्य इदमाज्यं तथेदं सम्पादितमाज्यमधुयुक्तोदुंबरसमिद्द्रव्यं श्रीगोविन्दप्रीतये मया त्यक्तं यथादैवतमस्तु इतित्यागं विधाय पर्युक्षणान्तं कर्म्म कृत्वा वरदनामाग्निमावाह्य सम्पूज्य आधारावाज्यभागौ हुत्वा प्रकृतं जुहुयात् ॐशुक्रज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्योतिष्माँश्च शुक्रश्चऽऋतपा श्चात्यꣳहाःस्वाहा इतिमंत्रेण अष्टोत्तरसहस्रं अष्टोत्तरशतं अष्टाविंशतिः/अष्टौ वा आहुतीर्यथाशक्ति जुहुयात् ततो भूरादिनवाहुतिहोमं पूर्णाहुतिं च विधाय ब्रह्मणे पूर्णपात्रं दत्वा उत्तरांगत्वेन पूजनं विधाय सांगतां कुर्य्यात् देशकालौ स्मृत्वा अमुकोहं मम निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये रुद्रयामलोक्तप्रकारेण कृतस्य शान्तिकर्म्मणः सांगतासिद्ध्यर्थं गोप्रत्याम्नायीभूतमिदं सुवर्णं तथेमां सुपूजितां गोविन्दप्रतिमां च आचार्य्याय तुभ्यमहं सम्प्रददे तथा कलशमध्ये आवाहितानां वरुणसहितादित्यादिनवग्रहाणां पूजासाङ्गतासिद्ध्यर्थं इमां दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये तथा सिद्धान्नेन अमुकसंख्याकान् ब्राह्मणाँश्च भोजयिष्ये ॐतत्सत् इतिसंकल्प्य होमदक्षिणां प्रतिमां च आचार्य्याय दत्वा कलशे ग्रहान् अग्निं च विसृज्य ब्राह्मणेभ्यो दक्षिणां दत्वा घृतच्छायारक्षाबन्धनाभिषेकतिलकाशीर्ग्रहणानि कृत्वा मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं प्रभोः ॥ इदं कर्म्म श्रीगोविन्दार्पणमस्तु यस्य स्मृत्येतिच पठित्वा यथासुखं विहरेत् ॥ इतितुलासंक्रमणशान्तिप्रयोगः ॥

## अथ ग्रहणशान्तिः

यस्य जन्म राशौ ग्रहणं भवति स एकवारं ग्रहणं दृष्ट्वा मत्स्यपुराणोक्तविधिना स्नानं कृत्वा पुनर्न पश्येत् विधिश्च यस्यराशिं समासाद्य भवेत् ग्रहणसम्भवः । तस्य स्नानं प्रवक्ष्यामि मंत्रौषधिसमन्वितम् ॥ चन्द्रोपरागं सम्प्राप्य कृत्वा ब्राह्मणवाचनम् । सम्पूज्य च गुरुं विप्रान् शुक्लमाल्यानुलेपनैः ॥ पूर्वमेवोपरागस्य समानीयौषधादिकम् । स्थापयेच्चतुरः कुम्भानग्रतः सागराणि च ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । राजद्वारप्रवेशाच्च मृदमानीय निक्षिपेत् ॥ पञ्चगव्यं पञ्चरत्नं पञ्चत्वक्पञ्चपल्लवम् । रोचनं पद्मकं शंखं कुंकुमं रक्तचंदनम् ॥ शुद्धस्फटिकतीर्थांबु सितसर्षपगुग्गुलून् । मधूकं देवदारुं च विष्णुकान्तां शतावरीम् ॥ वचां च सहदेवीं च निशाद्वितयमेव च । एतत्सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत्सुरान् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ॥ चन्द्रोपरागसम्भूतामग्निः पीडां व्यपोहतु । यः कर्म्मसाक्षी भूतानां धर्म्मो महिषवाहनः ॥ यमश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु। रक्षोगणाधिपः साक्षान्नीलाञ्जनसमप्रभः ॥ खड्गहस्तोतिभीमश्च ग्रहपीडां व्यपोहतु। नागपाशधरो देवः सदा मकरवाहनः। स जलाधिपतिः श्रीमान् ग्रहपीडां व्यपोहतु॥ प्राणरूपो हि लोकानां सदा कृष्णमृगप्रियः । वायुश्चन्द्रोपरागोत्थां

ग्रहपीडां व्यपोहतु ॥ योसौ निधिपतिर्देवः खड्गशूलगदाधरः। चन्द्रोपरागकलुषं धनदोत्र व्यपोहतु॥ योसाविन्दुधरो देवः पिनाकी वृषवाहनः। चन्द्रोपरागपापानि स नाशयतु शंकरः॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णुशिवैः सार्द्धं दहन्तु मम पातकम् ॥ एवमावाहयेत्कुम्भान्मंत्रैरेभिश्चवारुणैः। एतानेव तथामन्त्रान्स्वर्णपट्टे विलेखयेत् ॥ अथवा ताम्रपट्टे च नववस्त्रेथवा लिखेत्। मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः॥ आचार्य्यवरणं कृत्वा स्वर्णपट्टं निवेदयेत्। ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः॥ पूजयेद्वस्त्रगोदानैराचार्य्यादींस्वभक्तितः। गन्धमाल्यैस्तथाधूपैः पूजयेदिष्टदेवताम्॥ होमं चैव प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा। निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो विशेषतः॥दानं च शक्तितो दद्याद्दीच्छेच्छुभमात्मनः॥ कलशान्द्रव्यसंयुक्तान्नानारूपगुणान्वितान्॥ गृहीत्वा स्नापयेद्गूढं भद्रपीठोपरिस्थितम्। पूर्वोक्तैरेव मंत्रैश्च यजमानं द्विजोत्तमाः॥ अभिषिक्तं ततः कुर्य्युर्मंत्रैर्वारुणसूक्तकैः। सूर्य्यग्रहे सूर्य्यनाम युक्तान्मंत्रान्प्रकीर्त्तयेत्॥ एवं कृत्वा तु ग्रहणे राशिदोषो विनश्यति। सर्वोपद्रवशान्तिश्च भवत्येव न संशयः॥ तत्रैव राशिस्थग्रहणदोषपरिहारार्थं सुवर्णमयं नागं कृत्वा ब्राह्मणाय दद्यात् दानवाक्यम् तमोमय महाभाग सोमसूर्य्यप्रमर्दन। हेमनागप्रदानेन मम शांतिकरो भव॥ इति ग्रहणशांतिः॥

## सीतामृतसर्प्पशान्तिः

शांतिं च क्षेत्रमध्य एव कुर्य्यात् तत्र पूर्वं गणेशपूजां मातृपूजां च विधाय प्रधानसंकल्पं कुर्य्यात् इति क्रमः। अथ शान्तिप्रकारः—हलप्रवाहसमये फालेनास्फाटितोरगः। म्रियते यस्य मर्त्यस्य क्षेत्रे तत्र महद्भयम्॥ मरणं वा गृहपतेर्दुर्भिक्षागमनं तथा। तत्र शान्तिः प्रकर्त्तव्या कार्त्तिकेयेन चोदिता॥ आदौ गणेशं सम्पूज्य क्षेत्रपालं तथैवच। मृत्युञ्जयस्य प्रतिमां वस्त्रे वा लेखयेद् बुधः। तस्मिन्सर्पेश्वरं लेख्य कण्ठे कृत्वाऽरुणं वपुः॥ त्रिनेत्रं द्विभुजं पीतवस्त्रेणाच्छादितं वरम्। त्र्यंबकेणैव मंत्रेण पूजयेद्विधिना प्रिये॥ मृत्युञ्जयं सर्प्पराजकण्ठे चैव प्रपूजयेत्। नमोऽस्तु सर्प्पेभ्य इति चानेन होमं प्रकल्पयेत्॥ चरुं घृतेन च तथा होमान्तेह्यभिषेकयेत्। दारपुत्रसमेतस्य यजमानस्य वा तथा॥ वृषभौ लांगलोपेतौ विसृज्य च प्रदापयेत्। मूल्यं वाऽपि तदर्धं वा तदर्धं वा प्रदापयेत्॥ वित्तशाठ्यं न कर्त्तव्यं यदि चेत्सिद्धिमिच्छति। शिवद्वारे प्रकर्त्तव्यं वृषानारोहणं तथा॥ इति सीतामृतसर्पशान्तिः॥

## अथ प्रवाहणे वृषभपतनशान्तिः

अक्षभंगे तथा द्वन्द्वे वृषाणां पतने तथा। हलप्रवाहे बद्धस्य वृषभस्य प्रमोषणे॥ याने वाहनियुक्ते वा गमने भारसंयुते। मृते शांतिः प्रकर्त्तव्या शान्त्यागमप्रचोदिता॥ ब्राह्मणान् वरयेत्पूर्वं वेदाध्ययनतत्परान्। प्रतिमां कारयेत्तत्र स्वर्णरौप्यादिधातुभिः। तत्र संलेखयेद्विष्णुं महेशं च पृथक् पृथक्। हलायुधं तथा विष्णुं त्रिशूलधारिणं हरम्॥ तत्तन्मन्त्रैश्च सम्पूज्य वेदोक्तेन विधानतः। स्वशाखोक्तेन मार्गेण संस्थाप्याग्निं तु मंडले॥ जुहुयादयुतं वाऽपि सहस्रं वा विशेषतः। शतमष्टोत्तरं वाऽपि शिवसंकल्पमंत्रकैः॥ होमान्तेऽथ समाविष्टं यजमानं निषिंचयेत्। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः॥ वाणी रमा च गिरिजा सेन्द्रा देवादयस्तथा। मरीचिरत्र्यंगिरसौ पुलस्त्यः क्रतुरेवच॥ पुलहोऽसितपाश्चैव वशिष्ठो भृगुरेव च। नारदः कुम्भयोनिश्च दक्षश्चैव मृकण्डुजः॥ सर्वे

त्वामभिषिञ्चन्तु ऋषयो योगतत्पराः । सिद्धा नागाश्च वेताला यक्षाः किंपुरुषास्तथा ॥ विद्याधराप्सरश्चैव नक्षत्राणि ग्रहास्तथा । वेद-मंत्रैश्च कर्त्तव्यो ह्यभिषेको विशेषतः ॥ देवस्यत्वेति च ऋचो वाश्विनौ भेषजेन च । कोसि कतमोसि च तथा मंत्रश्चान्यैश्च कारयेत् ॥ प्रतिक्षेत्रे प्रतितथा यज्ञान्ते च तथैव च । आत्वाहार्षं तथा पश्चात्प्रपठेद्विधिवच्छुचिः ॥ एवं कृत्वा महादेवि प्रतिमां विनिवेदयेत् । आचार्य्याय भवेत्तेन दोषदुःखविनाशनम् ॥ ब्राह्मणान्भोजयेत्पश्चाद्दीनान्धकृपणाँस्तथा । एवं यः कुरुते शान्तिं तस्य विघ्नं न जायते ॥ इति हलप्रवाहे वृषभपतनशान्तिः ॥

## अथ सर्प्पयुग्मदर्शनशान्तिः

ईश्वर उवाच—सर्प्पयुग्मं यदा पश्येत्तदा हानिः प्रजायते। अर्थहानिर्भवेत्तस्य शरीरे व्याधिपीडनम् ॥ तत्रचाष्टोत्तरशतं जुहुया-दाज्य संयुताम् । नमोस्तु सर्प्पेभ्य इति गुडूचीं तु यथाविधि ॥ मृत्युञ्जयस्य प्रतिमां त्र्यंबकेंतप्रपूजयेत् ॥ इतिसर्प्पद्वन्द्वशान्तिः ॥

## अथ सारमेयशान्तिः

ईश्वर उवाच —सारमेयो यस्य गृहे चास्थिचादाय मानुषम् । प्रविशेच्चोपरि रुदन् तस्य शान्तिं वदाम्यहम् ॥ स्वामिनस्तस्य नाशाय पुत्रार्थस्त्रीक्षयाय च । नरकागमनायाथ सप्ताहात्कथयत्यसौ ॥ शांतिं तत्र प्रवक्ष्यामो यथाकृत्वा भवेत् सुखम् । मृत्युञ्जयस्य प्रतिमां कारयेद्वित्तसम्भवाम् ॥ ॐजूँस इतिमंत्रेण ऋचा वा त्र्यम्बकेति च । पुनराधेति मंत्रेण जुहुयाच्च शतत्रयम् ॥ मधुपायसयोर्होमः शिवसंकल्पमंत्रकैः । वेदमंत्रैश्च शान्त्युक्तैरभिषेकं प्रकल्पयेत् ॥ प्रतिमां वस्त्रसंयुक्तां वृषभेन समन्विताम् । श्री रुद्रजापिने दद्यात्ततः शान्तिर्भविष्यति ॥ इतिसारमेयशान्तिः ॥

## अथ काकविष्ठाविचारः

आश्रयस्थो यदा काको विष्ठां सम्पद्यते यदि । क्षीरवृक्षसमारूढस्तस्य सिद्धिरनेकधा ॥ शुष्कवृक्षसमारूढो विष्ठां सम्पद्यते यदा । तस्य लक्ष्मीः क्षयं याति त्रिभिर्मासैर्नसंशयः ॥ निरालम्बो यदा काको विष्ठां सम्पद्यते यदि । शिरसि पतति यस्य षण्मासात्तस्य मृत्युदः ॥ स्कन्धे वा ह्यथवा पृष्ठे विष्ठा पतति यस्य चेत् । भ्रातृकष्टं भवेत्तस्य अथवा देहनाशनम् ॥ बाह्वोः पतति विष्ठा तु मित्रनाशो-भवेत्तदा । कुक्षौ पुत्रान्निहन्त्याशु उदरे रोगमादिशेत् ॥ गुह्ये पतति यस्यैव पुत्रनाशो भवेत्तदा । ऊरुषु जानुनोर्यस्य काकविष्ठा प्रपद्यते ॥ तद्वाहनस्य नाशःस्याद्भयं राज्ञःसकाशतः । चरणे प्रपतेद्यस्य देशत्यागो भवेत्तदा ॥ निरालम्बो यदा काको विष्ठां श्वेतां करोति चेत् । उत्तरतःपूर्वमायाति शत्रुनाशो भवेत्तदा ॥ याम्याःपरां दिशं याति कृष्णां विष्ठां प्रपद्यते । अब्दाभ्यन्तरतो मृत्युः सर्व-नाशो भवेत्तदा ॥ यस्याङ्गे प्रपतेद्विष्ठा सचैलं स्नानमाचरेत् । वस्त्रत्यागो भवेत्तस्य सद्यःशान्तिकरो हि सः ॥ धेनुरेका च दातव्या सर्वालङ्कारशोभिता । पञ्चरत्नं च दातव्यं दक्षिणाचैव शक्तितः ॥ सतिलैर्मधुभिर्होममष्टोत्तरशतं चरेत् ॥ अथप्रयोगः अद्येहेत्यादि अमु-कोहं ममामुकांगे काकविष्ठापतनजनितदुष्टदोषोपशान्त्यर्थं सचैलस्नानं करिष्ये इतिसंकल्प्य सचैल स्नानवस्त्राणि परित्यज्यान्यवासः

परिधाय स्थंण्डिलेऽग्निमुपसमाधाय वरदनामाग्निमावाह्य तदीशाने कलशविधिना कलशं संस्थाप्य तत्र ग्रहान्सम्पूज्य ब्रह्मोपवेशनादिपर्य्युक्षणान्तं कर्म कृत्वा होमसंकल्पं विधाय आज्येन आघारावाज्यभागौ हुत्वा मधुतिलसर्पिर्भिः हरिटिमिरिटिकाकचाण्डालाय स्वाहा अंशुभ्यो नमः श्वपचेभ्यो नमः वायसेभ्यो नमः पतंगेभ्यो नमः पापरागिभ्यो नमः यमदूतेभ्यो नमः इतिमंत्रविभागेनाष्टोत्तरशतं होमं विधाय उत्तरतंत्रं समाप्य स्वशक्त्या दक्षिणां दद्यात् होमाशक्तौ तु सचैलं स्नात्वा तिलपात्रसहितमाषान्नदानं घृतच्छायां च कुर्यात् सप्तशतीपाठं कुर्यात् कारयेद्वा एतत्तत्क्षणमेव तत्रसंकल्पः अद्येहेत्यादि अमुकोऽहं ममामुकांगे काकविष्ठापतनसूचितसकलदोषपरिहाराय सदक्षिणानिमान्माषान् इदं तिलपात्रं च ब्राह्मणाय दातुमुत्सृजे तत्सत् इतिसंकल्प्य ब्राह्मणाय दद्यात् एवंकृते तद्दोषपरिहारःस्यात् ॥इति॥

### अथ श्वेतकाकशान्तिः

श्वेतपक्षो यदा काको दृश्यते यस्य मंडले । स्वामिमंडलयोर्नाशो याम्याशायां तु निश्चितम् ॥ तत्र शान्तिःप्रकर्त्तव्या सर्वदोषोपशान्तये । यमायत्वेतिमंत्रेण तिलमाषादि होमयेत् ॥ विप्राय महिषं दद्याद्यथालंकारभूषितम् ॥ इतिश्वेतकाकदर्शनशान्तिः ॥

### अथ पल्लीपतनसरटप्ररोहणे

पल्ल्याश्च पतनं शस्तं सरटस्य प्ररोहणम् । विपरीते सप्तशतीपाठादि कारयेत् ॥ इति ॥ इतिशान्तिप्रकरणम् ॥

---

# दशकर्मादिपद्धतिः—दानादिप्रकरणम्

### अथ दानविधिः

सूर्यारुणसंवादे—स्नात्वा नित्यक्रियां कृत्वा कर्ता शुचिरलङ्कृतः । ब्राह्मणान् देयवस्तूनि गन्धाद्यैरर्चयेत् सुत ॥ दानं ददेहममुकं दद्याद्विप्रकरे जलम् । ददस्वेति द्विजेनोक्तमिति दानविधिः स्मृतः ॥ ॐतत्सत्पूर्वमुच्चार्य गृहीत्वा तु करे जलम् । सतिलकुशहस्तस्तु कालज्ञानं समुच्चरेत् ॥ प्राङ्मुखश्चोदङ्मुखो वा पैत्रे याम्यमुखस्तथा । वामेन पाणिना स्पृष्ट्वा स्मरेत्तद्वस्तुदैवतम् ॥ विप्रायामुकगोत्रायामुककामो ह्यहं ददे । न ममेत्युत्सृजेदेवं द्विजहस्ते जलं खग ॥ स्वस्तीत्युक्तं च विप्रेण दानमक्षयतां नयेत् । तद्दानमिति संप्रोक्तमन्यत्त्याग इति स्मृतम् ॥ कन्यादानं त्रिपुरुषगोत्रोच्चारणपूर्वकम् । गो कन्या प्रतिमा शय्या एकैकस्य प्रदापयेत् ॥ विभज्य विधिना दाता नतत्फलमवाप्नुयात् । गौतमश्च—अन्तर्जानुकरं कृत्वा सकुशं तु तिलोदकम् । फलान्यपि च सन्धाय प्रदद्याच्छ्रद्धयान्वितः ॥ इति अन्यच्च—द्रव्याणामथ सर्वेषां देवसत्रयवान्नरः । वाचयेज्जलमादाय करेणाथ प्रतिग्रहम् ॥ दातुर्मन्त्रप्रयोगान्ते ह्यमुकस्मै सुराय वै । इदमों प्रतिगृह्णामि तदन्ते स्वस्ति कीर्तयेत् ॥ इति दानविधिः ॥

## अथ प्रतिग्रहविधिः

भूमेः प्रतिग्रहं कुर्याद् भूमिं कुर्वन्प्रदक्षिणम् । करे गृहीत्वा कन्यां तु दासदास्यौ द्विजोत्तमः ॥ करं तु हृदि विन्यस्य धर्म्यो ज्ञेयो प्रतिग्रहः । आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्तितः ॥ तथा चैकशफानां तु सर्वेषां वा विशेषतः । प्रतिगृह्णीत ताञ्छृङ्गे पुच्छे कृष्णाजिनं तथा ॥ शृङ्गिणामेकशफानां प्रतिग्रहः शृङ्गं स्पृष्ट्वा कार्यः । अन्येषामेकशफानां तु कर्णं स्पृष्ट्वेति व्यवस्था । आरण्याः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः । गृह्णीयान्महिषं शृङ्गे खरं वै पृष्ठदेशतः ॥ प्रतिग्रहमथोष्ट्रस्य यानानां चाधिरोहणात् । बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ॥ वस्त्रं दशान्तादादद्यात्परिधायाथवा पुनः । आरुह्योपानहौ मञ्चमारुह्यैव च पादुके ॥ वर्मध्वजौ तु संस्पृश्य प्रविश्य च तथा गृहम् । अवतीर्य च सर्वाणि जलस्थानानि वै द्विजाः ॥ ईषायां तु रथो ग्राह्यः छत्रं दण्डे तथैव च । द्रुमांश्च प्रतिगृह्णीयान्मूले न्यस्तकरे द्विजः ॥ आयुधानि समादाय तथामुच्य विभूषणम् । हेमाद्रौ परिशिष्टे—प्रतिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे ॥ मूर्ध्नि दासीमजां चैव पृष्टेऽश्वतरगर्दभौ ॥ पुत्रमुत्सङ्गमारोप्य प्रतीगृह्णीत दत्तकम् । रथं रथमुखे स्पृष्ट्वा प्रतिगृह्णीत कूबरे ॥ इति ॥

## अथ द्रव्यदेवता

विष्णुधर्मोत्तरे हेमाद्रौ—अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता । कन्यादासस्तथादासी प्राजापत्याः प्रकीर्तिताः ॥ प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः । तथा चैकशफं सर्वं कथितं यमदैवतम् ॥ महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत् । रौद्री धेनुर्विनिर्दिष्टा छागमाग्नेयमादिशेत् ॥ मेषं तु वारुणं विद्यात् वराहं वैष्णवं तथा । आरण्याः पशवः सर्वे कथिताः वायुदेवताः ॥ जलाशयानि सर्वाणि वारिधानीं कमण्डलुम् । कुम्भं च करकं चैव वारुणानि निबोधत ॥ समुद्रजानि रत्नानि वारुणानि द्विजोत्तमाः । आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ ॥ प्राजापत्यानि सस्यानि पक्वान्नमपि च द्विजाः । ज्ञेयाश्च सर्वगन्धास्तु गान्धर्वा वै विचक्षणैः ॥ बार्हस्पत्यं स्मृतं वासः सौम्या ज्ञेयारसास्तथा । पक्षिणस्तु तथा सर्वे वायव्याःपरिकीर्तिताः ॥ विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च । सारस्वतानि ज्ञेयानि पुस्तकादीनि पण्डितैः ॥ सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतः । द्रुमाणामथ पुष्पाणां शाकैर्हरितकैः सह ॥ फलान्तमपि सर्वेषां ज्ञेयो देवो वनस्पतिः । मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये गजस्तथा ॥ छत्रं कृष्णाजिनं शय्यां रथमासनमेव च । उपानहौ तथा यानं यच्चान्यत्प्राणिवर्जितम् ॥ सर्वमाङ्गिरसत्वेन प्रतिगृह्णीतमानवः । शूरोपयोगि यत्सर्वं शस्त्रवर्मध्वजादिकम् ॥ रणोपकरणं सर्वं विज्ञेयं विश्वदैवतम् । गृहं च शक्रदैवत्यं यदनुक्तं द्विजोत्तमाः ॥ तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा द्विजसत्तमाः ॥ इति ॥

## महादानानि अतिदानानि च

कूर्मपुराणे—कनकाश्वतिला नागो दासी-रथ-मही-गृहाः । कन्या च कपिला धेनुर्महादानानि वै दश ॥ महार्णव संग्रहे तु—गो-भू-तिल-हिरण्याऽऽज्य-वासो-धान्य-गुडानि च । रौप्यं लवणमित्याहुर्दशदानानि पण्डिताः ॥ हेमाद्रौ भविष्ये—त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । नरकादुद्धरन्त्येता जपवापनदोहनैः ॥

# अथ प्रायश्चित्तप्रयोगः

स्वयं पुत्रादिर्वा स्वशक्तिमनुसृत्य कृच्छ्रप्रायश्चित्तं चिकीर्षुः प्रायश्चित्तनिमित्तकं गवां मूल्यं पुरतो निधाय धर्माधिकारिणः सभ्यान् संतोष्य साष्टाङ्गं प्रणमेत्। 'किं ते कार्यम्' इति तैः पृष्टः—मम (पित्रादेर्वा) जन्मप्रभृति अद्ययावत् कामाकामाभ्यां सकृदसकृद्वा कृतानां ज्ञाताज्ञातानां कायिकवाचिकमानसिकसांसर्गिकाणाम् अस्पृश्यस्पर्शनाभक्ष्यभक्षणापेयपानागम्यगमनाभाष्यभाषणादृश्यदर्शनादि-जनितानां पातकानुपातकोपपातकसंकरीकरणमलिनीकरणजातिभ्रंशकरप्रकीर्णकादि नानाविधपापानां मध्ये संभावितसर्वपापानां निरासार्थमनुगृह्य प्रायश्चित्तमुपदिशन्तु भवन्तः—इति शोध्यो ब्रूयात्, सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः। मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्विषम्। प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छत॥ पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमाः॥ इति पठेत्। अथ शोध्येन गन्धदक्षिणादिभिः पुस्तकसभ्यानुवादकानां पूजने कृते संतुष्टः सभ्यः—अमुकप्रायश्चित्तेन पूर्वोत्तराङ्गयुतेन प्रत्याम्नायद्वारा यथाशक्त्याचरितेन तव शुद्धिर्भविष्यति तेन च त्वं कृतार्थो भविष्यसि—इति ब्रूहि इति वदेदनुवादकं प्रति स च यथाज्ञप्तो ब्रूयात् शोध्यश्च अनुग्रह इत्युक्त्वा प्रायश्चित्तमङ्गीकृत्य गृहे गत्वा आचम्य गणेशप्रणामादि भूतोत्सादनान्तं विधाय यवकुशतिलजलान्यादाय देशकालौ संकीर्त्य मम जन्मप्रभृति...(पूर्वोक्तम्) उल्लिख्य सभ्योपदिष्टम् अमुकप्रायश्चित्तं गोमूल्य-दानद्रव्यरूपप्रत्याम्नायद्वारा यथाशक्ति करिष्ये तदङ्गत्वेन केशश्मश्रुनखानि वप्स्ये इति संकल्प्य—यानि कानि च पापानि ब्रह्महत्या-समानि च। केशानाश्रित्य तिष्ठन्ति तस्मात् केशान्वपाम्यहम्॥ इति पठित्वा नापितद्वारा केशादि वपेत्। ततः आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च। ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते॥ इति विहितकाष्ठेन दन्तधावनं विधाय स्नानं कुर्यात्। सतिसम्भवे भस्मादिभिर्दशभिः दश स्नानानि कुर्यात्। तत्र प्रथमं भस्मस्नानम्—श्रौत-स्मार्ताग्निजं शुद्धं भस्म वामपाणौ धृत्वाऽभि-मंत्रयेत् अनेन मन्त्रेण—ॐअग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि भस्मानि इति। ततः ॐ ईशानाय नमः शिरसि ॐ तत्पुरुषाय नमः मुखे ॐअघोराय नमः हृदये ॐ वामदेवाय नमः गुह्ये ॐसद्योजाताय नमः पादयोः इति भस्म विलिप्य प्रणवेन सर्वाङ्गे विलिम्पेत्। इति भस्मना। अथ शुद्धं गोमयमादाय अग्रमग्रं चरन्तीनामोषधीनां रसं वने। तासामृषभपत्नीनां पवित्रं कायशोधनम्॥ तन्मे रोगं च शोकं च नुद गोमय सर्वथा॥ मान-स्तोके० इति च अभिमन्त्र्य एकं भागं चतुर्दिक्षु एकं तीर्थे प्रक्षिप्य शेषं सूर्याय प्रदर्श्य दक्षिणहस्तेन तूष्णीं शिरसि सकृदनुलिप्य नाभे-रुपरितनेष्वंगेषु द्विरनुलिप्य नाभेरधस्तात् पादपर्यन्तं वामकरेण त्रिरनुलिम्पेत्॥ इति गोमयेन। अथ मृत्तिकामादाय अश्वक्रान्ते रथक्रांते विष्णुक्रान्ते वसुन्धरे। मृत्तिके हर मे पापं यद्दैवं यच्च मानुषम्। इत्यभिमंत्र्य—उद्धृतासि वराहेण कृष्णेन शतबाहुना। शिरसा धार-यिष्यामि रक्ष मां त्वं पदे पदे॥ इतिपठित्वा गोमयवदनुलिम्पेत्। इति मृत्तिकया। ॐआपोऽअस्मान् मातरः शुन्धयन्तु घृतेन नो घृताव: पुनन्तु। विश्वꣳ हि रिप्रं प्रवहन्ति देवीः॥ इति स्रोतसोऽभावे इदं विष्णुः० इति जलमभिमंत्र्य स्नायात् आपोहिष्ठेत्यादि

तिसृभिः मार्जयेद्वा । इति जलेन । ततो गायत्र्या गोमूत्रमभिमंत्र्य गोमयमिवानुलिम्पेत् । इति गोमूत्रेण । ॐआप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ इत्यभिमंत्र्यानुलिम्पेत् । इति दुग्धेन । ॐदधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्रण आयूᳬंषि तारिषत् ॥ इति दधि अभिमन्त्र्यानुलिम्पेत् । इति दध्ना । ॐतेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ इति घृतमभिमंत्र्यानुलिम्पेत् । इति घृतेन । ॐदेवस्य त्वा० इति कुशोदकमभिमंत्र्य स्नायात् । इति कुशोदकेन । पुनर्जलेन सर्वशुद्ध्यर्थं स्नायात् ।

ततः धौतं वासः परिधाय तिलकं कृत्वा गोदानोक्तविधिना प्रायश्चित्ताधिकारसिद्ध्यर्थं पूर्वाङ्गभूतं गोदानं कृत्वा ब्राह्मणचतुष्टयाय भोजनं तत्पर्याप्तं मिष्ठान्नं वा दत्वा पूर्वोक्तरीत्या ( पृ० २९ ) पञ्चगव्यं विधाय स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ब्रह्मणो वरणं कृत्वा कुशकण्डिकोक्तरीत्या ( पृ० ११ ) ब्रह्मोपवेशनादि पर्युक्षणान्तं विधाय नामकर्मणि प्रयुक्तरीत्या ( पृ० ३० ) द्रव्यदेवताभिध्यानाग्निपूजनाघाराज्यभागहोमपञ्चगव्यहोमान् कुर्यात् । ततः—भोविप्राः व्रतं गृहोष्ये इति विप्रान् संप्रार्थ्य-गृहाण-इति तैरनुज्ञातः हुतशेषं पञ्चगव्यं प्रणवेनालोड्य यज्ञियकाष्ठेन प्रणवेनैव निर्मथ्य तेनैव उभाभ्यां हस्ताभ्यां पिबेत् । तद्दिने आहारान्तरं त्यजेत् । अशक्तौ तु दुग्धाहारी भवेत् । ततः तद्दिन एव दिनान्तरे वा ब्राह्मणान् संपूज्य देयद्रव्यं सम्प्रोक्ष्य अद्येहेत्यादि संकीर्त्य मम जन्मप्रभृति...निरासार्थम् (पृ० १४२) उल्लिख्य इमानि अमुकसंख्याकगवां मूल्यानि स्वर्ण-रौप्य-खण्डानि वा सूर्यदैवतानि चन्द्रदैवतानि वा विभज्य नानानामगोत्रेभ्यो ब्राह्मणेभ्यो युष्मभ्यं संप्रददे ॐतत्सत् न मम इति प्रतिगोमूल्यं यथाशक्ति वा दद्यात् दानप्रतिष्ठां च कुर्यात् । अथ भूरादिहोमं संस्रवप्राशनादिपूर्णपात्रदानान्तं विधाय विष्णुश्राद्धानुकल्पभूतं ब्राह्मणचतुष्टयाय आमान्नं दत्वा सति सम्भवे उत्तरगोदानं कुर्यात् । ब्राह्मणश्च देवस्य त्वा० इति अमुकदेवतायै ( द्रव्यं ) प्रतिगृह्णामि ॐस्वस्ति इति प्रतिगृह्य ॐकोऽदात्० इति कामस्तुतिं पठेयुः । शोध्यश्च उत्तराङ्गत्वेन अग्निं सम्पूज्य विसृजेत् । एवं कृत्वा शुद्धः दानानि कुर्यात् । इति प्रायश्चित्तप्रयोगः ॥

## अथ गोदानविधिः

सर्वाघनाशनं पुण्यं सर्वकामार्थसिद्धिदम् । स्वर्गापवर्गदं चाथ वक्ष्ये गोदानगह्वरम् १ अयने विषुवे पाते वैधृतौ सूर्यसंक्रमे । क्षीणेन्दौ पौर्णमास्यां वा द्वादश्यां राहुपर्वणि २ मन्वादौ च युगादौ च जन्मर्क्षे पुत्रजन्मनि । यात्राकाले ग्रहोत्पाते दुःस्वप्नेऽद्भुतदर्शने ३ व्रते यागे प्रतिष्ठासु गावो देयाः शिवार्थिना । तीर्थे देवालये गोष्ठे सङ्गमे यज्ञमण्डपे । ४ शालग्रामशिलाग्रे च शिवलिङ्गस्य सन्निधौ । इत्यादिशुभदेशेषु स्वगृहे वा पयस्विनीम् ५ दद्यादास्तिक्यबुद्ध्या तां सहेमां द्विजपुङ्गवे । कुलीनाय सुशीलाय वेदवेदाङ्गवादिने ६ सद्वृत्तायाप्रमत्ताय दान्ताय कृशवृत्तये । क्रोधहिंसाविहीनाय सदा सन्तोषजीविने ७ पितृमातृगुरूणां च भक्ताय प्रियवादिने । अनिन्द्यदेशजाताय सांगाय व्रतचारिणे ८ जपस्वाध्यायनिष्ठाय तथा सत्यपराय च । परदारनिवृत्ताय वह्निसेवारताय च ९ सर्वदानानि देयानि विष्णुवत्तं विचिन्तयेत् । अपराबाधमक्लेशं स्वयत्नेनार्जितं धनम् । स्वल्पं वा विपुलं वापि देयमित्यभि-

परिधाय स्थंण्डिलेऽग्निमुपसमाधाय वरदनामाग्निमावाह्य तदीशाने कलशविधिना कलशं संस्थाप्य तत्र ग्रहान्सम्पूज्य ब्रह्मोपवेशनादिपर्य्युक्षणान्तं कर्म कृत्वा होमसंकल्पं विधाय आज्येन आघारावाज्यभागौ हुत्वा मधुतिलसर्पिर्भिः हरिटिमिरिटिकाकचाण्डालाय स्वाहा अंशुभ्यो नमः श्वपचेभ्यो नमः वायसेभ्यो नमः पतंगेभ्यो नमः पापरागिभ्यो नमः यमदूतेभ्यो नमः इतिमंत्रविभागेनाष्टोत्तरशतं होमं विधाय उत्तरतंत्रं समाप्य स्वशक्त्या दक्षिणां दद्यात् होमाशक्तौ तु सचैलं स्नात्वा तिलपात्रसहितमाषान्नदानं घृतच्छायां च कुर्यात् सप्तशतीपाठं कुर्यात् कारयेद्वा एतत्तत्क्षणमेव तत्रसंकल्पः अद्येहेत्यादि अमुकोऽहं ममाऽमुकांगे काकविष्ठापतनसूचितसकलदोषपरिहाराय सदक्षिणानिमान्माषान् इदं तिलपात्रं च ब्राह्मणाय दातुमुत्सृजे तत्सत् इतिसंकल्प्य ब्राह्मणाय दद्यात् एवंकृते तद्दोषपरिहारःस्यात् ॥इति॥

### अथ श्वेतकाकशान्तिः

श्वेतपक्षो यदा काको दृश्यते यस्य मंडले । स्वामिसंडलयोर्नाशो याम्याशायां तु निश्चितम् ॥ तत्र शान्तिःप्रकर्त्तव्या सर्वदोषोपशान्तये । यमायत्वेतिमंत्रेण तिलमाषादि होमयेत् ॥ विप्राय महिषं दद्याद्यथालंकारभूषितम् ॥ इतिश्वेतकाकदर्शनशान्तिः ॥

### अथ पल्लीपतनसरटप्ररोहणे

पल्ल्याश्च पतनं शस्तं सरटस्य प्ररोहणम् । विपरीते सप्तशतीपाठादि कारयेत् ॥ इति ॥ इतिशान्तिप्रकरणम् ॥

---

## दशकर्मादिपद्धतिः—दानादिप्रकरणम्

### अथ दानविधिः

सूर्यारुणसंवादे—स्नात्वा नित्यक्रियां कृत्वा कर्ता शुचिरलङ्कृतः । ब्राह्मणान् देयवस्तूनि गन्धाद्यैरर्चयेत् सुत ॥ दानं ददेहममुकं दद्याद्विप्रकरे जलम् । ददस्वेति द्विजेनोक्तमिति दानविधिः स्मृतः ॥ ॐतत्सत्पूर्वमुच्चार्य गृहीत्वा तु करे जलम् । सतिलकुशहस्तस्तु कालज्ञानं समुच्चरेत् ॥ प्राङ्मुखश्चोदङ्मुखो वा पैत्रे याम्यमुखस्तथा । वामेन पाणिना स्पृष्ट्वा स्मरेत्तद्वस्तुदैवतम् ॥ विप्रायामुकगोत्रायामुककामो ह्यहं ददे । न ममेत्युत्सृजेदेवं द्विजहस्ते जलं खग ॥ स्वस्तीत्युक्तं च विप्रेण दानमक्षयतां नयेत् । तद्दानमिति संप्रोक्तमन्यत्त्याग इति स्मृतम् ॥ कन्यादानं त्रिपुरुषगोत्रोच्चारणपूर्वकम् । गो कन्या प्रतिमा शय्या एकैकस्य प्रदापयेत् ॥ विभज्य विधिना दाता नतत्फलमवाप्नुयात् । गौतमश्च—अन्तर्जानुकरं कृत्वा सकुशं तु तिलोदकम् । फलान्यपि च सन्धाय प्रदद्याच्छ्रद्धयान्वितः ॥ इति अन्यच्च—द्रव्याणामथ सर्वेषां देवसञ्ज्ञयवान्नरः । वाचयेज्जलमादाय करेणाथ प्रतिग्रहम् ॥ दातुर्मन्त्रप्रयोगान्ते ह्यमुकस्मै सुराय वै । इदमों प्रतिगृह्णामि तदन्ते स्वस्ति कीर्तयेत् ॥ इति दानविधिः ॥

## अथ प्रतिग्रहविधिः

भूमेः प्रतिग्रहं कुर्याद् भूमिं कुर्वन्प्रदक्षिणम् । करे गृहीत्वा कन्यां तु दासदास्यौ द्विजोत्तमः ।। करं तु हृदि विन्यस्य धर्म्यो ज्ञेयो प्रतिग्रहः । आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्तितः ।। तथा चैकशफानां तु सर्वेषां वा विशेषतः । प्रतिगृह्णीत ताञ्छृङ्गे पुच्छे कृष्णाजिनं तथा ।। शृङ्गिणामेकशफानां प्रतिग्रहः शृङ्गं स्पृष्ट्वा कार्यः । अन्येषामेकशफानां तु कर्णं स्पृष्ट्वेति व्यवस्था । आरण्याः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः । गृह्णीयान्महिषं शृङ्गे खरं वै पृष्ठदेशतः ।। प्रतिग्रहमथोष्ट्रस्य यानानां चाधिरोहणात् । बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ।। वस्त्रं दशान्तादादद्यात्परिधायाथवा पुनः । आरुह्योपानहौ मञ्चमारुह्यैव च पादुके ।। वर्मध्वजौ तु संस्पृश्य प्रविश्य च तथा गृहम् । अवतीर्य च सर्वाणि जलस्थानानि वै द्विजाः ।। ईषायां तु रथो ग्राह्यः छत्रं दण्डे तथैव च । द्रुमांश्च प्रतिगृह्णीयान्मूले न्यस्तकरे द्विजः ।। आयुधानि समादाय तथामुच्य विभूषणम् । हेमाद्रौ परिशिष्टे—प्रतिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे ।। मूर्ध्नि दासीमजां चैव पृष्टेऽश्वतरगर्दभौ ।। पुत्रमुत्सङ्गमारोप्य प्रतीगृह्णीत दत्तकम् । रथं रथमुखे स्पृष्ट्वा प्रतिगृह्णीत कूबरे ।। इति ।।

## अथ द्रव्यदेवता

विष्णुधर्मोत्तरे हेमाद्रौ—अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता । कन्यादासस्तथादासी प्राजापत्याः प्रकीर्तिताः ।। प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः । तथा चैकशफं सर्वं कथितं यमदैवतम् ।। महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत् । रौद्री धेनुर्विनिर्दिष्टा छागमाग्नेयमादिशेत् ।। मेषं तु वारुणं विद्यात् वराहं वैष्णवं तथा । आरण्याः पशवः सर्वे कथिताः वायुदेवताः ।। जलाशयानि सर्वाणि वारिधानीं कमण्डलुम् । कुम्भं च करकं चैव वारुणानि निबोधत ।। समुद्रजानि रत्नानि वारुणानि द्विजोत्तमाः । आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ ।। प्राजापत्यानि सस्यानि पक्वान्नमपि च द्विजाः । ज्ञेयाश्च सर्वगन्धास्तु गान्धर्वा वै विचक्षणैः ।। बार्हस्पत्यं स्मृतं वासः सौम्या ज्ञेयारसास्तथा । पक्षिणस्तु तथा सर्वे वायव्याःपरिकीर्तिताः ।। विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च । सारस्वतानि ज्ञेयानि पुस्तकादीनि पण्डितैः ।। सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतः । द्रुमाणामथ पुष्पाणां शाकैर्हरितकैः सह ।। फलान्तमपि सर्वेषां ज्ञेयो देवो वनस्पतिः । मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये गजस्तथा ।। छत्रं कृष्णाजिनं शय्यां रथमासनमेव च । उपानहौ तथा यानं यच्चान्यत्प्राणिवर्जितम् ।। सर्वमाङ्गिरसत्वेन प्रतिगृह्णीतमानवः । शूरोपयोगि यत्सर्वं शस्त्रवर्मध्वजादिकम् ।। रणोपकरणं सर्वं विज्ञेयं विश्वदैवतम् । गृहं च शक्रदैवत्यं यदनुक्तं द्विजोत्तमाः ।। तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा द्विजसत्तमाः ।। इति ।।

## महादानानि अतिदानानि च

कूर्मपुराणे—कनकाश्वतिला नागो दासी-रथ-मही-गृहाः । कन्या च कपिला धेनुर्महादानानि वै दश ।। महार्णव संग्रहे तु—गो-भू-तिल-हिरण्याऽज्य-वासो-धान्य-गुडानि च । रौप्यं लवणमित्याहुर्दशदानानि पण्डिताः ।। हेमाद्रौ भविष्ये—त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । नरकादुद्धरन्त्येता जपवापनदोहनैः ।।

 

स्वयं पुत्रादिर्वा स्वशक्तिमनुसृत्य कृच्छ्रप्रायश्चित्तं चिकीर्षुः प्रायश्चित्तनिमित्तकं गवां मूल्यं पुरतो निधाय धर्माधिकारिणः सभ्यान् संतोष्य साष्टाङ्गं प्रणमेत् । 'किं ते कार्यम्' इति तैः पृष्टः—मम ( पित्रादेर्वा ) जन्मप्रभृति अद्ययावत् कामाकामाभ्यां सकृदसकृद्वा कृतानां ज्ञाताज्ञातानां कायिकवाचिकमानसिकसांसर्गिकाणाम् अस्पृश्यस्पर्शनाभक्ष्यभक्षणापेयपानागम्यगमनाभाष्यभाषणादृश्यदर्शनादि-जनितानां पातकानुपातकोपपातकसंकरीकरणमलिनीकरणजातिभ्रंशकरप्रकीर्णकादि नानाविधपापानां मध्ये संभावितसर्वपापानां निरासा-र्थमनुगृह्य प्रायश्चित्तमुपदिशन्तु भवन्तः—इति शोध्यो ब्रूयात्, सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः । मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् । प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छत ॥ पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमाः ॥ इति पठेत् । अथ शोध्येन गन्धदक्षिणादिभिः पुस्तकसभ्यानुवादकानां पूजने कृते संतुष्टः सभ्यः—अमुकप्रायश्चित्तेन पूर्वोत्तराङ्गयुतेन प्रत्याम्नायद्वारा यथाशक्त्याचरितेन तव शुद्धिर्भविष्यति तेन च त्वं कृतार्थो भविष्यसि—इति ब्रूहि इति वदेदनुवादकं प्रति स च यथाज्ञप्तो ब्रूयात् शोध्यश्च अनुगृहीतोऽस्मि इत्युक्त्वा प्रायश्चित्तमङ्गीकृत्य गृहे गत्वा आचम्य गणेशप्रणामादि भूतोत्सादनान्तं विधाय यवकुशतिलजलान्यादाय देशकालौ संकीर्त्य मम जन्मप्रभृति...( पूर्वोक्तम् ) उल्लिख्य सभ्योपदिष्टम् अमुकप्रायश्चित्तं गोमूल्य-दानद्रव्यरूपप्रत्याम्नायद्वारा यथाशक्ति करिष्ये तदङ्गत्वेन केशश्मश्रुनखानि वप्स्ये इति संकल्प्य—यानि कानि च पापानि ब्रह्महत्या-समानि च । केशानाश्रित्य तिष्ठन्ति तस्मात् केशान्वपाम्यहम् ॥ इति पठित्वा नापितद्वारा केशादि वपेत् । ततः आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥ इति विहितकाष्ठेन दन्तधावनं विधाय स्नानं कुर्यात् । सतिसम्भवे भस्मादिभिर्दशभिः दश स्नानानि कुर्यात् । तत्र प्रथमं भस्मस्नानम्—श्रौत-स्मार्ताग्निजं शुद्धं भस्म वामपाणौ धृत्वाऽभि-मंत्रयेत् अनेन मन्त्रेण—ॐअग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि भस्मानि इति । ततः ॐ ईशानाय नमः शिरसि ॐ तत्पुरुषाय नमः मुखे ॐअघोराय नमः हृदये ॐ वामदेवाय नमः गुह्ये ॐसद्योजाताय नमः पादयोः इति भस्म विलिप्य प्रणवेन सर्वाङ्गे विलिम्पेत् । इति भस्मना । अथ शुद्धं गोमयमादाय अग्रमग्रं चरन्तीनामोषधीनां रसं वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ तन्मे रोगं च शोकं च नुद गोमय सर्वथा ॥ मान-स्तोके० इति च अभिमन्त्र्य एकं भागं चतुर्दिक्षु एकं तीर्थे प्रक्षिप्य शेषं सूर्याय प्रदर्श्य दक्षिणहस्तेन तूष्णीं शिरसि सकृदनुलिप्य नाभे-रुपरितनेष्वंगेषु द्विरनुलिप्य नाभेरधस्तात् पादपर्यन्तं वामकरेण त्रिरनुलिम्पेत् ॥ इति गोमयेन । अथ मृत्तिकामादाय अश्वक्रान्ते रथक्रांते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यद्दैवं यच्च मानुषम् । इत्यभिमंत्र्य—उद्धृतासि वराहेण कृष्णेन शतबाहुना । शिरसा धार-यिष्यामि रक्ष मां त्वं पदे पदे ॥ इतिपठित्वा गोमयवदनुलिम्पेत् । इति मृत्तिकया । ॐआपोऽअस्मान् मातरः शुन्धयन्तु घृतेन नो घृतावः पुनन्तु । विश्वꣳहि रिप्रं प्रवहन्ति देवीः ॥ इति स्रोतसोऽभावे इदं विष्णुः० इति जलमभिमंत्र्य स्नायात् आपोहिष्ठेत्यादि

तिसृभिः मार्जयेद्वा । इति जलेन। ततो गायत्र्या गोमूत्रमभिमंत्र्य गोमयमिवानुलिम्पेत्। इति गोमूत्रेण। ॐआप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ इत्यभिमंत्र्यानुलिम्पेत् । इति दुग्धेन । ॐदधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्रण आयूᳬंषि तारिषत् ॥ इति दधि अभिमन्त्र्यानुलिम्पेत् । इति दध्ना । ॐतेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ इति घृतमभिमंत्र्यानुलिम्पेत् । इति घृतेन । ॐदेवस्य त्वा० इति कुशोदकमभिमंत्र्य स्नायात् । इति कुशोदकेन । पुनर्जलेन सर्वशुद्ध्यर्थं स्नायात् ।



ततः धौतं वासः परिधाय तिलकं कृत्वा गोदानोक्तविधिना प्रायश्चित्ताधिकारसिद्ध्यर्थं पूर्वाङ्गभूतं गोदानं कृत्वा ब्राह्मणचतुष्टयाय भोजनं तत्पर्याप्तं मिष्ठान्नं वा दत्वा पूर्वोक्तरीत्या ( पृ० २९ ) पञ्चगव्यं विधाय स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ब्रह्मणो वरणं कृत्वा कुशकण्डिकोक्तरीत्या ( पृ० ११ ) ब्रह्मोपवेशनादि पर्युक्षणान्तं विधाय नामकर्मणि प्रयुक्तरीत्या ( पृ० ३० ) द्रव्यदेवताभिध्यानाग्निपूजनाघाराज्यभागहोमपञ्चगव्यहोमान् कुर्यात् । ततः—भोविप्राः व्रतं गृहोष्ये इति विप्रान् संप्रार्थ्य-गृहाण-इति तैरनुज्ञातः हुतशेषं पञ्चगव्यं प्रणवेनालोड्य यज्ञियकाष्ठेन प्रणवेनैव निर्मथ्य तेनैव उभाभ्यां हस्ताभ्यां पिबेत् । तद्दिने आहारान्तरं त्यजेत् । अशक्तौ तु दुग्धा हारी भवेत् । ततः तद्दिन एव दिनान्तरे वा ब्राह्मणान् संपूज्य देयद्रव्यं सम्प्रोक्ष्य अद्येहेत्यादि संकीर्त्य मम जन्मप्रभृति...निरासार्थम् (पृ० १४२) उल्लिख्य इमानि अमुकसंख्याकगवां मूल्यानि स्वर्ण-रौप्य-खण्डानि वा सूर्यदैवतानि चन्द्रदैवतानि वा विभज्य नानानामगोत्रेभ्यो ब्राह्मणेभ्यो युष्मभ्यं संप्रददे ॐतत्सत् न मम इति प्रतिगोमूल्यं यथाशक्ति वा दद्यात् दानप्रतिष्ठां च कुर्यात्। अथ भूरादिहोमं संस्रवप्राशनादिपूर्णपात्रदानान्तं विधाय विष्णुश्राद्धानुकल्पभूतं ब्राह्मणचतुष्टयाय आमान्नं दत्वा सति सम्भवे उत्तरगोदानं कुर्यात् । ब्राह्मणश्च देवस्य त्वा० इति अमुकदेवतायै ( द्रव्यं ) प्रतिगृह्णामि ॐस्वस्ति इति प्रतिगृह्य ॐकोऽदात्० इति कामस्तुतिं पठेयुः । शोध्यश्च उत्तराङ्गत्वेन अग्निं सम्पूज्य विसृजेत् । एवं कृत्वा शुद्धः दानानि कुर्यात् । इति प्रायश्चित्तप्रयोगः ॥

## अथ गोदानविधिः

सर्वाघनाशनं पुण्यं सर्वकामार्थसिद्धिदम् । स्वर्गापवर्गदं चाथ वक्ष्ये गोदानगह्वरम् १ अयने विषुवे पाते वैधृतौ सूर्यसंक्रमे । क्षीणेन्दौ पौर्णमास्यां वा द्वादश्यां राहुपर्वणि २ मन्वादौ च युगादौ च जन्मर्क्षे पुत्रजन्मनि । यात्राकाले ग्रहोत्पाते दुःस्वप्नेऽद्भुतदर्शने ३ व्रते यागे प्रतिष्ठासु गावो देयाः शिवार्थिना । तीर्थे देवालये गोष्ठे सङ्गमे यज्ञमण्डपे । ४ शालग्रामशिलाग्रे च शिवलिङ्गस्य सन्निधौ । इत्यादिशुभदेशेषु स्वगृहे वा पयस्विनीम् ५ दद्यादास्तिक्यबुद्ध्या तां सहेमां द्विजपुङ्गवे । कुलीनाय सुशीलाय वेदवेदाङ्गवादिने ६ सद्वृत्तायाप्रमत्ताय दान्ताय कृशवृत्तये । क्रोधहिंसाविहीनाय सदा सन्तोषजीविने ७ पितृमातृगुरूणां च भक्ताय प्रियवादिने । अनिन्द्यदेशजाताय सांगाय व्रतचारिणे ८ जपस्वाध्यायनिष्ठाय तथा सत्यपराय च । परदारनिवृत्ताय वह्निसेवारताय च ९ सर्वदानानि देयानि विष्णुवत्तं विचिन्तयेत् । अपरावाधमक्लेशं स्वयत्नेनार्जितं धनम् । स्वल्पं वा विपुलं वापि देयमित्यभि-

धीयते १० ॥ अथप्रयोगः तत्र दाता सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तः सुलिप्तायां कर्म्मभूमौ स्वासन उपविश्य करौ सपवित्रौ कृत्वा यथोक्तलक्षणां सवत्सां गां प्राङ्मुखीमवस्थाप्य यथोक्तलक्षणं ब्राह्मणं उदङ्मुखं संस्थाप्य गणेशविष्णुगुरून्नमस्कृत्य स्वाग्रभूमौ चन्दनेन उक्तविधिना अर्घ्यं संस्थाप्य जलेनापूर्य्य गन्धपुष्पाक्षतादि तूष्णीं निक्षिप्य तेन जलेनात्मानं सर्वां गोदानसामग्रीं च सम्प्रोक्ष प्राणायामं विधाय भूतोत्सादनं कृत्वा कुशतिलयवजलान्यादाय प्रधानसंकल्पं कुर्य्यात् ॐविष्णुः३ ॐनमःपरमात्मने इत्यादि देश-कालकीर्त्तनान्ते अमुकनाम सँव्वत्सरेऽमुकायनेऽमुकर्त्तौ अमुकमासेऽमुकपक्षेऽमुकतिथौअमुकनक्षत्रयोगकरणमुहूर्त्तवासरे अमुकराशिस्थिते सवितरि अमुकस्थे चन्द्रे अमुकस्थे देवगुरौ अमुकपुण्यकाले अमुकगोत्रोऽमुकराशिरमुकशर्म्माहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये अमुक-कर्म्मनिमित्तकं श्रीयज्ञपुरुषप्रीतये गोदानं करिष्ये तत्प्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वकं वरणं च करिष्ये इतिसंकल्प्य स्वदक्षिणतो यज्ञीय-वृक्षोद्भवासने उदङ्मुखं ब्राह्मणमुपवेश्य पूजयेत् श्रीविष्णुस्वरूपिणे ब्राह्मणाय एतदासनं ते नमः श्रीविष्णुस्वरूपिणं ब्राह्मणमावाहयामि श्रीविष्णुस्वरूपिणे ब्राह्मणाय पाद्यम् आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्प्पणकामधेनवः । समस्ततीर्थाम्बुपवित्रमूर्त्तयो रक्षन्तु मां ब्राह्मणपादपांसवः १ समस्तसम्पत्समवाप्तिहेतवः समुत्थितागःकुलधूमकेतवः । अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपाद-पांसवः २ विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः । वन्दनान्मङ्गलावाप्तिरर्चनादच्युतं पदम् ३ आधिव्याधिहरं नृणां मृत्युदारिद्र्य-नाशनम् । श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपंकजम् ४ यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे । तत्फलं पाण्डवश्रेष्ठ विप्राणां पाद-शोधने ५ इतिपादप्रक्षालनं विधाय भूमिदेवाग्रेत्यर्घम् गन्धद्वारामिति चन्दनादिविलेपनम् सहस्रशीर्षेत्यक्षतान् नमोस्त्वनन्तायेति पुष्प-मालादिभिः सम्पूज्य धूरसीति धूपम् अग्निर्ज्योतिरिति दीपम् यदश्वायेति वस्त्रम् योदेवेभ्य इति मुकुटकंकणकुण्डलादिभिः सम्पूज्य तं यज्ञमितिच्छत्रम् त्रिपादूर्ध्व इत्युपानहौ आपोदेवेति कमण्डलुम् एवंक्रमेण ब्राह्मणं सम्पूज्य वरणं कुर्य्यात् एभिर्गंधाक्षतपुष्पमाला-वस्त्रयुगकंकणकुण्डलच्छत्रोपानत्कमण्डलुद्रव्ययज्ञोपवीतफलताम्बूलादिभिर्गोदानप्रतिग्रहार्थं अमुकगोत्रं अमुकवेदाध्यायिनं अमुकशर्म्माणं-ब्राह्मणं त्वामहं वृणे वृतोस्मीति ब्राह्मणो वदेत् ततो ब्राह्मणं प्रार्थयेत् यदर्च्चनं कृतं विप्र तव विष्णुस्वरूपिणः । तत्सर्वं मम दीनस्य विष्णवेस्तु समर्पणम् ॥ इतिसम्प्रार्थ्य स्वपुरतःप्राङ्मुखीं गामवस्थाप्य वत्सं तदुत्तरतो न्यस्य पूजयेत् तत्र संकल्पः अद्येहेत्यादि अमुकोहं गोदानपूर्वांगत्वेन सवत्सायाः गोः पूजनं करिष्ये इतिसंकल्प्य प्रथमं वेदमंत्रेण आवाहयेत् ॐआ गावोऽग्मन्नुत भद्रमक्रन्त्सी-दन्तु गोष्ठे रणयन्त्वस्मे प्रजावतीःपुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहोनाः । १ ॐइन्द्रो यज्वने प्रणते च शिक्षत्युपदे ददाति नः स्वमुशायति भूयोभूयो रयिरिन्द्रस्य वर्द्धयन्नभिसेखिले निदधाति देवयुम् २॥ इतिमन्त्राभ्याम् आवाहयाम्यहं देवीं गां त्वां त्रैलोक्यमातरम् । यस्याः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ त्वं देवी त्वं जगन्माता त्वमेवासि वसुन्धरा । गायत्री त्वं च सावित्री गङ्गा त्वं च सरस्वती ॥ तृणानि भक्षसे नित्यममृतं स्रवसे प्रभो । भूतप्रेतपिशाचाश्च पितृदैवतमानुपान् ॥ सर्वांस्तारयसे देवि नरकात्पापसंकटात् ॥ इति आवाह्य पूजयेत् सवत्सायै गवे नमः पाद्यम् पुष्पाणि गृहीत्वा नमो वै विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च । लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ॥ गोः अग्रपादाभ्यां नमः गोः पश्चात्पदाभ्यां नमः देहस्था या च रुद्राणां शंक-

रस्य सदा प्रिया । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ गोशास्याय नमः विष्णोर्वक्षसि या देवी स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे ॥ गोःशृङ्गाभ्यां नमः गोःकर्णाभ्यां नमः चतुर्मुखस्य या लक्ष्मीर्यालक्ष्मीर्धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ॥ गोःपृष्ठाय नमः स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ॥ गोपुच्छाय नमः वस्त्रम् आच्छादनं मया दत्तं सम्यक्शुद्धं सुनिर्म्मलम् । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरी ॥ गन्धम् सर्वदेवप्रियं देवि चन्दनं चन्द्रसन्निभम् । कस्तूरीकुंकुमाद्यं च गौर्गन्धःप्रतिगृह्यताम् ॥ गवे नमः अक्षताः पुष्पाणि पुष्पमालाभिश्च सम्पूज्य धूपम् आनन्दकृत् सर्वलोके देवानां च सदाप्रिये । गौस्त्वं पाहि जगन्नाथे धूपोयं प्रतिगृह्यताम् ॥ अनेनैव दीपोयं प्रतिगृह्यताम् नैवेद्यम् गोग्रासः सुरभिस्त्वं जगन्माता नित्यं विष्णुपदे स्थिता । गोग्रासोयं मया दत्तो नैवेद्यं प्रतिगृह्यताम् ॥ घंटाचामरमन्त्रः यत्ते मयार्पितं शुद्धं घंटाचामरमुत्तमम् । ग्रैवेयं तद्गृहाणत्वं मुनित्रिदशवन्दिते ॥ एवमादीनि सर्वाणि जलपूर्वं दद्यात् ततो गोदेहे तीर्थान्यावाहयेत् पूजयेच्च शृङ्गमूले ब्रह्मविष्णुभ्यां नमः शृंगाग्रे सर्वतीर्थेभ्यो नमः शिरोमध्ये महादेवाय नमः ललाटे गौर्य्यै नमः नासारन्ध्रे षण्मुखाय नमः नासापुटयोः कंवलाश्वतराभ्यां नमः दन्तेषु वायवे नमः जिह्वायां वरुणाय नमः हुंकारे सरस्वत्यैनमः गण्डयोः मासपक्षाभ्यां नमः ओष्ठयोः सन्ध्याद्वयाभ्यां नमः ग्रीवायां रक्षोभ्यो नमः कुक्ष्योः साध्येभ्यो नमः जंघासु धर्म्माय नमः खुरमध्ये गन्धर्वेभ्यो नमः खुराग्रे कुलपर्वतेभ्यो नमः खुरपश्चिमाग्रेषु अप्सरोगणेभ्यो नमः पृष्ठे एकादशरुद्रेभ्यो नमः सर्व्वसन्धिषु वसुभ्यो नमः श्रोण्योः पितृगणेभ्यो नमः पुच्छे सोमाय नमः पुच्छकेषु सूर्य्यरश्मिभ्यो नमः गोमूत्रे गङ्गायै नमः गोमये यमुनायै नमः क्षीरे सरस्वत्यै नमः दध्नि नर्म्मदायै नमः घृते वह्नये नमः रोमसु देवकोटिभ्यो नमः उदरे पृथिव्यै नमः स्तनेषु चतुःसागरेभ्यो नमः एते यस्यास्तनौ देवाः सा धेनुर्वरदा मम ॥ इति गोदेहदेवान्सम्पूज्य शक्तौ सत्यां स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां लांगूलसमर्पितमुक्ताफलां च गां विधाय तत्समीपे दोहनपात्रं संस्थाप्य प्रार्थयेत् ॐनमो गोभ्यःश्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः ॥ गावो ममाग्रतःसन्तु गावो मे सन्तु पृष्ठतः । गावो मे पार्श्वयोः सन्तु गवां मध्ये वसाम्यहम् ॥ पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मामतः । ततो विधिवदभ्यर्च्य श्रीखण्डैःकुसुमैःशुभैः ॥ अलंकुर्याद्यथाशास्त्रं हेमशृङ्गादिभिः सुधीः । कुशाक्षतैर्जलैःसार्द्धं गृहीत्वा पुच्छमादतः ॥ कराभ्यां तर्पयेद्देवान्देवतीर्थेन मंत्रवित् । प्राजापत्येन मनुजान् पितॄन् पित्र्येण तर्पयेत् ॥ ततः सकुशाक्षतयवं गोपुच्छं गृहीत्वा प्राङ्मुखो यजमानः सततजलधारया देवतीर्थेन देवांस्तर्पयेत् ॐया नन्दिनी सुशीलाद्याः कामदाश्चैव धेनवः । ताः सर्वाः पुच्छतोयेन तर्पितास्तर्पयन्तु माम् ॥ ब्रह्माविष्णुर्महादेवः कार्तिकेयो गणाधिपः । पुष्पचापो महेन्द्रश्च भगवानच्युताग्रजः ॥ देवाः समस्ताः सगणाः सवाहनपरिच्छदाः । वसवोऽष्टौ द्वादशार्का रुद्रा एकादशैव तु ॥ विश्वेदेवाश्च साध्याश्च मरुतो मातरस्तथा । गन्धर्वा गुह्यकाश्चैव सागराः सरितस्तथा ॥ राक्षसा यक्षवेतालाः पूतनाःपर्व्वता द्रुमाः । तीर्थान्यप्सरसश्चैव पशवः पन्नगाः खगाः ॥ ऋक्षाणि राशयो योगा मासवर्षर्तुवासराः । अयने

च युगाः कल्पास्तथा मन्वन्तराणि च ।। भुवनानि दिशोकाश्च तथा सर्वेन्द्रियाणि च । ॐकारश्चैव गायत्री छन्दांसंगानि चैव हि ।। वेदाश्च
स्मृतयश्चैव पुराणानि तथैव च । आयुर्वेदो धनुर्वेदो गान्धर्वो मन्त्रगह्वरः ।। औषध्यो वनसम्भूता ग्राम्याश्चैव सुपिप्पलाः । सानुगा देवता
श्चैव मुनयःसगणास्तथा ।। ऋषयो ऋषिपत्न्यश्च सिद्धाश्च सगणास्तथा । प्रजाःप्रजापतिश्चैव येन्ये विघ्नविनायकाः ।। विद्याधराश्च दैत्याश्च
आचार्य्या गुरवस्तथा । डाकिन्यः क्षेत्रपालश्च भैरवाश्चाष्टसंख्यकाः ।। स्थावरा जंगमाश्चैव भूतग्रामश्चतुर्विधः । अक्षयेनामृतेनैव मंगलेन
सुवारिणा ।। गोपुच्छाग्रच्युतेनेह मद्दत्तेन हि तेऽखिलाः । शाश्वतीं तृप्तिमायान्तु दार्ढ्ययुक्तवरप्रदाः ।। सूर्य्यः सोमः कुजः सौम्यो गुरुः शुक्रः
शनैश्चरः । ग्रहाश्च तृप्तिमायान्तु राहुकेतुसमन्विताः ।। इन्द्रो वह्निर्यमो रक्षः पाशी वायुर्धनाधिपः । ईशोऽनन्तस्तथा ब्रह्मा सर्वे ते तर्पिता
मया ।। सावित्र्या सह लोकेशः सलक्ष्मीकश्चतुर्भुजः । महेशश्चोमया सार्द्धं तृप्तिमायान्तु शाश्वतीम् ।। अत्रिर्वशिष्ठो भृगुगौतमौ च मरी-
चिदक्षौ पुलहः पुलस्त्यः । प्राचेतसः काश्यपविश्वमित्रौ भरद्वाजसञ्ज्ञो जमदग्निर्मुनिश्च ।। अन्ये च सर्वे मुनिपुङ्गवाश्च गृह्णन्तु दत्तं जल-
मद्य तुष्टाः ।। इतिदेवतर्पणम् ।। ततो यज्ञोपवीतं कण्ठावलंबितं कृत्वा अक्षतकुशजलैर्मनुष्यतीर्थेन मनुष्यान् तर्पयेत् सनकः सनन्दनश्चैव
सनातनस्तथैव च । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।। ते तृप्तिमखिलां यांतु गोपुच्छाग्रच्युतोदकैः ।। ततोऽपसव्यं कृत्वा द्विगुणित-
कुशतिलजलैः पितॄँस्तर्पयेत् कव्यवाडनलःसोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ताःसोमपाश्च तथा बर्हिषदश्च ये ।। तर्पितास्तृप्तिमायांतु
शाश्वतीं गोप्रसादतः । यमाय धर्म्मराजाय मृत्यवे चांतकाय च ।। वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय
परमेष्ठिने ।। वृकोदराय चित्राय चित्रगुप्ताय वै नमः । पिता पितामहश्चैव तथैव प्रपितामहः ।। माता पितामही चैव तथैव प्रपितामही
मातामहः प्रमातामहो वृद्धप्रमातामहस्तथा ।। मातामही प्रमातामही वृद्धप्रमातामही तथा । अक्षयां तृप्तिमायांतु गोलांगूलच्युतोदकैः ।।
त्रिकं मातामहाद्यं च मातामह्यादिकं त्रयम् ।। ते च ताश्च प्रदत्तं मे स्वीकुर्वंतु जलं मुदा ।। ये मृता वै पितृव्याश्च मातुलाः श्वशुरास्तथा ।
आचार्य्या गुरुमित्राद्यास्ते गृह्णन्तु शुभं जलम् ।। ये च संबन्धिनोऽपुत्रा वह्निदाहविवर्जिताः । अपमृत्युमृता ये च ते तृप्तिं च लभन्त्विह ।।
पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ।। ये मे कुले लुप्तपिण्डाः क्रियालोपगताश्च ये ।
विरूपा आमगर्भाश्च ज्ञाताज्ञाताःकुले मम ।। ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणैः ।। गोत्रे मदीये विसुता मृता ये गोत्रे च मातुर्मम
ये विपन्नाः । गर्भच्युताः श्राद्धविवर्जिताश्च तेभ्यःस्वधानेन जलेन कृत्वा ।। भृग्वग्निवज्रादिजलादिशस्त्रैर्विषाणदन्तैर्नखरैर्भुजङ्गैः । पञ्चत्व-
भावं विगताश्च ये च तेभ्यःप्रदत्तं शिवमस्तु तोयम् ।। ये रौरवादौ नरके निमग्नाः क्रियाविलुप्ताश्च कृतापकाराः । जन्मांतरे ये मम
दासभूतास्तेप्यक्षयां तृप्तिमिहाभजन्तु ।। ये बान्धवा अबान्धवा येन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोत्सृष्टवारिभिः ।।
धेनुपुच्छं करे कृत्वा तर्पणं च करोति यः । आत्मानं तारयेद्विप्रो दशपूर्व्वान्दशापरान् ।। सन्तर्पिता मया ये च गोपुच्छोदकतर्प्पणैः ।
आयुर्वृद्धिं तथा तुष्टिं मेधां प्रज्ञां च सन्ततिम् ।। आरोग्यं धनलाभं च सन्तुष्टाश्च ददन्तु मे ।। इतिगोपुच्छोदकतर्पणं विधाय एवं संत-
र्प्य विधिवदुपस्पृश्य ततःपरम् । प्राङ्मुखीं गामवस्थाप्य सवत्सां च सुपूजिताम् ।। पुच्छदेशे स्वयं स्थित्वा शुचिःप्रयतमानसः । उद-
ङ्मुखस्तु विप्रःस्यात्पात्रलक्षणलक्षितः ।। आज्यपात्रे करं कृत्वा कनकेन समन्वितम् । निक्षिप्य पुच्छं तस्मिँस्तु घृतादिग्धं प्रगृह्य च ।। सतिले

ब्राह्मपाणौ तु विधिना दानमाचरेत् ॥ तत्र संकल्पः ॐविष्णु ३ अद्येहेत्यादिअमुकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये इमां गां सवत्सां सुपूजितां रुद्रदैवत्यां यथाशक्त्यलंकृतां निखिलदुःखदौर्भाग्यदुःस्वप्नदुर्निमित्तामुकग्रहबाधाशान्तिपूर्वकमायुरारोग्यधनधान्यद्विपद्चतुष्पदसन्ततिप्राप्तिद्वारा गोरोमतुल्यवत्सरावधि सकलभोगपरिपूर्णस्वर्गलोकप्राप्तिकामः श्रीलक्ष्मीनारायणप्रीतये अमुकगोत्रायामुकवेदाध्यायिनेऽमुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे दानवाक्यम् यज्ञसाधनभूता या विश्वस्याघविनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ इत्युच्चार्य्य सकुशजलाक्षतं गोपुच्छं विप्रहस्ते दद्यात् विप्रस्तु ॐद्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्व्वाहुभ्यां पूष्णो हस्ताभ्याम् ॐकोदात्कस्माअदात् कामोदात् कामायादात् कामो दाता कामः प्रतिगृहीता कामैतत्ते ॐस्वस्ति इतिवदेत् इमां रौद्रीं गां प्रति गृह्णामि ततः ॐया वै यूयं सोहमप्येकभावो युष्मान्दाताचाहमात्मा प्रदाता इति दाता पठेत् ततो दानप्रतिष्ठासंकल्पः अद्येहेत्यादि अमुकोहं कृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थं इदं सुवर्णमग्निदैवतं यथापरिमितं आज्यपात्रसहितं ब्राह्मणाय तुभ्यं दास्ये ॐतत्सत् इति दद्यात् ततो ब्राह्मणः गोपुच्छोदकेन द्यौःशांतिरिति मंत्रेणाभिषेकं कृत्वा मंत्राशिषं दद्यात् ॐसोमो धेनुᳪसोमोऽअर्वन्तमाशुᳪसोमो वीरङ्कर्मण्यं ददाति सादन्यं विदथ्यᳪसभेयं पितृश्रवणं यो ददाशदस्मैइति ततो दाता यजमानः ब्राह्मणेन समन्वितां गां त्रिःप्रदक्षिणीकृत्य गोमतीं पठेत् गावःसुरभयो नित्यं गावो गुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावःस्वस्त्ययनं महत् ॥ पावनं सर्वभूतानां क्षरन्ति च वहंति च । हविषा मंत्रपूतेन तर्पयन्त्यमरान्दिवि ॥ ऋषीणामग्निहोतॄणां गावो होमे प्रतिष्ठिताः । सर्वेषामेव भूतानां गावःशरणमुत्तमम् ॥ गावःस्वर्गस्य सोपानं गावो धन्याःसनातनाः । गावः पवित्रं परम गावो मङ्गलमुत्तमम् । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् । एकत्र मंत्रास्तिष्ठंति हविरेकत्र तिष्ठति ॥ गावो मामुपतिष्ठन्तु हेमशृंग्यःपयोमुचः । सुरभ्यःसौरभेय्यश्च सरितःसागरास्तथा ॥ गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा । गावोस्माकं वयं तासां यतो गावस्ततो वयम् ॥ घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे ॥ गावो ममाग्रतःसन्तु गावो मे सन्तु पृष्ठतः । गावो मामुपतिष्ठन्तु गवां मध्ये वसाम्यहम् ॥ एवं रात्रौ दिवा वापि समेषु विषमेषु च । भयेषु च नरो नित्यं कीर्त्तयन्मुच्यते भयात् ॥ इत्याचम्य जपन्प्रातः सायं वा पुरुषस्तथा । यद्वान्ह्या कुरुते पापं तद्वान्ह्या प्रतिमुच्यते ॥ यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ इति गोमतीं पठित्वा दक्षिणा संकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं गोदानकर्म्मणः साङ्गफलप्राप्तये इमां दक्षिणां आचार्य्याय दास्ये तथेमां भूयसीं दक्षिणां च ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे ॐतत्सत दक्षिणां दत्वा अभिषेकतिलकमंत्रपाठादि कारयित्वा आचम्य यस्यस्मृत्येत्यादि ॐअच्युताय नम इतिविष्णुं स्मरेत् ॥ इतिवृहद्गोदानविधिः ॥

## ॥ अथ भूमिदानम् ॥

ताम्रपात्रे देयभूमिसंबन्धि मृत्पिण्डं संस्थाप्य स्वासने उपविश्याचम्य शुक्लाम्बरधरमितिविष्णुं ध्यात्वा गणेशं च नत्वा अर्घ्यं संस्थाप्य प्राणानायम्य कुशयवजलपाणिः अद्येहेत्यादि अमुकोहं सकलपापक्षयपूर्वकषट्षष्टिसहस्रवर्षमितस्वर्गवासकाम शिवपुरप्राप्ति-

कामो वा भूमिदानं करिष्ये तदंगतया ब्राह्मणस्य भूमेश्च पूजनं करिष्ये भूमिदेवेति अर्घ्यंदत्वा पाद्यादिभिरुपचारैः संपूज्य वरणसामग्रीं करे कृत्वा एभिर्गंधाक्षतपुष्पपूगीफलद्रव्यैः करिष्यमाणभूमिदानप्रतिग्रहार्थं ब्रह्मन् त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः ततो भूमिं सम्पूयेत् ध्यानम् शुक्लवर्णा मही कार्य्या दिव्याभरणभूषिता । चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशांवरा ॥ रत्नपात्रं सस्यपात्रं पात्रमौष-धिसंयुतम् । पद्मं करे च कर्त्तव्यं भूमेर्यादवनन्दन ॥ दिङ्नागानां चतुर्णां तु कार्या पृष्ठगता मही । इति ध्यात्वा सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । कश्यपस्य सुता पुण्या ह्यतःशांतिं प्रयच्छ मे ॥ ॐभूरसि भूमिरस्यदितिरसि विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ दृꣳपृथिवीं मा हिꣳसीः इतिमंत्रेण ॐभूम्यै नम इति नाममंत्रेण च पञ्चोपचारैर्देयभूमिसंबन्धि मृत्पिण्डं सम्पूज्य दानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं षट्षष्टि सहस्रवर्षमितस्वर्गवासकामःशिवपुरप्राप्तिकामो वा सकलपापक्षयकामो वा इमां भुवं विष्णुदैवत्यां अमुकवेदाध्यायिने अमुकशर्म्मणे ब्राह्मणाय तुभ्यं संप्रददे दानवाक्यम् यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् । दानान्यन्यानि मे शांतिर्भूमिदानाद्भवत्विह ॥ इति दद्यात् ब्राह्मणश्च कोदादित्याद्युक्त्वा ॐस्वस्तीति कृत्वा गृह्णीयात् ततो यजमानः कृतस्य भूमिदानकर्म्मणः प्रतिष्ठासिद्ध्यर्थं इदं सुवर्णमग्निदैवत्यं तुभ्यं सम्प्रददे इति संकल्प्य दद्यात् ब्राह्मणश्च अभिषेकतिलकमंत्रपाठादिकं कुर्य्यात् ॥ इति भूमिदानम् ॥

## अथ तिलदानम्

दाता आचमनादि भूतोत्सादनान्तं कृत्वा पुनरर्घंसंस्थाप्य तिलान् ( द्रोणत्रय-द्रोणद्वय-द्रोणैकपरिमितान् वा यथाशक्ति वा )पुरतः संस्थाप्य सम्प्रोक्ष्य कुशतिलयवजलान्यादाय अद्येहेत्यादि देशकालौ संकीर्त्य मम सकलपापक्षयद्वारा श्रीविष्णुप्रीतये तिलदानं करिष्ये तदङ्गतया प्रतिगृहीतुर्ब्राह्मणस्य वरणं पूजनं च करिष्ये इति प्रतिज्ञाय ब्राह्मणं सम्पूज्य वृत्वा "विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा धर्मस्य रक्षणायालमेतत्प्राहु र्दिवौकसः ॥ इति मंत्रेण तिलान् संपूज्य पुनरद्येहेत्यादि पूर्वोक्तमुल्लिख्य इमान् ( एतावत्परिमितान् ) तिलान् प्रजापतिदेवताकान् सुपूजिताय अमुक ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् । दानवाक्यं तु—महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ इति दद्यात् यथाशक्ति दानप्रतिष्ठां च कुर्वीत । इति । तिलपात्रदानं तु पूर्वमेवोक्तं विवाह-प्रकरणे इति तिलदानम् ॥

## अथ सुवर्णदानम्

दाता आचमनादि भूतोत्सादनान्तं विधायार्घं संस्थाप्य अद्येहेत्यादि देशकालकीर्तनान्ते अमुकोऽहम् अक्षयस्वर्गकामः सर्वपाप-क्षयकामः पितृतारणकामः ईश्वरप्रीतिकामश्च सुवर्णदानं करिष्ये तदङ्गत्वेन प्रतिग्रहीतुर्ब्राह्मणस्य वरणं करिष्ये इति ब्राह्मणं वृत्वा सम्पूज्य सुवर्णं सम्प्रोक्ष्य-हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ इति संपूज्य पूर्ववत् संकल्प्य अमु-कोहममुककामः इदं ( कर्षमात्रं यथाशक्ति वा ) सुवर्णमग्निदैवतं अमुकगोत्रायामुकनाम्ने ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न ममे त्युक्त्वा दानवाक्यंपठेत्—हिरण्यगर्भ गर्भस्थमिति० ततो दानप्रतिष्ठां दद्यात् । इति सुवर्णदानम् ।

## अथ आज्यदानम्




पूर्वोक्तप्रकरेणार्घ्यं संस्थाप्य दानं संकल्प्य ब्राह्मणं च वृत्वा सम्पूज्य आज्यं सम्प्रोक्ष्य अद्येहेत्यादि अमुकोऽहं मम सकलपापक्षयद्वारा श्री विष्णुप्रीतये इदमाज्यं मृत्युञ्जयदैवतम् अमुकगोत्रायामुकशर्मणे तुभ्यं सम्प्रददे ॐतत्सत् न मम । दानवाक्यम्—कामधेनोः समुद्भूतं देवनामुत्तमं हविः । आयुर्वृद्धिकरं दातुराज्यं पातु सदैव माम् ॥ इति पठित्वा दद्यात् । दानप्रतिष्ठां च कुर्यात् ॥ इति ॥

## अथ वस्त्रदानम्

सूक्ष्मतन्तुनिर्मितं वस्त्रद्वयमष्टहस्तायतं हस्तद्वयान्यूनविशालं प्रान्तयोरच्छिन्नं नूतनं पुरतो निधाय पूर्ववद्दानप्रतिज्ञां ब्राह्मणवरणं च कृत्वा अद्येहेत्याद्यमुकोऽहं मम सकलपापक्षयद्वारा श्रीविष्णुप्रीतये इदं वासोयुग्मं बृहस्पतिदैवतं तुभ्यं सम्प्रददे ॐतत्सत् न मम । दानवाक्यम्—शीतवातातपत्राणं लज्जाया रक्षणं परम् । देहालङ्करण वस्त्रमतः शान्तिं प्रयच्छ मे ॥ इति पठित्वा दद्यात् दानप्रतिष्ठां च कुर्यात् ॥ इति वस्त्रदानम् ॥

## अथ धान्यदानम्

१६ पलाधिकं व्रीह्यादिरूपं धान्यं पुरतो निधाय दानप्रतिज्ञाब्राह्मणवरणपूजनादिकं विधाय धान्यं संप्रोक्ष्य सम्पूज्य अद्येहेत्याद्यमुकोहं मम सर्वपापनिवृत्यर्थं श्रीविष्णुप्रीतये च इदं धान्यं प्रजापतिदैवतं ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न मम इति संकल्प्य दानवाक्यम्—सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् । प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥ इति पठित्वा दद्यात् । दानप्रतिष्ठां च कुर्यात् ॥ इति धान्यदानम् ॥

## अथ गुडदानम्

सेटकत्रयान्यूनं गुडं पुरतः स्थापयित्वा दानप्रतिज्ञां ब्राह्मणवरणं च विधाय गुडं संप्रोक्ष्य संपूज्य च अद्येहेत्याद्यमुकोऽहं मम सकलपापक्षयद्वारा श्रीविष्णुप्रीतये इमं गुडं सोमदेवताकं ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न मम दानवाक्यम्—यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः । सामवेदश्च वेदानां महादेवश्च योगिनाम् ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सर्वदेक्षुरसः स्मृतः ॥ मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वथा ॥ इति पठित्वा दद्यात् दानप्रतिष्ठां च कुर्यात् ॥ इति गुडदानम् ॥

## अथ रजतदानम्

पलत्रयं पलैकं यथाशक्ति वा रजतं पुरतो निधाय पूर्ववत् दानप्रतिज्ञां ब्राह्मणवरणं च विधाय रजतं सम्प्रोक्ष्य संपूज्य अद्येहेत्याद्यमुकोऽहं मम सर्वपापक्षयार्थं श्री विष्णोः प्रीतये च इदं रजतं चन्द्रदैवत ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न मम । दानवाक्यं तु—प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा । शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥ इति पठित्वा दद्यात् दानप्रतिष्ठां च कुर्यात् ॥ इति

अथ लवणदानम्

द० प० १६ पलान्यूनं यथाशक्ति वा लवणं पुरतः स्थापयित्वा दानप्रतिज्ञादि ब्राह्मणवरणं च विधाय लवणं सम्प्रोक्ष्य अद्येहामुकोहं मम सकलपापक्षयद्वारा श्रीविष्णुप्रीतये इदं लवणं सोमदेवताकं ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न मम। दानवाक्यं तु—यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना। शम्भोः प्रीतिकरं यस्मादतः शान्तिं प्रयच्छ मे। इति पठित्वा दद्यात् दातप्रतिष्ठां च कुर्वीत ॥ इति ॥ लोह० १५०

अथ लोहतुलादानविधिः

चन्द्रतारानुकूले शुभदिने यजमानहस्तेन पञ्चहस्तमितं यज्ञीयवृक्षोद्भवं तुलास्तम्भं चतुर्हस्तमितां तुलां चानीय तक्षयित्वा हरिद्रया विलिप्य स्तम्भं यजमानहस्तेनैकहस्तमितं गर्त्तं कृत्वा तत्र दक्षिणोत्तरायतां तुलां डोरकेणावलंब्य तत्र तुलाद्रव्यस्थापनार्थं यजमानावस्थित्यर्थं चोभयतो वंशपात्रयुगं डोरकद्वयेन तुलायामवलम्बयेत् यथा भूमेर्हस्तमात्रोच्चतां धत्ते तथा ॥ अथ कृतनित्यक्रियो यजमानः गोमयमृत्तिकादिना तुलाभूमिं सुलिप्तां कृत्वा शुद्धासन उपविश्याचम्य स्वस्तिवाचनपूर्वकं गणेशपूजनं कुर्य्यात् अर्घ्यं संस्थाप्य पूजासंकल्पः अद्येहेत्यादि अमुकोहं लोहतुलादानकर्म्मणि पूर्वाङ्गत्वेन निर्विघ्नतासिद्धये भगवतो गणेश्वरस्य पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं ममामुकदुष्टदशास्वामिजनितैतद्वर्षारिष्टनिवृत्तिपूर्वक दीर्घायुःप्राप्तिकामनया श्रीमृत्युञ्जयदेवप्रीतये लोहतुलादानं करिष्ये तत्प्रतिग्रहार्थं आचार्य्यस्य पूजनपूर्वकं वरणं च करिष्ये इतिसंकल्प्य आचार्य्यं पूजयेत् एभिर्गन्धाक्षतपुष्पपूगीफलयज्ञोपवीतपुष्पमालावासोलंकरणद्रव्यैः लोहतुलादानप्रतिग्रहार्थं अमुकगोत्रं अमुकवेदाध्यायिनं अमुकशर्म्माणं आचार्य्यत्वेन त्वामहं वृणे वृतोस्मीति प्रतिवचनम् आचार्य्यं प्रार्थयेत् आचार्य्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेस्मिन्नाचार्यो भव सुव्रत ॥ इति सम्प्रार्थ्य ततः सुवर्णनिर्मितां मृत्युञ्जयप्रतिमां गोविन्दप्रतिमां च अग्नि-उत्तारणपूर्वकं स्थाल्यां निधाय पञ्चामृतेन पयःपृथिव्यामित्यादिमंत्रैःसंस्नाप्य पूजनं कुर्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं ममैतद्वर्षेऽमुकदुष्टग्रहजनिताखिलरोगनिवृत्तिपूर्वकदीर्घायुःप्राप्तिकामो मृत्युञ्जयप्रीतये सुवर्णप्रतिमायां श्रीमृत्युञ्जयदेवस्य गोविन्ददेवस्य च पूजनं करिष्ये एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां मृत्युञ्जयदेव गोविन्ददेव सुप्रतिष्ठितो वरदो भव ध्यानम् मृत्युञ्जयश्च देवोयं चतुर्बाहुस्त्रिलोचनः। अक्षमालाधरो देवो दक्षिणेन तु पाणिना ॥ वामेनामृतकुण्डीं च धारयन्नमृतान्विताम्। वरदाभयपाणिश्च दिव्याभरणभूषितः॥ शुक्लःसुनीलवासाश्च पद्मस्योपरि संस्थितः॥ इतिमृत्युञ्जयं ध्यात्वा गोविन्दं ध्यायेत् अधश्चक्रं गदामूर्द्ध्वं वामयोःकरयो क्रमात्। ऊर्द्ध्वं शंखमधः पद्मं गोविन्दे कपिलाङ्गके ॥ इतिध्यात्वा मृत्युञ्जयप्रतिमायां न्यासं कुर्य्यात् ॐजां हृदयाय नमः ॐजीं शिरसे स्वाहा ॐजूं शिखायै

वषट ॐजें कवचाय हुम् ॐजौंनेत्रत्रयाय वौषट् ॐजःअस्त्रायफट् इतिदेवे आत्मनि च न्यासं विधायॐजूँसःइतिनां-
त्रिकेण ॐत्र्यम्बकमिति वैदिकेन च मंत्रेण पाद्यादिभिर्मृत्युञ्जयं पूजयेत् सुगन्धिजले स्नानम् ततश्चदनागुरुकर्पूरक-
कोलमृगनाभिभिर्विलेपनम् अक्षतजातीबिल्वपत्रादिभिःसपूज्य धूपदीपनैवेद्यताम्बूलदक्षिणादिनिवेद्य आवरणपूजां
कुर्यात् प्रागादिप्रादक्षिण्येन ॐजयायै नमः ॐविजयायै नमः ॐअजितायै नमः ॐअपराजितायै नमः ॐभद्रका-
ल्यै नमः ॐकपालिन्यै नमः ॐमृत्युपराजितायै नमः इतिसम्पूज्य मृत्युञ्जयं प्रार्थयेत् देवदेव जगन्नाथ कृपालो
परमेश्वर । मामुद्धरस्व संसारपंकसंकोचदुःखितम् ॥ त्र्यम्बकमिति च सप्रार्थ्य ॐगोविन्दाय नम इति मंत्रेण पाद्या-
दिनीराजनान्तं गोविदं च संपूज्य लोहाधिदैवतं भैरवं लोहाधिदैवत्याय भैरवाय नमः इति लोहे संपूज्य ततस्तुलां
सम्पूजयेत् एतन्त इत्याद्युचार्य्य तुले सुप्रतिष्ठिता भव तुलायै नमःइति गन्धाक्षतपुष्पैः सम्पूज्य वस्त्रेण तुलां समा-
च्छाद्य तुलायामुत्तरवृद्ध्याचतुर्विंशतिदेवताः पूजयेत् ॐईशानाय नमः १ ॐशशिने नमः २ ॐमारुताय नमः ३
ॐरुद्राय नमः ४ ॐसूर्य्याय नमः ५ ॐविश्वकर्म्मणे नमः ६ ॐगुरवे नमः ७ ॐअगिरोग्निभ्यां नमः ८ ॐप्रजापतये
नमः ९ ॐविश्वेभ्यो देवेभ्यो नमः १० ॐजगद्विधात्रे नमः ११ ॐपर्जन्यशम्भुभ्यां नमः १२ ॐपितृदेवताभ्यो नमः
१३ ॐसोमाय नमः १४ ॐधर्म्माय नमः १५ ॐअमरराजाय नमः १६ ॐअश्विभ्यां नमः १७ ॐजलेशाय नमः १८
ॐमित्रावरुणाभ्यां नमः १९ ॐमरुद्गणेभ्यो नमः २० ॐजनेशाय नमः २१ ॐगन्धर्वाय नमः २२ ॐविष्णवे नमः
२३ ॐब्रह्मणे नमः २४ इतिसम्पूज्य ततः शुक्लमाल्यांबरधरः शुक्लगन्धानुपलेपनो गृहीतकुसुमाञ्जलियंजमानस्त्रि-
वारं तुलां प्रदक्षिणीकृत्य तुलामभिमंत्रयेत् नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता । साक्षिभूता जगद्धात्री
निर्मिता परमेष्ठिना ॥ एकतः सर्वतीर्थानि तथाऽनृतशतानि च । धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ॥ त्वं
तुले सर्वभूतानां प्रमाणमिह कीर्त्तिता । मां तोलयंती संसारादुद्धरस्व नमोस्तु ते ॥ योऽसौ तत्वाधिपो देवः पुरुषः
पञ्चविंशकः । स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोस्तु ते ॥ इति तुलामभिमंत्र्य गोविन्दं प्रार्थयेत् नमो नमस्ते
गोविन्द तुलापुरुषसंज्ञक । त्वं हरे तारयस्वास्मानस्मात्संसारसागरात् ॥ इत्यञ्जलिस्थानि पुष्पाणि तुलायामवकीर्य्य
पुनःप्रदक्षिणीकृत्य उत्तरभागे सवस्त्रास्त्रो गृहीताभीष्टदेवः गृहीतकुसुमाञ्जलिः सूत्रेण गोमयादिना वा तुलायाम-
वलम्बितायां गोविन्दप्रतिमाया मृत्युञ्जयप्रतिमायाश्च मुखं पश्यन् सावधानतयासीन दक्षिणभागे समादधिकं
लोहं माषान्नं च स्थापयेत् पुष्टिकामो भूमिसंस्थं कारयेत् ततस्तुलायां गोदोहमात्रं स्थित्वा मंत्रं पठेत् नमस्ते सर्व-
भूतानां साक्षिभूते सनातनि । पितामहेन देवि त्वं निर्मिता विश्वयोनिना ॥ त्वया धृतं जगत्सर्वं सहस्थावरजङ्गमैः ।
सर्वभूतात्मभूतेशे नमस्ते विश्वधारिणि ॥ इतिपठित्वाऽवतीर्य्य आज्यावलोकनं कृत्वा संकल्पं कुर्य्यात् अद्येहेत्यादि
अमुकोहं ममामुकग्रहदशाजनितैतद्वर्षारिष्टनिवृत्तिपूर्वकदीर्घायुरारोग्यप्राप्तिकामो मृत्युञ्जयप्रीतये लोहतुलारोहण-

कर्म्मणः सांगफलप्राप्तये इमां सुपूजितां मृत्युञ्जयदेवप्रतिमां गोविन्ददेवप्रतिमां च सुपूजितं भैरवदैवतं लोहदण्डं च आचार्य्याय दास्ये तथात्मसमतोलितं लोहं अन्नं च तृतीयांशं चतुर्थांशं वा आचार्य्याय दास्ये अवशिष्टं लोहमन्नं च अन्येभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये तथालोहतुलादानकर्म्मणः सांगफलप्राप्तये साद्गुण्यार्थं च इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् इति संकल्प्य दक्षिणां दत्वा गणेशादिदेवेभ्यः प्रणम्य कलशे नवग्रहान्विसृज्य आचार्य्याय प्रतिमां लोहद्रव्यं च दत्वा अभिषेकतिलकमंत्रपाठादि कारयेत् तुलाद्रव्यं शीघ्रं ब्राह्मणेभ्यो विभजेत् न चिरं स्थापयेत् ततो यथाशक्तिब्राह्मणान्भोजयित्वा स्वयं भुञ्जीत ॥ इतिलोहतुलादानविधिः ॥

## अथ घृताद्यन्नतुलादानविधिः

चन्द्रतारानुकूले शुभदिने यजमानहस्तेन यज्ञीयवृक्षोद्भवं पञ्चहस्तं स्तंम्भं चतुर्हस्तमितां तुलामानीय तक्षयित्वा हरिद्रया विलिप्य स्तम्भं यजमानहस्तेन हस्तमात्रं निखनेत् गर्त्ते हरिद्रापूगोरूद्रव्यादिनिक्षिप्य स्तम्भमारोपयेत् दक्षिणोत्तरायतां तुलां डोरकेण वद्ध्वा वंशपात्रद्वयमुभयतो निबध्नीयात् यथा हस्तमात्रं वितस्तिमात्रं वा भूमेरुच्चं भवति तथा ततो गोमयोपलेपादिना तुलाभूमिमलंकृत्य कृतनित्यक्रियो यजमानः शुभासन उपविश्याचम्य प्रथम गणेशपूजनं कुर्य्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं करिष्यमाणघृताद्यन्नतुलादानकर्म्मणि निर्विघ्नतया कार्यसिद्धये भगवतो गणेश्वरस्य पूजनं करिष्ये इतिसंकल्प्य यथाविधि गणेशं सम्पूज्य प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं ममामुकदुष्टदशाजनितैतद्वर्षारिष्टनिवृत्तिपूर्व्वकदीर्घायुरारोग्यप्राप्तये श्रीपरमेश्वरप्रीतये घृताद्यन्नतुलारोहणपूर्व्वकं तुलादानं करिष्ये तत्प्रतिग्रहार्थं आचार्य्यस्य पूजनपूर्वकं वरणं च करिष्ये इतिसंकल्प्य आचार्यं संपूज्य वरणं च कृत्वा कलशविधिना कलश संस्थाप्य तत्र नवग्रहानावाह्य सम्पूज्य सुवर्णनिर्मितां गोविन्दप्रतिमां अग्न्युत्तारणपूर्व्वकं पञ्चामृतेन संस्नाप्य स्थाल्यां निधाय संपूजयेत् अर्घ्यं संस्थाप्य पूजासंकल्पः अद्येहेत्यादि अमुकोहं घृताद्यन्नतुलादानकर्मणि सुवर्णप्रतिमायां गोविन्ददेवस्य पूजनं करिष्ये एतन्त इत्यादि ॐभूर्भुवःस्वः सुवर्णप्रतिमायां गोविन्ददेव सुप्रतिष्ठितो वरदो भव अथ ध्यानम् अधश्चक्रं गदामूर्ध्वे वामयोः करयोः क्रमात् । ऊर्ध्वे शंखमधःपद्मं गोविन्दे कपिलाङ्गके ॥ इतिध्यात्वा ॐगोविन्दाय नमः पाद्यादिनीराजनान्तं सम्पूज्य ततस्तुलां एतन्त इत्यादि ॐभूर्भुवःस्वः तुले सुप्रतिष्ठिता भव ॐतुलायै नमः इतिमंत्रेण गन्धपुष्पाक्षतैः सम्पूज्य पीतवस्त्रेणाच्छाद्य ततः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्य्यजमानस्त्रिवारं तुलां प्रदक्षिणीकृत्य प्रार्थयेत् नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता। साक्षिभूता जगद्धात्री निर्म्मिता विश्वयोनिना॥ एकतः सर्वतीर्थानि तथानृतशतानि च। धर्माधर्मकृतां मध्ये स्थापितासि जगद्धिते ॥ त्वं तुले सर्वलोकानां प्रमाणमिह कीर्त्तिता । मां तोलयंती संसारादुद्धरस्व नमोस्तु ते ॥ योसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः । स एषोधिष्ठितो देवि त्वयि तस्मान्नमोस्तुते ॥ ॐनमो नमस्ते गोविन्द तुलापुरुष सञ्ज्ञक । त्वं हरे तारयस्वास्मानस्मात्संसारसागरात् ॥ इति पठित्वा अञ्जलिस्थानि पुष्पाणि तुलायामवकीर्य्य पुनःप्रदक्षिणीकृत्य सवस्त्रास्त्रो गृहीताभीष्टदेवः

तुलास्तम्भे गोमयादिनावलंबिताया गोविन्दप्रतिमाया मुखं पश्यन्सावधानेन उत्तरभागे उपविशेत् दक्षिणभागे समादधिकं घृताद्यन्नं स्थापयेत् पुष्टिकामो भूमिसंस्थं कारयेत् तुलायां गोदोहमात्रं स्थित्वा मंत्रं पठेत् नमस्ते सर्वभूतानां साक्षिभूते सनातनि । पितामहेन देवि त्वं निर्मिता परमेष्ठिना ॥ त्वया धृतं जगत्सर्वं सह स्थावरजंगमम् । सर्वभूतात्मभूतेशे नमस्ते विश्वधारिणि ॥ इति पठित्वा अवतीर्य्य आज्यावलोकनं कृत्वा संकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं ममामुकदुष्टदशाजनितैतद्दर्षारिष्ट-निवृत्तिपूर्वकशुभफलप्राप्तये इमां सुपूजितां सौवर्णी गोविन्ददेवप्रतिमां तथात्मसमतोलितं तृतीयांशं वा आचार्य्याय दास्ये अवशिष्टघृताद्यन्नं ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये ॐतत्सत् तथा घृताद्यन्नतुलादानकर्म्मणः सांगफलप्राप्तये साद्गुण्यार्थं च इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये इति संकल्प्य आचार्य्याय प्रतिमां घृताद्यन्नं च यथांशेन दत्वा अन्येभ्यो ब्राह्मणेभ्यो दक्षिणामन्नं च दत्वा अभिषेकतिलकरक्षाबन्धनमंत्रपाठादि कारयित्वा कलशे नवग्रहान्विसृज्य सर्वेभ्यः प्रणम्य आचम्य यथासुखं विहरेत् तुलाद्रव्यं न चिरं गृहे स्थापयेत् ॥ इतिघृताद्यन्नतुलादानविधिः ॥

## अथ वृषभदानविधिः

तत्र वृषभं सम्पूज्य अद्येहेत्यादि अमुकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये वृषभदानं करिष्ये इतिसंकल्प्य ब्राह्मणं सम्पूज्य दान-वाक्यम् धर्मस्त्वं वृषरूपेण जगदानन्दकारक । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥ इति पठित्वा वृषभं ककुत्प्रदेशे संकल्प्य दद्यात् ॥ इतिवृषभदानम् ॥

## अथ छागदानम्

तत्र सलवणं छागं सम्पूज्य अद्येहेत्यादि अमुकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये सलवणं छागं ब्राह्मणाय दास्ये तथा छागदान-प्रतिष्ठासिद्ध्यर्थं इदं सुवर्णं च दास्ये दानवाक्यम् यस्मात्त्वं सर्वयज्ञानामाहुतित्वे व्यवस्थितः । यानं विभावसोर्नित्यमतःशांतिं प्रयच्छ मे ॥ सलवणं छागं पृष्ठदेशे संकल्प्य दद्यात् ॥ इतिछागदानविधिः ॥

## अथ महिषीदानम्

हेमाद्रौ भविष्ये—महिषीदानमाहात्म्यं कथयामि युधिष्ठिर । पुण्यं पवित्रमायुष्यं सर्वकामप्रदं तथा ॥ दानकालोपि तत्रैव चन्द्र-सूर्य्यग्रहे कार्त्तिक्यां अयनयोः कृष्णचतुर्दश्यां संक्रान्तौ च सर्वारिष्टविनाशाय चित्तोद्वेगशान्तये च देया प्रथमसूता दोषवर्जिता दद्यात् तद्विधिः गोमयमृज्जलसुलिप्तायां भूमौ गणेशपूजासामग्रीं रक्तमालास्वर्णशृङ्गरौप्यखुरताम्रदोहहेमतिलकसप्तधान्यघंटायुतां महिषीं च प्राङ्मुखीं तत्रोपस्थाप्य यथोक्तलक्षणं ब्राह्मणमुदङ्मुखं संस्थाप्य पवित्रपाणिः स्वासन उपविश्याचम्य सुमुखश्चेत्यादि सामान्य-वद्विधाय विशेषार्घस्थापनान्ते संकल्पः ॐविष्णुः३ अद्येहेत्यादि अमुकाहं मम सर्वारिष्टनिवृत्तिपूर्वकमायुष्याद्यभिवृद्धये विशेषतः शनैश्चरजनितपीडाशान्त्यर्थं दानकल्पोक्तफलावाप्तये इमां महिषीं यथा शक्त्यलंकृतां ब्राह्मणाय दास्ये तत्पूर्वाङ्गत्वेन ब्राह्मणस्य पूजनपूर्वकं

वरणं महिषीपूजनं च करिष्ये ब्राह्मणं भूमिदेवाग्रेत्यादि ॐनमोस्त्वनन्तायेत्यादि अर्घगन्धाक्षतादिभिः सम्पूज्य वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पमालापूगीफलद्रव्यवासोभिः महिषीदानप्रतिग्रहार्थं अमुकगोत्रं अमुकवेदाध्यायिनं अमुकशर्म्माणं ब्राह्मणं त्वामहं वृणे वृतोस्मीति ब्राह्मणो वदेत् अथ महिषीपूजनम् तत्रादौ यमस्वरूपायै नमः इति नत्वा प्रार्थयेत् महिषी ब्रह्मसूता च लक्ष्मीरूपेण संस्थिता । प्रार्थितासि मया देवि यममार्गं निवारय ॥ अथपूजामंत्रः महिषी यमरूपा त्वं विश्वामित्रविनिर्मिते । पूजिता हर मे पापं सर्वदानफलप्रदे ॥ अनेन मंत्रेण आवाहनं आसनं पाद्यं अर्घ्यं आचमनं स्नानं रक्तवस्त्रं गन्धाक्षतपुष्परक्तमाल्यानि स्वर्णतिलकं च समर्प्य स्वर्णशृङ्गीं रौप्यखुरां निर्माय सप्तधान्यताम्रदोहनसहितां धूपदीपनैवेद्यानि च समर्प्य घंटां च गले वध्वा दानसंकल्पं कुर्यात् ॐविष्णुः३ अद्येहेत्यादि अमुकोहं यथोक्तफलावाप्तये कृतसंकल्पसिद्धये यथाशक्त्यलंकृतां सुपूजितामिमां महिषीं यमदैवत्यां अमुकगोत्राय अमुकवेदाध्यायिने सुपूजिताय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॐतत्सन्नममेति सकुशतिलजलेन दक्षिणहस्तेन महिषीपृष्ठं स्पृशन् ब्राह्मणहस्ते दद्यात् विप्रो देवस्यत्वेति पठन् पृष्ठदेशं स्पृष्ट्वा ॐस्वस्तीति प्रतिगृह्य ॐकोदादिति कामस्तुतिं च पठेत् ततो यजमानः इन्द्रादिलोकपालानां या राज्यमहिषी शुभा । महिषीदानमाहात्म्यात्सास्तु मे सर्वकामदा । धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः । महिषासुरस्य जननी या सास्तु वरदा मम ॥ इतिमन्त्राभ्यां सविप्रांमहिषीं प्रदक्षिणीकृत्य नमस्कृत्य आसने उपविश्य दानप्रतिष्ठासिद्धये-यथाशक्ति सुवर्णं संकल्प्य दत्वा भूयसीं संकल्प्य विभज्य कर्मेश्वरार्पणं कुर्यात् तत आचार्यादीन्भोजयित्वा स्वयमपिभुञ्जीत ॥ इति ॥

## अथ अश्वदानम्

महाभारते सर्वोपकरणोपेतं युवानं दोषवर्जितम् योश्वं ददाति विप्राय स्वर्गलोके महीयते ॥ यावन्ति रोमाणि हये भवन्ति हि नरेश्वर । तावतो वाजिदाँल्लोकान्प्राप्नुवन्तीह पुष्कलान् ॥ कौर्मे शतैः पञ्चपलैः रौप्यैः सुवर्णालंकृतं क्रमात् । सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत् मन्वादि, युगादि, अयन, विषुव, उपरागादिपुण्यकाले दानं कार्यम् तद्विधिः सुलिप्तायां भूमौ सर्वोपस्करसंयुतं यथाशक्ति-सुवर्णपट्टवस्त्राद्यलंकृतमश्वं पूर्वाभिमुखमुपस्थाप्य यथोक्तलक्षणं ब्राह्मणमुत्तराभिमुखं संस्थाप्य स्वयं यजमानः स्वासने पूर्वाभिमुख उपविश्य पवित्रपाणिराचम्य सुमुखश्चेत्यादि सामान्यवद्विधाय विशेषार्घस्थापनान्ते संकल्पं कुर्यात् ॐविष्णुः३ अद्येहेत्यादि अमुकोहं समस्तपापक्षयपूर्वकाश्वरोमसमसंख्याकाब्दसूर्यलोकनिवासप्राप्तिकामः अमुककामो वा अश्वदानं करिष्ये तत्पूर्वाङ्गत्वेन ब्राह्मणस्य-पूजनपूर्वकं वरणं अश्वपूजनं च करिष्ये ततो ब्राह्मणं पादप्रक्षालनपूर्वकमर्घादिभिः नमोस्त्वनन्तायेत्यादिना संपूज्य वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पमालायज्ञोपवीतपूगीफलद्रव्यवासोभिः अमुकगोत्रं अमुकवेदाध्यायिनं अमुकनामानं ब्राह्मणं अश्वदानप्रतिग्रहार्थं त्वामहं वृणे ॐवृतोस्मीति प्रत्युक्तिः अथाश्वपूजनम् तत्र सर्वोपचारमंत्रः महार्णवे समुत्पन्न उच्चैःश्रवसपुत्रक । मया त्वं पूजितो वाजिन् शान्तिदो भव सर्वदा ॥ अनेन पाद्यादिनीराजनान्तं सम्पूज्य सकुशतिलजलेन दानसंकल्पं कुर्यात् ॐविष्णुः३ अद्येहेत्यादि अमुकोहं पूर्वोक्तसंकल्पसिद्धिकामः सुपूजितमिममश्वं सूर्ययमदैवतं सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे

इति सकुशतिलोदकं अश्वस्य दक्षिणं कर्णं धृत्वा ब्राह्मणहस्ते दद्यात् दानवाक्यम् उच्चैःश्रवास्त्वमश्वानां राज्ञां विजयकारक । सूर्यवाह नमस्तुभ्यमतःशांतिं प्रयच्छ मे ॥ ब्राह्मणश्च कर्ण एव स्पृशन् ॐदेवस्यत्वेति पठन्कामस्तुतिश्च पठन् ॐस्वस्तीति प्रतिगृह्णीयात् यजमानः
द० ५० सब्राह्मणमश्वं प्रदक्षिणीकृत्य आसन उपविश्य दानप्रतिष्ठासिद्ध्यर्थं सुवर्णं संकल्प्य दत्वा भूयसीं च संकल्प्य विभज्य कर्मेश्वरार्पणं कृत्वा आचार्यादीन्भोजयित्वा स्वयमपि भुञ्जीत । इत्यश्वदानम् ॥

## शय्यादानप्रयोगः

दाता पुण्यकाले सूपलिप्तायां भूमौ प्राङ्मुख उपविश्य दीपं प्रज्वलय्याचम्य हंसतूल्यादिसमायुक्तां शय्यां पूर्वापरायतामास्तीर्य शिरःप्रदेशे निद्राकलशाख्यं घृतपूर्णं ताम्रकलशं निधाय पादप्रदेशे ज्वलन्तं चतुर्वर्तियुतं दीप संस्थाप्य अधःप्रदेशे कर्पूराधिवासितं जलकलशम् अन्यानि चोपकरणानि पार्श्वयोः संस्थाप्य शय्योपरि अग्न्युत्तारितां पञ्चामृतस्नापितां सौवर्णीं लक्ष्मीनारायणप्रतिमां संस्थाप्य यथोक्तलक्षणं ब्राह्मणमुदङ्मुखमुपवेश्य गणेशगुर्वादीन्प्रणम्य भूतोत्सादनान्तं कृत्वा अद्येहेत्यादि देशकालौ संकीर्त्य अमुकोऽहं दानकल्पोक्तफलकामः सकलपापक्षयपूर्वकविष्णुप्रीतिकामश्च शय्यादानमहं करिष्ये तदङ्गत्वेन एतत्प्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वकं वरणं करिष्ये तथा षोडशोपचारैः श्री लक्ष्मीनारायणयोः पूजनं च करिष्ये । इति संकल्प्य ब्राह्मणं संपूज्य वृत्वा एतंते० इति प्रतिमां प्रतिष्ठाप्य पुरुषसूक्तादिना षोडशोपचारैः संपूज्य शय्यां च गन्धादिना संपूज्य "ॐनमः प्रमाण्यै देव्यै" इति तां प्रदक्षिणीकुर्वन् प्रणम्य तदुपरि सप्तधान्यानि क्षिप्त्वा पुनः अद्येहेत्यादि अमुकोऽहं ममात्मनः स्त्रीसहस्रावृतदशवर्षसहस्रस्वर्गलोकवास-सर्वसुखप्राप्ति-पूर्वकेन्द्रलोकवास-याम्यपुरुषपीडाभाव-घर्मशीतादिपीडाभाव - अप्सरोगणसेव्यमानविमानारोहणपूर्वकाभूतसंप्लवकालावधिस्वर्गवासकामः सकलपापक्षयपूर्वकपरमेश्वरप्रीतिकामश्च इमां दारुमयीं हंसतूली-गण्डोपधान-प्रच्छादनपटादियुक्तघृतकुम्भजलकलशताम्बूलकुङ्कुमागरुकर्पूर चन्दनदीपिकापादुकोपानच्छत्र – चामरासननानाविधभाजन–सप्तधान्यस्वर्णरजतभूषण–विविधभक्ष्यभोज्यादर्शकङ्कतयथासंभवपट्टकौशेय-क्षौमौर्णकार्पासवस्त्र–हैमलक्ष्मीनारायणप्रतिमायुतां शय्यां प्रजापतिदैवतां ब्राह्मणायामुकगोत्रायामुकशर्म्मणे तुभ्यं सम्प्रददे न मम । इति संकल्प्य दानवाक्यं पठेत्–यथा न कृष्णशयनं शून्यं सागरजातया । शय्याममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥ १ ॥ यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्याममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥ २ ॥ इति पठन् ब्राह्मणहस्ते कुशादि-दत्त्वा शय्यां स्पर्शयेत् । ब्राह्मणश्च स्वस्ति प्रजापतिदेवतायै प्रतिगृह्णामीत्युक्त्वा कामस्तुतिं पठेत् ततो दानप्रतिष्ठां भूयसीं च संकल्पयेत् ॥ इतिशय्यादानम् ॥

## पुस्तकदानप्रयोगः

इदं च विद्यादानाख्यं तृतीयमतिदानम् , तच्च त्रिविधं भवति—अध्यापनरूपं वेदमूर्तिदानरूपं पुस्तकदानरूपं च । तत्राध्यापनरूपं प्रसिद्धमेव यदाह यमः—य इमां पृथिवीं दद्यात्सर्वरत्नोपशोभिताम् । दद्याच्छास्त्रं च विप्राणां तच्चैतानि च तत्समम् ॥ इति द्वितीयं

वेदमूर्तिदानम् । अत्र चतुर्णां वेदानां शास्त्रोक्तस्वरूपेण सौवर्णीः प्रतिमा निर्माय तासां दानं क्रियते । तृतीयं पुस्तकदानम् तस्यायं प्रकारः—

दा० प० यजमानः कर्मपात्रसंपादनान्तं कृत्वा कुशतिलयवजलान्यादाय देशकालौ संकीर्त्य दानकल्पोक्तस्वर्गादिफलकामो विष्णुप्रीतिकामो वा अमुकपुस्तकदानं करिष्ये तदङ्गत्वेन प्रतिग्रहीतुः ब्राह्मणस्य पूजनपूर्वकं वरणं करिष्ये तथा सौवर्णप्रतिमासु अक्षतपुञ्जेषु वा ब्रह्मादीनां पुस्तकेऽमुकशास्त्रस्वरूपस्य च पूजनं करिष्ये इति ब्राह्मणं संपूज्य वृत्वा ब्रह्मविष्णुशिवान् सरस्वतीं च एतंते इति प्रतिष्ठाप्य संपूज्य शास्त्रस्वरूपं च सम्पूज्य पुनः हस्ते कुशयवतिलजलान्यादाय देशकालौ सकीर्त्य एतत्पुस्तकस्थिताक्षरसमसंख्याक-वर्षसहस्रावधि-स्वर्गवास—पङ्क्तिसमसंख्यकुलजोद्धारपूर्वकस्वर्गनयन—पत्रसमसंख्ययुगसहस्रावधिसकुलस्वर्गवासप्राप्तिकामः सकलपापक्षयपूर्वकपरमेश्वरप्रीतिकामश्च इदममुकपुस्तकं सरस्वतीदेवताकं स्वलिखितं लेखितं वा अमुकगोत्रायामुकवेदाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे ॐतत्सत् न मम । इतिदत्वा प्रार्थयेत्—सर्वविद्याश्रयज्ञानकारणं ललिताक्षरम् । पुस्तकं संप्रयच्छामि प्रीता भवतु भारती ॥ इति ततो दानप्रतिष्ठां कुर्यात् पुराणादिदाने विशेषविधिस्तु हेमाद्रौ द्रष्टव्यः ॥ इति पुस्तकदानम् ॥

अपू० प० १५६

## मलमासे अपूपदानम्

सुमुखश्चेत्यादि पुष्पांजलिं समर्प्य अर्घस्थापनादि भूतोत्सादनान्तं कृत्वा संकल्पः अद्येहेत्यादि अमुकोऽहं शास्त्रोक्तफलावाप्तये श्रीपुरुषोत्तमदेवप्रीतये च ब्रह्माण्डदानप्रतिरूपकं त्रयस्त्रिंशदपूपदानं करिष्ये तत्पूर्वाङ्गत्वेन सुवर्णप्रतिमायां श्रीपुरुषोत्तमदेवस्य भास्करप्रतिरूपकनारायणस्य च षोडशोपचारैः पूजनं करिष्ये तथा त्रयस्त्रिंशदपूपदेवानां यथामिलितोपचारैः पूजनं करिष्ये इतिसंकल्प्य पुरुषसूक्तादिना षोडशोपचारैरभ्यर्च्य । अपूपान् प्रतिष्ठापयेत् एतन्ते० इत्यादि भूर्भुवःस्वः त्रयस्त्रिंशदपूपदेवता इहागच्छन्तु इहतिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु । ॐ धात्रे नमः ॐ अर्यम्णे नमः ॐ मित्राय नमः ॐ वरुणाय नमः ॐ अंशाय नमः ॐ भगाय नमः ॐ इन्द्राय नमः ॐ विवस्वते नमः ॐ पूष्णे नमः ॐ पर्जन्याय० ॐ त्वष्ट्रे० ॐ विष्णवे० ॐ वीरभद्राय० ॐ शम्भवे० गिरीशाय० ॐ अजैकपादहिर्बुध्न्याय० ॐ पिनाकिने० ॐ अपराजिताय० ॐ भुवनाधीश्वराय० ॐ कपालिने० ॐ स्थाणवे० ॐ भवाय० ॐ रुद्राय० ॐ ध्रुवाय० ॐ अध्वराय० ॐ सोमाय० ॐ आपगारूपिणे० ॐ अनिलाय० ॐअनलाय० ॐ प्रत्यूषाय० ॐ प्रभासाय० ॐ इन्द्राय० ॐ अग्नये नमः इति गन्धादिभिरपूपानभ्यर्च्य नीराजयेत् । प्रार्थना—चन्द्रांशुनिर्मला पूपाः शालितण्डुलनिर्मिताः । आहाराः सर्वदेवानां ते मे कुर्वन्तु मङ्गलम् ॥ विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः । अपूपान्नप्रदानेन मम पापं व्यपोहतु ॥ यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनः । शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥ कलाकाष्ठादिरूपेण निमेषघटिकादिना । यो वञ्चयति भूतानि तस्मै कालात्मने नमः ॥ कुरुक्षेत्रमयो देशः कालः पर्व द्विजो हरिः । पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ॥ मलानां च विशुद्ध्यर्थं पापप्रशमनाय च । पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर ॥ इति संप्रार्थ्य अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकधनपुत्राद्यभि-

वृद्धिद्वारा वसुरुद्रादित्यप्रजापतिवषट्कारात्मक श्रीपुरुषोत्तमदेवप्रीत्यर्थं त्रयस्त्रिंशदपूपान् प्रजापतिदैवतान् साज्यान् सहिरण्यान् कांस्यपात्राभ्यां सम्पुटितान् इमान् ब्राह्मणाय दातुमहमुत्सृजे ॐ तत्सत् । दानवाक्यं—नारायण जगद्बीज भास्करप्रतिरूपक । दानेनानेन पुत्रांश्च सम्पदं चाभिवर्धय ॥ इति पठित्वा दानप्रतिष्ठां कुर्यात् ॥ इति अपूपदानम् ।

## अथ गृहारम्भे शिलान्यासवास्तुपूजनविधिः

तत्र पूर्वेऽहनि एकभक्तादिना कृतनियमो यजमानः सस्त्रीकः शुचिः प्राङ्मुख उपविश्याचम्य स्वस्तिवाचनं पठित्वा अर्घ्यं संस्थाप्य सूर्य्यायार्घ्यं दत्वा पुनरर्घ्यं संस्थाप्य प्राणायामं कृत्वा सर्षपाक्षतैर्भूतोत्सादनं विधाय कुशतिलयवजलान्यादाय संकल्पं कुर्यात् अद्येहेत्यादि अमुकोहं गृहारम्भे शिलान्यासाङ्गवास्तुपूजनकर्म्मणि गृहप्रवेशकर्म्मणि च निर्विघ्नतया कार्य्यसिद्ध्ये श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं संपूज्य ( पृ० १-३ ) प्रधानसंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं सर्वोपद्रवशान्तिपूर्वकायुरारोग्यपुत्रपौत्रद्विपदचतुष्पदधनधान्यादिसमृद्ध्ये श्रीपरमेश्वरप्रीतिकामो गृहारम्भे शिलान्यासवास्तुपूजनकर्म्म करिष्ये तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति संकल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि यथाविधि ( पृ० ३-८ ) विधाय आचार्य्यब्रह्मर्त्विक्सदस्यशांतिकाध्यायसप्तशत्यादिपाठकानां गणेशादिमंत्रजापकानां च यथाक्रमं वरणं कुर्य्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं गृहारम्भे शिलान्यासांगवास्तुपूजनकर्म्मणि आचार्य्यब्रह्मर्त्विक्सदस-शान्तिकाध्यायसप्तशतीपाठकानां जापकानां च पूजनपूर्वकं वरणं करिष्ये इति संकल्प्य आचार्य्यादिभ्योऽर्घ्यं दत्वा गंधाक्षतपुष्पैः संपूज्य एभिर्गंधाक्षतपुष्पयज्ञोपवीतपुष्पमालावासोलंकरणद्रव्यैः गृहारम्भे शिलान्यासाङ्गवास्तुपूजनकर्म्मणि आचार्यत्वेन त्वामहं वृणे वृतोस्मीति प्रत्युक्तिः आचार्य्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेस्मिन्नाचार्यो भव सुव्रत ॥ तथा कृताकृतावेक्षणाय ब्रह्मकर्म्म कर्त्तुं ब्रह्मत्वेन त्वामहं वृणे वृतोस्मि यथा चतुर्मुखो ब्रह्मेत्यादि ब्रह्माणं सम्प्रार्थ्य ऋत्विजश्च वृणुयात् शांतिकाध्यायसप्तशत्यादिपाठकादीन् जापकांश्च वृत्वा अर्घस्थापनं विधाय संकल्पः अद्येहेत्यादि अमुकोहं वास्तुपूजनाख्यं कर्म्म करिष्ये प्रथमं सर्षपाक्षतैर्भूतोत्सादनं कुर्य्यात् यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन ब्रह्मकर्म्म समारभे ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजंत्वन्यं स्वीकरोमि व्रजन्त्विमे ॥ इतिभूतोत्सादनं कृत्वा ततः पञ्चगव्येन कुशैः सर्वं गृहं सम्प्रोक्ष्य तत्र यजमानहस्तेन हस्तमितां ग्रहवेदीं निर्माय तत्र ग्रहादीनावाह्य तदीशाने कलशं संस्थाप्य तत्र वरुणमावाह्य संपूज्य रक्षासूत्रमभिमंत्र्य वितानं कृत्वा ईशानादिकोणचतुष्के चतुरस्रं कृत्वा विशंतु भूतले नागा लोकपालाश्च सर्वतः । अस्मिन्गृहेऽवतिष्ठन्तु आयुर्बलकराःसदा ॥ इतिमंत्रेण कोणचतुष्के कीलकारोपणं विधाय एवं कीलकरोपणक्रमेण तत्पार्श्वे माषबलिं दद्यात् अग्निभ्योऽप्यथ सर्वेभ्यो ये चान्ये तत्समाश्रिताः । तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ इति बलिं दत्वा ततःपूर्वे वेद्युपरि चतुरस्रे वा कुंकुमादिना वास्तुं सुवर्णरजतशलाकया लिखेत् तत्र शान्ता यज्ञोपवीतिनी कान्ता विशाला प्राणवाहिनी

सती सुमतिः नन्दा सुभद्रा सुरथा १० इत्योंकारपूर्वकं नमोन्तनामभिः पश्चादारभ्याःप्रागन्तउदकसंस्थाः समाङ्गुलद्वयान्तरा दश रेखाः कृत्वा ततः हिरण्या सुजाता लक्ष्मीः विभूतिः विमला प्रिया जया उज्ज्वला विशोका चन्द्राः १० इति नामभिर्दक्षिणारंभा उदग्गताः प्राक्संस्थाः दश रेखाः कृत्वा एकाशीतिपदं वास्तुमण्डलं लिखित्वा यथोक्तवर्णैः स्वं स्वं पदं वर्णयित्वा वास्तुमण्डलपश्चिम-दिशि स्थण्डिले कुंडे वा पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य ततो मण्डले गत्वा शिख्यादि देवानावाहयेत् तत्र संकल्पः ( ॐकारस्य ब्रह्मा ऋषिर्गायत्रीछन्दःपरमात्मा देवता, व्याहृतीनां विश्वामित्रजमदग्निभारद्वाजा ऋषयः गायत्रीत्रिष्टुबनुष्टुभश्छन्दांसि अग्निवायुसूर्य्या देवताः शिख्यादिदेवावाहने विनियोगः ) तत्र ईशानादितः मंडलचक्रलिखितांकवत् शिख्यादिदेवाः सर्वे मध्यस्थितब्रह्माभिमुखाः स्थाप्याः यथा ईशाने प्रथमकोष्ठे रक्तवर्णे ॐभूर्भुवःस्वः शिखिन् इहागच्छेहतिष्ठ पूजार्थं त्वाम् आवाहयामि इतिप्रतिमायां पूगीफले दध्यक्षत-पुञ्जे वा स्थापयेत् १ तद्वामतः द्वितीयकोष्ठके पीतवर्णे ॐभूर्भुवःस्वः पर्जन्य इहा० २ तद्वामतस्तृतीये पीतवर्णे ॐभूर्भुवःस्वः जयन्त इहा० ३ ततश्चतुर्थे पीतवर्णे ॐभूर्भुवःस्वः कुलिशायुध इहा० ४ ततः पञ्चमे रक्तवर्णे ॐभूर्भुवःस्वः सूर्य्य इहा० ५ षष्ठे शुक्लवर्णे ॐभूर्भुवःस्वः सत्य इहा० ६ सप्तमे कृष्णवर्णे ॐभूर्भुवःस्वः भृश इहा० ७ अष्टमे शुक्लवर्णे ॐभूर्भुवःस्वः आकाश इहा० ८ नवमे धूम्र-वर्णे ॐभूर्भुवःस्वः वायो इहा० ९ दशमे रक्तवर्णे ॐभूर्भुवःस्वः पूषन् इहा० १० शुक्ले ॐभूः० वितथ इहा० ११ पीते ॐभूः० गृहक्षत इहा० १२ कृष्णे ॐभूः० यम इहा० १३ रक्ते ॐभूः० गन्धर्व इहा० १४ कृष्णे ॐभूः० भृङ्गराज इहा० १५ पीते ॐभूः० मृग इहा० १६ रक्ते ॐभूः० पितृगण इहा० १७ रक्ते ॐभूः० दौवारिक इहा० १८ शुक्ले ॐभूः० सुग्रीव इहा० १९ रक्ते ॐभूः० पुष्पदन्त इहा० २० शुक्ले ॐभूः० वरुण इहा० २१ पीते ॐभूः० असुर इहा० २२ कृष्णे ॐभूः० शोष इहा० २३ पीते ॐभूः० पाप इहा० २४ रक्ते ॐभूः० अहे इहा० २६ रक्ते ॐभूः० मुख्य इहा० २७ कृष्णे ॐभूः० भल्लाटक इहा० २८ शुक्ले ॐभूः० सोम इहा० २९ कृष्णे ॐभूः० सर्प्प इहा० ३० पीते ॐभूः० अदिते इहा० ३१ पीते ॐभूः० दिते इहा० ३२ शुक्ले ॐभूः० आपः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु ३३ शुक्ले ॐभूः० सावित्र इहा० ३४ शुक्ले ॐभूः० जय इहा० ३५ रक्ते ॐभूः० रुद्र इहा० ३६ कृष्णे ॐभूः० अर्य्यमन् इहा० ३७ रक्ते ॐभूः० सवितः इहा० ३८ शुक्ले ॐभूः० विवस्वन् इहा० ३९ रक्ते ॐभूः० विबुधा-धिप इहा० ४० शुक्ले ॐभूः० मित्र इहा० ४१ कृष्णे ॐभूः० राजयक्ष्मन् इहा० ४२ रक्ते ॐभूः० पृथ्वीधर इहा० ४३ शुक्ले ॐभूः० आप-वत्स इहा० ४४ मध्ये नवपदे पीतवर्णे ॐभूर्भुवःस्वः ब्रह्मन् इहागच्छेहतिष्ठ पूजार्थं त्वाम् आवाहयामि ४५ ततस्तदुत्तरतो वास्तुप्रतिमायाम् अक्षतपुञ्जे वा सर्पाकारं विलिख्य स्थापयेत् ॐभूर्भुवःस्वः वास्तुपुरुष कपिलजटाभार पृथ्वीधर देवानां प्रधानपुरुष सकलकर्मप्रधानपुरुष सकल कर्म्मप्रसाधक पुष्करकूपोद्यानगृहप्रथमारम्भकाले सर्वसिद्धिप्रदायक सर्वसिद्धदेवमनुष्यैःसहपूज्यमान गृहस्थाने प्रजापतिक्षेत्रे शीघ्रमागच्छा-गच्छेति ॥ततो बाह्यदेवतानां स्थापनम् ईशाने धूम्रे ॐचरकि इहा० १ आग्नेये कृष्णवर्णे ॐविदारिके इहा० नैर्ऋत्ये पीतवर्णे ॐपूतने इहा० ३वायव्ये धूम्रवर्णे ॐपापराक्षसि इहा० ४ पूर्वे रक्तवर्णे ॐस्कन्द इहा० ५ दक्षिणे कृष्णवर्णे ॐअर्य्यमन् इहा० ६ पश्चिमे रक्तवर्णे ॐ जृम्भक इहा० ७ उत्तरे पीतवर्णे ॐभूः० पिलिपिच्छ इहा० ८ ॥ सर्वेषामुत्तरतः ॐभूर्भुवःस्वः क्षेत्रपाल इहागच्छेह तिष्ठ ॐनमोभग-

# वास्तुदेवतास्थापनक्रमः



वते क्षेत्रपालाय त्रयस्त्रिंशत्कोटिदेवाधिनिर्जिताय भास्वद्भासुरकिंकिणीज्वालामुखाय भैरवरूपिणे तुरु २ मुरु २ लुल २ फेंफेंकाररूपिणे
हुँफट्॥ इतिमन्त्रेण क्षेत्रपालमावाहयेत् एवमावाहनं विधाय पूजासंकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं गृहारम्भशिलान्यासकर्म्मणि वेद्यु-
परि शिख्यादिब्रह्मपर्य्यन्तानां पञ्चचत्वारिंशद्देवानां तथा वास्तुपुरुषस्य तथा चरक्यादि अष्टानां बाह्यदेवतानां क्षेत्रपालस्य च पूजनं
करिष्ये इतिसंकल्प्य एतन्त इत्यादि ॐभूर्भुवःस्वः शिख्यादिपञ्चचत्वारिंशद्देवताः वास्तुपुरुषः चरक्याद्यष्टौबाह्यदेवताः क्षेत्रपालश्च
सुप्रतिष्ठिता वरदा भवन्तु इतिप्रतिष्ठाप्य नाममन्त्रैर्ध्यानावाहनासनपाद्यार्घ्याचमनस्नानवस्त्रयज्ञोपवीतगंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूल-
भूषणनीराजनादिभिः पूजयेत् यथा ॐशिखिने नमः १ ॐपर्जन्याय नमः २ ॐजयन्ताय नमः ३ ॐकुलिशायुधाय नमः ४ सूर्याय नमः
५ ॐसत्याय नमः ६ ॐभृशाय नमः ७ ॐआकाशाय नमः ८ ॐवायवे नमः ९ ॐपूष्णे नमः १० ॐवितथाय नमः ११ ॐगृहक्षताय
नमः १२ ॐयमाय नमः १३ ॐगंधर्वाय नमः १४ ॐभृङ्गराजाय नमः १५ ॐमृगाय नमः १६ ॐपितृगणाय नमः १७ ॐदौवारिकाय
नमः १८ ॐसुग्रीवाय नमः १९ ॐपुष्पदन्ताय नमः २० ॐवरुणाय नमः २१ ॐअसुराय नमः २२ ॐशोषाय नमः २३ ॐपापाय नमः
२४ ॐरोगाय नमः २५ ॐअहये नमः २६ ॐमुख्याय नमः २७ ॐभल्लाटकाय नमः २८ ॐसोमाय नमः २९ ॐसर्पाय नमः
३० ॐअदितये नमः ३१ ॐदितये नमः ३२ ॐअद्भ्यो नमः ३३ ॐसावित्राय नमः ३४ ॐजयाय नमः ३५ ॐरुद्राय नमः
३६ ॐअर्य्यम्णे नमः ३७ ॐसवित्रे नमः ३८ ॐविवस्वते नमः ३९ ॐविबुधाधिपाय नमः ४० ॐमित्राय नमः ४१ ॐराजयक्ष्मणे नमः
४२ ॐपृथ्वीधराय नमः ४३ ॐआपवत्साय नमः ४४ ॐब्रह्मणे नमः ४५ ॐवास्तोष्पतये नमः ४६ ॐचरक्यै नमः ४७ ॐविदारि-
कायै नमः ४८ ॐपूतनायै नमः ४९ ॐपापराक्षस्यै नमः ५० ॐस्कन्दाय नमः ५१ ॐअर्य्यम्णे नमः ५२ ॐजृम्भकाय नमः
५३ ॐपिलिपिच्छाय नमः ५४ ॐक्षेत्रपालाय नमः ५५ इतिचतुर्थ्यन्तनाममन्त्रैः पाद्यादिनीराजनान्तं सम्पूज्य वास्तुपूजायां मन्त्र-
विशेषः ॐवास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः यत्त्वे महि प्रतितन्नो भव द्विपदे शं चतुष्पदे इतिमंत्रेण वास्तुदेवं सम्पूज-
येत् क्षेत्रपालपूजामंत्रः ॐक्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि मा त्वा हिꣳसीन्मा माहिꣳसीः इतिमंत्रेण नाममंत्रेणच पाद्यादिभिः क्षेत्रपालं
पूजयेत् ॥ तत ईशानदेशे कलशविधिना कलशं संस्थाप्य तत्र वरुणमावाह्य तथा ग्रहमण्डले ग्रहानावाहयेत् अन्यथा कलशे वा नवग्रहाना-
वाह्य पूजयेत् तत्र सकल्पः अद्येहेत्यादि अमुकोहं मम दीर्घायुःप्राप्तिपूर्वकसकलमङ्गलाभिवृद्ध्यर्थं शिलान्यासवास्तुपूजनकर्म्मणि पूर्वाङ्गत्वेन
ग्रहवेद्युपरि कलशे वा वरुणसहितादित्यादिनवग्रहाणां साधिप्रत्यधिदेवानां पूजनं करिष्ये इतिसंकल्प्य एतन्त इत्यादि ॐभूर्भुवःस्वः
कलशे वरुणसहितादित्यादिनवग्रहाः साधिप्रत्यधिदेवाः सुप्रतिष्ठिता भवन्तु नाममंत्रैः पाद्यादिनीराजनान्तं ग्रहान्सम्पूज्य प्रार्थयेत् ॥
ततो होमवेदीसमीपमागत्य ब्रह्मासनादिपर्य्युक्षणान्तं कर्म्म कृत्वा एतंत इत्यादिना वरदनामाग्निं प्रतिष्ठाप्य सम्पूज्य द्रव्यत्यागसंकल्पं
कुर्य्यात् अद्येहेत्यादि वास्तुपूजनशिलान्यासकर्म्मणा यक्ष्ये तत्र आघाराज्यभागदेवताभ्यः शिख्यादिपञ्चचत्वारिंशद्देवताभ्यः वास्तुपुरुषाय
चरक्याद्यष्टदेवताभ्यः आदित्यादिनवग्रहादिभ्यो महाव्याहृतिदेवताभ्यः स्विष्टकृदग्नये च इदं सम्पादितमाज्यं तथा तिलाज्योदुम्बर-
समिद्बिल्वफलादिद्रव्यं मया परित्यक्तं यथादैवतमस्तु इति द्रव्यत्यागं विधाय तदेवाग्निरित्यादिना मंत्रेण अग्निं पाद्यादिनीराजनान्तं

सम्पूज्य ब्रह्मणान्वारब्धो दक्षिणं जान्वाच्य मनसा प्रजापतिं ध्यात्वा जुहुयात् ॐप्रजापतये स्वाहा इदं प्रजापतये ॐइंद्राय स्वाहा इदमिन्द्राय ॐअग्नये स्वाहा इदमग्नये ॐसोमाय स्वाहा इदं सोमाय ततस्तिलाज्येन प्रत्येकमष्टसंख्यया प्रधान होमं कुर्य्यात् ॐशिखिने स्वाहा इदं शिखिने १ ॐपर्जन्याय स्वाहा इदं पर्जन्याय २ ॐजयन्ताय स्वाहा इ० ३ ॐकुलिशायुधाय स्वाहा इ० ४ ॐसूर्य्याय स्वाहा इ० ५ ॐसत्याय स्वाहा इ० ६ ॐभृशाय स्वाहा इ० ७ ॐआकाशाय स्वाहा इ० ८ॐवायवे स्वाहा इ० ९ॐपूष्णे स्वाहा इ० १० ॐवितथाय स्वाहा इ० ११ ॐगृहक्षताय स्वाहा इ० १२ ॐयमाय स्वाहा इ० १३ ॐगन्धर्वाय स्वाहा इ० १४ ॐभृङ्गराजाय स्वाहा इ० १५ ॐमृगाय स्वाहा इ० १६ ॐपितृगणाय स्वाहा १७ ॐदौवारिकाय स्वाहा इ० १८ ॐसुग्रीवाय स्वाहा इ० १९ ॐपुष्पदन्ताय स्वाहा इ० २० ॐवरुणाय स्वाहा इ० २१ ॐअसुराय स्वाहा इ० २२ ॐशोषाय स्वाहा इ० २३ ॐपापाय स्वाहा इ० २४ ॐरोगाय स्वाहा इ० २५ ॐअहये स्वाहा इदं० २६ ॐमुख्याय स्वाहा इ० २७ ॐभल्लाटकाय स्वाहा इ० २८ ॐसोमाय स्वाहा इ० २९ ॐसर्प्पाय स्वाहा इ० ३० ॐअदितये स्वाहा इ० ३१ ॐदितये स्वाहा इ० ३२ ॐअद्भ्यः स्वाहा इ० ३३ ॐसावित्राय स्वाहा इ० ३४ ॐजयाय स्वाहा इ० ३५ रुद्राय स्वाहा इ० ३६ ॐअर्य्यम्णे स्वाहा इ० ३७ ॐसावित्रे स्वाहा इ० ३८ ॐविवस्वते स्वाहा इ० ३९ ॐविबुधाधिपाय स्वाहा इ० ४० ॐमित्राय स्वाहा इ० ४१ ॐराजयक्ष्मणे स्वाहा इ० ४२ ॐपृथ्वीधराय स्वाहा इ० ४३ ॐआपवत्साय स्वाहा इ० ४४ ॐब्रह्मणे स्वाहा इदं ब्रह्मणे ४५ इतिमंत्रैस्तिलाज्यहोमं प्रत्येकमष्टसंख्यया कृत्वा दधिमधुघृताक्तैः उदुंबरसमिद्भिश्च एकैकामाहुतिं जुहुयात् ॥ ततो बिल्वपञ्चकेन घृताक्तेन वास्तोष्पते इत्यादिमंत्रपंचकेन जुहुयात् ॐवास्तोष्पते प्रतिजानीह्यस्मान्स्वां वेशोऽअनमीवो भवानः या ते वह्निं प्रतिशन्नो भव द्विपदे शं चतुष्पदे स्वाहा १ ॐवास्तोष्पते प्रतरणो नएधि गयस्फानो गोभिरश्वेभिरिन्दोरजरासः ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व स्वाहा २ ॐवास्तोष्पते शग्मयासंसदातेमक्षीमहिरण्वयागातुमत्या पाहि क्षेम उतयोगे वरन्नो यूयं पात स्वस्तिभिःसदानः स्वाहा ३ ॐवातोष्पतेऽअमीवहा विश्वा रूपाण्याविशन् सखा सुसेवऽएधि नः स्वाहा ४ ॐवास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यना द्राप्सोभेत्तापुरांशश्वतीनामिन्द्रो मुनीनाॅं सखा स्वाहा ५ इति बिल्वपंचकहोमं विधाय ततश्चरक्यादिबाह्यदेवताभ्यो जुहुयात् ॐचरक्यै स्वाहा इदं चरक्यै १ ॐविदार्य्यै स्वाहा इ० २ ॐपूतनायै स्वाहा इ० ३ ॐपापराक्षस्यै स्वाहा इ० ॐस्कन्दाय स्वाहा इ० ५ ॐजृम्भकाय स्वाहा इ० ७ ॐपिलिपिच्छाय स्वाहा इदं पिलिपिच्छाय ८ ततः तिलाज्येन ॐआकृष्णेनेत्यादिमंत्रैः साधिप्रत्यधिदेवानां आदित्यादिनवग्रहाणां यथाशक्तिसंख्यया होमं विधाय तत आज्येन भूरादिनवाहुतिहोमं च विधाय संस्रवप्राशनम् पवित्रप्रतिपत्तिः प्रणीताविमोकः ब्रह्मणे पूर्णपात्रदानसंकल्पः अद्येहेत्यादि अमुकोहं शिलान्यासवास्तुपूजनाङ्गहोमकर्मणः साद्गुण्यार्थमपूर्णपूर्णार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मणे तुभ्यमहं संप्रददे इति दद्यात् ब्रह्मा च अक्रन्कर्मेति मंत्राशिषं दद्यात् ॥ ततो वास्तुदेवताभ्यः प्रत्येकं पायसबलिं दध्यक्षतबलिं वा दद्यात् तत्र संकल्पः अद्येहेत्यादि अमुकोहं सपुत्रसपरिवारस्य मम यजमानस्य वा आयुरारोग्यावाप्तिपूर्वकसर्वोपद्रव-शान्त्यर्थं शिख्यादिपञ्चपञ्चाशद्देवताभ्यो नवग्रहेभ्यश्च पायसेन दध्यक्षतैर्वा बलिदानं करिष्ये बलिं गृहीत्वा भोभो शिखिन् एनं सदीपं

सद्रव्यं पायसबलिं दध्यक्षतबलिं वा गृहाण मम यजमानस्य वा सपुत्रसपरिवारस्य रक्षाकर्ता आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता स्थिरकर्ता भव १ भोभो पर्जन्य एनमित्यादि० २ भोभो जयन्त एनं० ३ भोभो कुलिशायुध एनं० ४ भोभो सूर्य्य एनं० ५ भोभो सत्य एनं० ६ भोभो भृश एनं० ७ भोभो आकाश एनं० ८ भोभो पूषन् एनं० १० भोभो वितथ एनं० ११ भोभो गृहक्षत एनं० १२ भोभो यम एनं० १३ भोभो गन्धर्व एनं० १४ भोभो भृङ्गराज एनं० १५ भोभो मृग एनं० १६ भोभो पितृगण एनं० १७ भोभो दौवारिक एनं० १८ भोभो सुग्रीव एनं० १९ भोभो पुष्पदन्त एनं० २० भोभो वरुण एनं० २१ भोभो असुर एनं० २२ भोभो शोष एनं० २३ भोभो पाप एनं० २४ भोभो रोग एनं० २५ भो० अहे एनं० २६ भो० मुख्य एनं० २७ भो० भल्लाटक एनं० २८ भो० सोम एनं० २९ भो० सर्प एनं० ३० भोभो अदिते एनं० ३१ भो० दिते एनं० ३२ भो० आपः एनं० सपुत्रसपरिवारस्य मम यजमानस्यवा रक्षाकर्त्र्यः क्षेमकर्त्र्यः आयुःकर्त्र्य शान्तिकर्त्र्यः तुष्टिकर्त्र्यः पुष्टिकर्त्र्यः स्थिरकर्त्र्यो भवत ३२ भो० सावित्र एनं० शिख्यादिवत् ३४ भो० जय एनं० ३५ भो० रुद्र एनं० ३६ भो० अर्य्यमन् एनं० ३७ भो० सवितः एनं० ३८ भोभोविवस्वन् एनं० ३९ भो. विबुधाधिप एनं० ४० भो. मित्र एनं० ४१ भो. राजयक्ष्मन् एनं० ४२ भो. पृथ्वीधर एनं० ४३ भो. आपवत्स एनं० ४४ भो. ब्रह्मन् एनं सदीपमित्यादि ४५ भो. वास्तोष्पते० ४६ भो. चरकि एनं सदीपं पायसबलिं दध्यक्षतबलिं वा सद्रव्यं गृहाण मम यजमानस्यवा सपुत्रसपरिवारस्य रक्षाकर्त्री आयुःकर्त्री क्षेमकर्त्री शान्तिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री स्थिरकर्त्री भव ४७ भो विदारिके एनमित्यादि चरकिवत् ४८ भो. पूतने एनं० ४९ भो. पापराक्षसि एनं० ५० भो. स्कन्द एनं० ५१ भो. अर्य्यमन् एनं० ५२ भो. जृम्भक एनं० ५३ भोभो पिलिपिच्छ एनं० ५४ अत्रावसरे साधिप्रत्यधिदेवेभ्यो नवग्रहेभ्यश्च एवमेव क्रमेण बलिदानं विधाय क्षेत्रपालाय बलिं दद्यात् चतुर्वर्तिकदीपयुतद्रव्यताम्बूलकृसरान्नानि क्षेत्रपालबलिः तत्संपाद्य संकल्पं कुर्य्यात् अद्येहेत्यादि अमुकोहं मम यजमानस्य वा सपुत्रसपरिवारस्य रक्षार्थं सर्वारिष्टपरिहारार्थं क्षेत्रपालाय बलिदानं करिष्ये तदंगत्वेन क्षेत्रपालस्य पूजनं करिष्ये कृसरबल्युपरि चतुर्वर्त्तिकं दीपं प्रज्वाल्य बलिं सम्प्रोक्ष्य रक्तचन्दनादिभिः पूजयेत् ध्यानम् आजद्धक्रजटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं दोर्दण्डान्तगदाकपालमरुणस्रग्गन्धवस्त्रावृतम् । घण्टाघुर्घुरमेखलध्वनिमिलद्धुंकारभीमं विभुं वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं भजे ॥ इतिध्यात्वा क्षौंक्षेत्रपालाय नमः भूतप्रेतपिशाचडाकिनीशाकिनीवेतालादिपरिवारयुताय एष सदीपताम्बूलदक्षिणाकृसरान्नबलिर्नमः ॐनमो भगवते क्षेत्रपालाय त्रयस्त्रिंशत्कोटिदेवाधिनिर्जिताय भारभासुरकिंकिणीज्वालामुखभैरवरूपिणे तुरु २ मुरु २ लल २ पच २ फैंफैंकाररूपिणे एनं सदीपं कृसरान्नबलिं गृह्ण २ मां यजमानं वा पाहि २ भो २ क्षेत्रपाल दिशां रक्ष २ बलिं भक्ष २ मम यजमानस्य वा सपुत्रसपरिवारस्य रक्षाकर्ता आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता स्थिरकर्ता भव इति क्षेत्रपालबलिदानं विधाय आचामेत्ॐतत्सत् ॥ अथ शिलान्यासक्रमः तत्र एकविंशद्द्विजातीनां क्षत्राणां दशसप्तकम् । त्रयोदशं तु वैश्यानां शूद्राणां तु नवाङ्गुलम् इति जातिभेदेन शिलाक्रमः तत्रायं प्रयोगः ब्राह्मणस्य एकविंशति २१ अङ्गुलिमिता दीर्घा सार्द्धदश १०॥ अंगुलिमिता आयता सपादपञ्च ५। अङ्गुलिमिता स्थूलाइति १ ॥ क्षत्रियस्य सप्तदश १७ अङ्गुलिमिता दीर्घासार्द्धाष्ट ८॥ अंगुलिमितायता सपादचतुरंगुलि

४। मिता स्थूलेति २ ॥ वैश्यस्य त्रयोदश १३ अंगुलिपरिमिता दीर्घा सार्द्धषडंगुलि ६॥ मितायता सपादत्र्यंगुलि ३। मिता स्थूलेति ३ शूद्रस्य नव ९ अंगुलिमिता दीर्घा सार्द्धचतुरंगुलि ४॥ मितायता सपादद्व्यंगुलिमिता २। स्थूलेति ४ एवं वर्णप्रमाणतः नन्दा भद्रा जया रिक्ता पूर्णेति पञ्चशिलाः निर्माय स्वस्वमानशिलाःकुशशय्यायां स्थापयेत् मंत्रैःस्नापयेच्च यथा प्रथमं सप्तमृत्तिकया ॐअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् अपाᳬरेताᳬसि जिन्वति अथ कलशोदकेन ॐयज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा एष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहा अथ पञ्चगव्येन स्नानम् प्रथमं गायत्र्या गोमूत्रेण गन्धद्वारामिति गोमयेन पयःपृथिव्यामिति दुग्धेन ॐदधिक्राव्ण इति दध्ना ॐघृतवतीति घृतेन ॐ मधुश्च माधवश्च वासन्तिकावृतू अग्नेरन्तः श्लेषोसि कल्पेतां द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथग्मम ज्येष्ठ्याय सव्रता ये अग्नयः सुमनसोन्तरा द्यावापृथिवी इमे वासन्तिकावृतू अभिकल्पमानाऽइन्द्रमिव देवाऽ अभिसंविशंतु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् इति मधुना अथ सर्षपोदकेन ॐआयगौः पृश्निरक्रमीद-सदन्मातरं पुरः पितरं च प्रयत्स्वः अन्तश्चरति रोचनास्य प्राणादपानतोव्यख्यन्महिषो दिवम् ॥ अथ सुवर्णोदकेन ॐहिरण्य-गर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ अथवृषभशृङ्गोदकेन ॐहविष्मतीरिमाऽआपो हविष्माँ २॥ आविवासति हविष्मान्देवोऽअध्वरो हविष्माँ २॥ अस्तु सूर्यः ॥ अथ धान्योदकेन ॐओष-धयःसमवदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तᳬ राजन् पारयामसि ॥ अथ तीर्थोदकेन ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके ॥ अथ पंचसुगन्धोदकेन ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ एभिर्मन्त्रैःसंस्नाप्य अथान्यत्प्रकारेणापि स्नापयेत् तप्तोदकेन स्नानम् १ शीतलोदकेन २ पयसा ३ गोमयेन ४ सिद्धार्थोदकेन ५ भस्मना ६ पञ्चगव्येन ७ सर्वौषधिभिः ८ शर्करया ९ हिरण्योदकेन १० कुशोदकेन ११ तीर्थोदकेन १२ पञ्चसुगन्धोदकेन १३ वृषभशृङ्गोदकेन १४ पंचामृतेन १५ गङ्गामृत्तिकया १६ अगरुणा १७ कर्पूरेण १७ कस्तूरिकया १९ कुंकुमेन २० फलोदकेन २१ पञ्चपल्लवैः २२ पुष्पोदकेन २३ इति संस्नाप्य सरलासने निवेश्य पंचसुगंधिनानुलिप्य सुवर्णादिशलाकया नन्दाशिलायां पद्मं लिखेत् भद्राशिलायां सिंहासनम् जयायां तोरणम् रिक्तायां कूर्म्मम् पूर्णायां चतुर्भुजं विष्णुं विलिखेत् इति देवताः लिखित्वा वस्त्रेणाच्छाद्य तत्समीपे पञ्चकुम्भानावाहयेत् प्रथमं पद्मनाम कुम्भम् १ महापद्मनामकुम्भम् २ शंखम् ३ मकरम् ४ समुद्रनामककुम्भ-मावाहयेत् ५ एवं कुम्भानावाह्य पद्मकुम्भोदकं गृहीत्वा नन्दाशिलायामभिषेकं कुर्यात् मंत्रः ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जाय-तामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुःसप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्योऽभिवर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम् १ ततो महापद्मकुम्भोदकेन भद्राशिलायामभिषेकमंत्रः ॐब्रह्मयज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः सबुध्न्या उपमा अस्य-विष्ठाःसतश्च योनिमसतश्च विवः २ ततःशंखनामककुम्भोदकेन जयाशिलायामभिषेकमंत्रः ॐविष्णो रराटमसि विष्णो श्नप्त्रेस्थो विष्णो स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ३ ततो मकरनामककुम्भोदकेन रिक्ताशिलायां स्नानमंत्रः ॐयमाय त्वा मखाय त्वा

सूर्य्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृथिव्याः सᳪंस्पृशस्पाहि ४ ततः समुद्रनामककलशोदकेन पूर्णाशिलायां स्नानमंत्रः
ॐइमं देवाऽअसपत्नᳪंसुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश
एष वोमी राजा सोमोस्माकं ब्राह्मणानाᳪंराजा ५ इतिशिलाभिषेकं कृत्वा पुनः नन्दायां ब्रह्माणं भद्रायां विष्णुम् जयायां रुद्रम् रिक्ता-
यामीश्वरम् पूर्णायां सदाशिवम् आवाहयेत् ॐभूर्भुवःस्वः ब्रह्मणे नमः ॐविष्णवे नमः ॐ रुद्राय नमः ॐईश्वराय नमः ॐसदा-
शिवाय नमः इतिपञ्चमंत्रैः पाद्यादिभिः सम्पूज्य शिलानामावाहनं कुर्य्यात् प्रथमं नन्दाया आवाहनम् तत्र मंत्रः ॐनाभिर्मे चित्तं
विज्ञानं पायुर्मेऽपचितिर्भमत् आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः १ ततो भद्रावाहनम् ॐभद्रं कर्णेभिःशृणुयाम देवा भद्रं
पश्येमाक्षभिर्य्यजत्राः स्थिरैरङ्गैस्तुष्टुवाᳪंसस्तनूभिर्व्यशेमहि देवहितं यदायुः २ अथ जयावाहनम् ॐजातवेदसे सुनवाम सोममरातीयतो
निजहाति वेदः स नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ३ अथ रिक्तावाहनम् ॐविज्यन्धनुःकपर्दिनो विशल्यो
वाणवाँ२॥उत अनेशन्नस्य या इषवऽआभुरस्यनिषङ्गधिः ४ अथ पूर्णावाहनम् ॐपूर्णा दर्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणा-
वहा इषमूर्जᳪंशतक्रतो ५ एभिर्मंत्रैरावाह्य एभिरेव पाद्यादिनीराजनान्तं सम्पूज्य सुवर्णवस्त्रादिभिरलंकृत्य ततः शिलानामभिः प्रत्येकं
घृतादिना अष्टसंख्यया होमयेत् ॐनन्दायै स्वाहा ८ ॐभद्रायै स्वाहा ८ ॐजयायै स्वाहा ८ ॐरिक्तायै स्वाहा ८ ॐपूर्णायै स्वाहा
८ इतिहोमं विधाय ततः पूर्णाहुतिं कुर्यात् तत आचार्य्यः प्रासादभूमिं गत्वा ईशानादिप्रादक्षिण्येन तासां नामभिः हस्तमितखातं गर्त्तं
कारयित्वा दिक्पालेभ्यो बलिं दद्यात् ततः पूर्वादिदिक्षु दशदिक्पालानां नाममंत्रैर्वैदिकमंत्रैरावाहनादि पूजनं विधाय सप्तधान्यच्छागा-
सृग्मांसदधिमधुघृतमिश्रितभक्तं वा सदीपं संस्थाप्यबलिंदद्यात् पूर्वे पूर्वे इन्द्रं प्रार्थयेत् इन्द्रःसुरपतिश्रेष्ठो वज्रहस्तो महाबलः। शतयज्ञा-
धिपो देवस्तस्मै नित्यं नमोनमः ॥ इन्द्राय सांगाय सायुधाय सपरिवाराय सशक्तिकाय नमः एनं बलिंसमर्पयामि भो २ इन्द्र दिशं
रक्ष २ बलिं भक्ष २ यजमानस्यायुःकर्ता पुष्टिकर्ता तुष्टिकर्ता क्षेमकर्ता भव बलिना सह पञ्चवर्णपताकां च गृहाण इतिदत्वा आचम्य
आग्नेय्यामग्निंप्रार्थयेत् ॐआग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः। धूम्रकेतुर्ध्वजो यस्य तस्मै नित्यं नमोनमः ॥ अग्नये साङ्गाय०
एनं सदीपं बलिं समर्पयामि भो २ अग्ने दिशं रक्ष २ बलिं भक्ष २ यजमानस्यायुःकर्ता० रक्तपताकां च गृहाणेति दत्वा आचामेत् २
ततो दक्षिणे महामहिषमारूढं दंडहस्तं महाबलम् आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥ यमाय साङ्गाय० एनं सदीपं बलिं
समर्पयामि भो २ यम दिशं रक्ष २ बलिं भक्ष २ यजमानस्यायुःकर्ता० कृष्णवर्णपताकां च गृहाणेति दत्वा आचामेत् ३ ततः नैर्ऋत्ये
निर्ऋतिं खड्गहस्तं च सर्वलोकैकभावनम्। आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥ निर्ऋतये साङ्गाय सशक्तिकाय एनं सदीपं
बलिं समर्पयामि भो २ निर्ऋते दिशं रक्ष २ बलिं भक्ष २ यजमानस्यायुःकर्ता० नीलवर्णपताकां च गृहाणेति दत्वाचामेत् ४
ततःपश्चिमे पाशहस्तं च वरुणमर्णसंघातमीश्वरम्। आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् वरुणाय सांगाय० एनं० भो २ वरुण०
श्वेतपताकां च गृहाणेति दत्वाचामेत् ५ ततो वायव्ये वायुमाकाशगं चैव पावनं मृगवाहनम्। आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्य-
ताम् ॥ वायवे सांगाय एनं० भोभो० हरितपताकां च गृहाणेति दत्वाचामेत् ६ तत उत्तरदिशि सर्वनक्षत्रमध्ये तु सोमो राजा व्यव-

स्थितः । तस्मै सोमायदेवाय कुबेराय नमोनमः ॥ कुबेराय साङ्गाय० एनं० भोभो० हरितपताकां च गृहाणेति दत्वाचामेत् ७ तत ईशानदिशि वृषभस्कन्धमारूढं शूलहस्तं पिनाकिनम् । आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥ ईशानाय साङ्गाय एनं० भोभो० श्वेतपताकां च गृहाणेति दत्वाचामेत् ८ ततः पूर्वेशानयोर्मध्ये पद्मपाणिश्चतुर्मूर्तिर्वेदव्यासःपितामहः । यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यं नमोनमः । ॐब्रह्मणे साङ्गाय० एनं पायसबलिं० भोभो० ब्रह्मन्० श्वेतपताकां च गृहाण आचम्य ९ नैर्ऋत्यपश्चिमयोर्मध्ये अनन्त-रूपिणा येन विष्णुना सचराचरम् । पुष्पवद्धारितं नित्यं तस्मै तुभ्यं नमोनमः ॐअनन्ताय साङ्गाय० भोभो अनन्त० रक्तपताकां च गृहाण १० एवं दशदिक्पालेभ्यो बलिं दत्वा आचम्य उत्तराभिमुखो भूत्वा यजमानः पाणिपुटकद्वयेन बलिशेषमादाय मन्त्रं पठेत् देव्यो देवा मुनीन्द्राःसभुवनपतयो मानवाःसर्वसिद्धा । यक्षा रक्षांसि नागा गरुडमुखखगा गुह्यका देवदेवाः ॥ योगिन्यो देववेश्या हरि-दधिंपतयो मातरो विघ्ननाथाः । प्रेता भूताःपिशाचाःपितृवनजगताःसाधिपाःक्षेत्रपालाः १ गन्धर्वाःकिन्नराःसर्वे गुह्यकाःपितरो ग्रहाः । कूष्माण्डाःपूतनारोगास्तथा वेतालकाः शिवाः २ असृक्पीताश्च पिशितभक्ष्याश्चान्यान्यनेकशः । यत्र तत्र स्थिताः सर्वे तृप्ता यान्तु बलिर्नमः ३ इतिमंत्रैः सर्वेभ्यो बलिं दत्वा हस्तौ पादौ प्रक्षाल्याचम्य ततः शिलास्थानमागत्य आधारशिलां विन्यस्य प्रार्थयेत् ॐविश्वे त्वं कमले भूते पृथिवीलोकधारिणी । यज्ञार्थे क्षोभिता देवि प्रसीदपरमेश्वरि ॥ तस्मात्त्वां खनये देवि सानुकूला मखे भव । सर्वदेवमयी भूमिः सर्वदेव-रसान्विता २ इति भूमिं सम्प्रार्थ्य तत्र गर्त्तं कृत्वा सर्पाकारं वास्तुपुरुषं लिखित्वा प्रतिष्ठाप्य ध्यायेत् आवाहयाम्यहं देवं भूमिस्थं चाप्य-धोमुखम् । वास्तुनाथं जगत्प्राणं पूर्वस्यां प्रथमाश्रितम् इत्यावाह्य ॐवास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः यत्तेमहि प्रतिशन्नो भव द्विपदे शञ्चतुष्पदे ॥ इतिमंत्रेण सम्पूज्य प्रार्थयेत् वास्तोष्पते नमस्तेस्तु भूमिशय्यारत प्रभो । मद्गृहे धनधान्यादिसमृद्धिं कुरु सर्वदा ॥ ततःसुलग्ने समागते लग्नदानं विधाय स्वस्तिवाचनं पठित्वा गीतवादित्ररवे जायमाने देवपितृब्राह्मणान्नमस्कृत्य शिलास्थापनं कुर्य्यात् तदुक्तं शिवेन ऐशान्यां विन्यसेत्पूर्वं ब्राह्मणानां वरानने । अन्येषामपि वर्णानामाग्नेय्यां दिशि विन्यसेत् ॥ मध्ये पूर्णां न्यसेद्विप्रो गृहा-रंभे विशेषतः । इति तत्र प्रथमं ईशाने आधारशिलोपरि मध्वाज्यपारदपञ्चरत्नगर्भितं पिहितमुखं पद्मकलशं निधाय गन्धाक्षतपुष्पादि-भिर्नाममन्त्रेण सम्पूज्य आधारशिलां सदाशिवरूपिणीं तेजोमयीं ध्यात्वा प्रतिष्ठापयेत् एतन्तइत्यादि ॐभूर्भुवःस्वः आधारशिले सुप्रतिष्ठिता भव मृदा दृढीकृत्य ततः पद्मकलशोपरि नन्दां विन्यस्य पूजयेत् नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम् । प्रासादे त्विह सन्तिष्ठ यावचन्द्रार्कतारकाः ॥ आयुःकामं श्रियं देहि देववासिनि नन्दिनि । अस्मिन् रक्षा त्वया कार्या प्रासादे यत्नतःसदा ॥ इतिपठित्वा विन्यस्य ॐस्थिरो भव वीडवङ्ग आशुर्भव वाज्यर्व्वन् पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॐशिवो भव प्रजाभ्यो मानुषीभ्य-स्त्वमङ्गिरः मा द्यावापृथिवी अभिशोचोर्मान्तरिक्षं मा वनस्पतीन् इति मन्त्राभ्यां स्थाप्य गन्धादिभिः सम्पूजयेत् इतिनन्दास्थापनम् ॥ तत आग्नेयकोणे मध्वाज्यपारदपञ्चरत्नगर्भितं पिहितमुखं महापद्मकलशं आधारशिलोपरि निधाय गन्धाक्षतपुष्पैः सम्पूज्य आधारशिलां सदाशिवरूपिणीं ध्यात्वा प्रतिष्ठा एतन्त इत्यादि ॐभूर्भुवःस्वः आधारशिले सुप्रतिष्ठिता भव मृदा दृढीकृत्य प्राक्शिरसं भद्राशिलां संस्थाप्य स्थिरो भवेत्यादिमंत्राभ्यां सुसंस्थितां कृत्वा गन्धपुष्पाक्षतैः संपूजयेत् ॥ एवं नैर्ऋत्यकोणे आधारशिलोपरि मध्वाज्यपारदयुक्त-

पंचरत्नगर्भितं पिहितमुखं शंखनामककुम्भं निधाय गन्धाक्षतपुष्पैः संपूज्य आधारशिलां सदाशिवरूपिणीं ध्यात्वा एतंत इत्यादि ॐभूर्भुवःस्वः आधारशिले सुप्रतिष्ठिता भव मृदा दृढीकृत्य प्राक्शिरसं जयाशिलां स्थिरो भवेत्यादि मंत्रेण संस्थाप्य गन्धाक्षतपुष्पैः संपूज्य प्रणमेत् ॥ ततो वायव्यकोणे आधारशिलोपरि मध्वाज्यपारदपंचरत्नगर्भितं पिहितमुखं मकरनामककुंभं निधाय गन्धाक्षतपुष्पैः संपूज्य आधारशिलां सदाशिवरूपिणीं ध्यात्वा प्राक्शिरसं रिक्ताशिलां संस्थाप्य ॐस्थिरोभवेति मंत्रेण संप्रतिष्ठाप्य गन्धपुष्पाक्षतैः पूजयेत् ४ ततो मध्ये आधारशिलोपरि समुद्रनामकं कुंभं मध्वाज्यपारदपञ्चरत्नगर्भितं पिहितमुखं निधाय गन्धाक्षतपुष्पैः सम्पूज्य आधारशिलां सदाशिवरूपिणीं ध्यात्वा प्राक्शिरसं पूर्णाशिलां स्थिरोभवेत्यादिना संस्थाप्य गन्धाक्षतपुष्पैः पूजयेत् ५ पञ्चशिलासु अष्टधातूंश्च निक्षिप्य ततः क्रमेण ॐनन्दायै नमः १ ॐभद्रायै नमः २ ॐजयायै नमः ३ ॐरिक्तायै नमः ४ ॐपूर्णायै नमः ५ सदीपं पायसबलिं दत्वा हस्तौ पादौ प्रक्षाल्याचम्य अघोरमंत्रेणाष्टोत्तरशतं घृतं होमयेत् ततः सर्वप्रायश्चित्तादिहोमकर्म समाप्य शान्तिकाध्यायं पठित्वा शिख्यादिदेवानां वास्तुपुरुषस्य क्षेत्रपालस्य च पूर्ववत्पूजनं विधाय सपत्नीकः सपुत्रपौत्रो यजमानः प्राङ्मुखायोदङ्मुखाय वा आचार्य्याय गां दद्यात् ब्रह्मणे ऋत्विग्भ्यश्च यथांशेन सुवर्णादिदक्षिणां दद्यात् ततो भूयसीं संकल्पयेत् अद्येहेत्यादि अमुकराशिः सपत्नीपुत्रपौत्रोहं कृतैतत्शिलान्यासवास्तुपुरुषस्थापनकर्मणः सांगफलप्राप्तये साद्गुण्यार्थं च इमां भूयसीं दक्षिणां भोजनं च नानागोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकदीनानाथेभ्यश्च विभज्य दास्ये इतिसंकल्प्य दद्यात् भोजयेच्च ततः सपत्नीकं यजमानं आचार्य्यादयो ब्राह्मणाः कलशोदकेन वैदिकैः पौराणैश्च मन्त्रैरभिषिंचेयुः ततो यजमानः सहस्रधारया सचैलं स्नात्वा शुक्लाम्बरधरो भूत्वा आसने उपविशेत् आचार्यादयश्च तिलकाक्षतारोपणं रक्षाबन्धनं त्र्यायुषलापनं मंत्रपाठादिकं कुर्य्युः यजमानश्च घृतच्छायादर्शनं कृत्वा ब्राह्मणेभ्यो दत्वा ब्राह्मणान्प्रणम्य यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् इष्टकामसमृद्ध्यर्थं पुनरागमनाय चेति देवान्विसृज्य यस्यस्मृत्येतिपठेत् ॥ ततो दैवज्ञबोधिते सुलग्ने सपत्नीको यजमानः स्वगृहदेवान्भूमिदेवांश्च प्रणम्य सदुग्धजलां कर्करीं पत्नीहस्ते दत्वा पीवरां वर्त्तिकां प्रज्वाल्य दासीहस्ते अग्रे दत्वा मार्गे जलं सिंचत्यास्त्रिया अञ्चलग्रंथिं बद्ध्वा पुस्तकपुत्रादिसहितो मङ्गलकलशान्वितो गृहमेकवारं प्रदक्षिणीकृत्य मङ्गलगीतवादित्रतूर्यघोषेण प्रसन्नमना देहलीसमीपमागत्य देवताःप्रणम्य लग्नदानं कुर्य्यात् संकल्पः अद्येहेत्यादि अमुकःसपत्नीकोहं गृहप्रवेशलग्नाद्यत्रकुत्रस्थितादित्यादिनवग्रहाणां दुष्टानां दुष्टफलोपशांत्यर्थं शुभानां शुभफलाधिक्यप्राप्तये इमां दक्षिणां दैवज्ञाय दास्ये इति दत्वा गृहाभ्यन्तरे प्रविश्य पुण्याहं वाचयित्वा जीवमातृपूजनं विधाय दक्षिणां दत्वा महानीराजनं तिलकं च कृत्वा सुहृद्बन्धुयुतो भुञ्जीत ततः संध्यासमये अश्वत्थपत्रसहितेन सूत्रेण प्रादक्षिण्येन प्रवेष्ट्य शेषकलशोदकेन गृहं स्नापयित्वा गृहोपरि पताकारोपणं कृत्वा महाध्वजं नूपुरसंहितं एकादशहस्तप्रमाणं गृहदेहलीमध्यभूमौ आरोपयेत् प्रणम्य तत्र क्षेत्रपालाय बलिदद्यात् तत्रमंत्रः ॐनमो भगवते वास्तुपुरुषाय कपिलजटाभाराय पृथ्वीधराय देवानांप्रधानपुरुषाय सर्वकर्म्मप्रसाधकाय पुरोद्यानप्रथमगृहारम्भगृहप्रवेशकाले सर्वसिद्धिप्रदायकाय सर्वसिद्धमनुष्यैः सह पूज्यमानगृहस्थाने शीघ्रमागच्छागच्छ इतिध्यात्वा बलिंसमर्पयेत् ॐनमो भगवते क्षेत्रपालाय त्रयस्त्रिंशत्कोटिदेवतानिर्जितमारभासुरनेत्रस्वांगकिंकिणीज्वालामुखरूपभैरवरूपिणे तुरु २ मुरु २ लल २ षष २ फैं

२ कारपूरितदिग्मुखमहाबहोअद्य कर्त्तव्य गृहारंभगृहप्रवेशे इमंसदीपं माषान्नभक्तबलिंगृह्ण २ मां यजमानं वा सपुत्रसपरिवारं रक्ष २ बलिं भक्ष २ आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता भव इतिमन्त्रेण क्षेत्रपालाय बलिं दद्यात् ततः सन्ध्यासमये भूतबलिदानमन्त्रः भोभो भूतप्रेत डाकिनी शाकिनी पिशाच वेतालादिपरिग्रहाः एनं कृसरान्नबलिं भक्षत यजमानं रक्षत आयुः कर्त्तारः क्षेमकर्त्तारः शान्तिकर्त्तारः तुष्टिकर्त्तारः पुष्टिकर्त्तारो भवत इति भूतबलिं दक्षिणस्यां दिशि दद्यात् ततोगृहे यथासुखंपञ्चरात्रपर्यन्तं शयनाशनादि निरवच्छेदेन कर्त्तव्यम् इतिशिवम् ॥ इति शिलान्यास वास्तुपूजन गृहप्रवेशविधानम् ॥

## अथ शिलान्यासादिकर्म्मणि सामग्रीसूचिका

शिख्यादिपञ्चचत्वारिंशत् ४५ चरक्याद्यष्ट ८ आदित्यादि नव ९ वरुण १ देवानां प्रतिमाः पूगीफलानि वा वास्तुपुरुषप्रतिमा सर्पाकारा १ सुवर्णशलाका १ ताम्रकलशाः ५ अष्टधातवः कलशमुखपिधानाय ताम्रस्थाल्यः ५ आज्यस्थाली १ चरुस्थाली १ ताम्रदीपाः ५ नन्दा भद्रा जया रिक्ता पूर्णाइति पञ्चशिलाः ५ आधारशिलाः ५ मध्वाज्यम् पारदम् स्रुक् प्रणीता प्रोक्षणी वास्तुपताका पञ्चवर्णा रक्ता कृष्णा नीला श्वेता धूम्रा हरिता श्वेता रक्ता पीताचेति दिक्पालपताका दश महाध्वजःपञ्चवर्णःसकिंकिणीकः १ वेदीद्वयाय वितानद्वयम् नवग्रहवेदी १ वास्तुमण्डलवेदीहस्तोच्छ्राया हस्तविस्तृता १ बिल्वपरिधयः ४ सरलसमिधः सर्वौषध्यः सप्तमृत्तिकाः सप्तधान्यानि पञ्चपल्लवाः पञ्चरत्नानि पञ्चसुगन्धयः कस्तूरिका केसरम् कर्पूरम् श्रीखण्डचन्दनम् अगुरुः पञ्चवर्णसूत्रम् श्रीफले २ होमार्थंबिल्वफलानि ५ गव्यं घृतं द्वादशसेटकपरिमितम् पञ्चप्रस्थमितास्तिलाः आचार्य्यब्रह्मवरणार्थं उपर्णा धौतवस्त्रयज्ञोपवीतादि पुष्पमालाः सदस्यर्त्विक् शान्तिकाध्याय सप्तशत्यादि पाठजपकर्तॄणां वरणसामग्रींच पूर्णपात्रद्वयम् उदुंबरसमिधः बलिदानार्थं पायसम् क्षेत्रपालबलिदानाय माषभक्तम् ग्रहहोमार्थं अर्कादिसमिधस्तिलाज्यं वा गोदानार्थं सवत्सा पयस्विनी च गौः अभिषेकार्थमष्टकुंभ सहस्रधाराः रक्षासूत्रम् घृतच्छायापात्रम् भूयसीदक्षिणा ब्राह्मणभोजनं चेति सामग्रीसूचिका ॥

## शालानिर्माणविधिः

शाला विंशतिहस्ता स्यादुत्तमा कथिता बुधैः ॥ षोडशद्वादशाहस्ता दशहस्ताधमाधमा ॥१॥ सा तु पूर्वापराकार्या चतुर्द्वारसुतोरणा । मेखला हस्तमात्रा स्यादाभूष्यपुष्पपल्लवैः ॥२॥ पीतवस्त्रेण सम्वेष्ट्य वितानादिध्वजैर्युता ॥ अनेन विधिना शाला कृता सर्वार्थसाधिका ॥३॥

## शालासंस्कारः प्रतिष्ठा च ।

यथोक्तां शालां निर्माय मंगलघोषपुरःसरं कर्त्ता शालापूर्वद्वारमागत्याचम्य सुमुखदर्चेनि गणेशं नत्वार्घं संस्थाप्य ॥ संकल्पः ॥ ॐ विष्णुः ३ अद्येहेत्याद्यऽमुकोहममुकराशेर्बालकस्य करिष्यमाण चूडाकर्मकर्णवेधाक्षरम्भांकारोपनयनवेदारम्भसमावर्त्तनकर्मसु तत्पूर्वाङ्गत्वेन ग्रहमखकर्मणि च निर्मितायाः शालायाः संस्कारं करिष्ये

तदंगत्वेन शालादिक्स्तम्भेष्विन्द्रादिदशदिक्पालानां चावाहनपूर्वकं पूजनं करिष्ये इति संकल्प्य शालां स्पृशेत् भूमिर्भूमिर्जगन्माता मातरस्त्वरमभ्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि समिद्यताम् ॥ ततो यथाविधिसम्पादितपञ्चगव्येन कुशैर्देवस्य त्वेति मन्त्रेणाभिषिंचेत् । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । सरस्वत्यै व्वाचो जन्तुर्य्यन्त्रेणाग्नेः साम्राज्ज्येनाभिषिंचामि ॥ आपोहिष्ठेत्यादिना च सर्वत्र प्रोक्षणं कृत्वा दध्यक्षतान्गृहीत्वा पूर्वस्तम्भसमीपे गत्वा ॐभूर्भुवःस्वः इन्द्र सहैरावत सवज्र सशक्तिक सांगोपांग मम यज्ञरक्षार्थमिहागच्छ पूजार्थं त्वामावाहयामीहतिष्ठ ॥ आवाहनम् ॥ एह्येहि वृत्रघ्न गजाधिरूढ सहस्रनेत्र त्रिदशैकवन्द्य ॥ शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ शचीपते महाबाहो सर्वाभरणभूषित ॥ आगच्छ भगवन्निन्द्र स्तम्भेस्मिन्सन्निधिं कुरु ॥ २ ॥ इत्यावाह्य ॥ ध्यानम् ॥ शक्रश्चैरावतारूढो दिव्यसिंहासने स्थितः । श्वेतवर्णो वज्रधरोऽभयपाणिर्महाभुजः ॥ ३ ॥ चतुर्दन्तगजारूढो वज्रपाणिः पुरन्दरः । शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥ ४ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ इति नाम मन्त्रेण च पाद्यादि नीराजनान्तं सम्पूज्य प्रार्थयेत् ॥ पुरन्दर नमस्तेस्तु वज्रहस्त नमोस्तुते । शचीसख नमस्तुभ्यं नमस्ते मेघवाहन ॥ ५ ॥ देवराज गजारूढ पुरन्दर शतक्रतो । वज्रहस्त महाबाहो वांछितार्थप्रदो भव ॥ ६ ॥ इति प्रार्थ्य ॥ आग्नेयस्तम्भसमीपे गत्वा दध्यक्षतान् गृहीत्वा ॐभूर्भुवः स्वः अग्ने सपुण्डरीक सशक्तिक सायुध साङ्गोपांगेहागच्छ पूजार्थं त्वामावाहयामीहतिष्ठ ॥ ध्यानम् ॥ अग्निस्तु देवता तत्र रक्तवर्णोऽजवाहनः । चतुर्भुजो धृतामत्र स्त्रशुस्त्रुग्वरदाभयः ॥ इति ध्यात्वावाहनम् ॥ एह्येहि सर्वामरहव्यवाह मुनिप्रवर्य्यैरभितोभि जुष्टम् । तेजोवतां लोकगणेन युक्तो ममाध्वरं पाहि कवे नमस्ते ॥ इत्यावाह्य ॥ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्ब्रुवे देवाँ२॥ऽ आसादयादिह ॥ इति पाद्यादिनीराजनान्तं सम्पूज्य ॥ प्रार्थयेत् ॥ आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः । धूम्रकेतुरजोध्यक्षस्तस्मै नित्यं नमो नमः ॥ ततो दक्षिणस्तम्भसमीपे गत्वा दध्यक्षतान्गृहीत्वा ॐभूर्भुवः स्वः यम सवाहन सदण्ड सशक्तिक सांगोपांगेहागच्छ पूजा० ॥ ध्यानम् ॥ यमस्तु देवता तत्र कृष्णवर्णो द्विबाहुकः । लुलायवाहनः श्रीमान्पाशदण्डधरः प्रभुः ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते शुभाशुभानन्द शुचामधीश शिवाय नः पाहि मखन्नमस्ते ॥ इत्यावाह्य असियमोऽअस्यादित्त्योऽअर्व्वन्नसित्त्रितो गुह्येन व्व्रतेन । असि सोमेन समया व्विपृक्तऽआहुस्तेत्रीणि दिवि बंधनानि ॥ इति नाममंत्रेण च पाद्यादिर्नीराजनान्तं सम्पूज्य पुष्पांजलिं समर्प्य । महान्तं महिषारूढं दण्डहस्तं महाबलम् । आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥ ततो नैर्ऋत्यस्तंभे दध्यक्षतान्गृ० ॐभूर्भुवः स्वः निर्ऋते सकुमुद सखड्ग सशक्तिक सपरिवार साङ्गोपांगेहागच्छ पूजा० ॥ ध्यानम् ॥ रक्तबाहुश्चर्मधरो नीलो निर्ऋतिवाहनः ॥ ऊर्ध्वकेशो विरूपाक्षः

करालः कालिकाप्रियः ॥ इति ध्यात्वा आवाहनम् एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसंघैः । ममाध्वरम्पाहि पिशाचनाथ लोकेश्वर त्वं भगवन्नमस्ते ॥ इत्यावाह्य एष ते निर्ऋते भागस्तञ्जुषस्व स्वाहा ॥ इति नाममंत्रेण च पाद्यादिनीराजनान्तं सम्पूज्य पुष्पांजलिः नैर्ऋतिं खड्गहस्तञ्च सर्वलोकैकपावनम् । आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥ इति नत्वा पश्चिमस्तम्भसमीपे दध्यक्षतान्गृ० ॥ ॐभूर्भुवः स्वः वरुण सांजन सपाश सशक्तिक सवाहन सांगोपाङ्गेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ॥ ध्यानम् ॥ वरुणो देवता तत्र मकरोपरि संस्थितः । यष्टिपाशधरः श्रीमान् गदापद्मधरस्तथा ॥ इति ध्यात्वा आवाहनम् । एह्येहि यादोगणवारिपानां गणेन पर्जन्य सहाप्सरोभिः । विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान्भगवन्नमस्ते ॥ इत्यावाह्य तत्त्वायामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणेह बोध्युरुशᳬंसमानऽआयुः प्रमोषीः ॥१॥ इमम्मे व्वरुणश्रुधी हवमद्या च मृडय त्वामवस्युराचके ॥ इति नाममन्त्रेण च पाद्यादि नीराजनान्तं सम्पूज्य प्रार्थयेत् पाशहस्तं च वरुणं यादसां पतिमीश्वरम् । आवाहयामि यज्ञेऽस्मिन्वरुणाय नमोनमः ॥ इति नत्वा वायव्यस्तम्भे गत्वा दध्यक्षतान्गृ० ॥ ॐभूर्भुवः स्वः वायो सपुष्पदन्त सांग सवाहन सशक्तिक सपरिवारेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ॥ ध्यानम् वायुश्च देवता तत्र मृगारूढश्च मेचकः ॥ अजाचर्मधरः श्रीमान्द्विभुजः परिकीर्तितः ॥ आवाहनम् एह्येहि यज्ञं मम रक्षणाय मृगाधिरूढः सहसिद्धसंघैः । प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्य व्वातो वा मनो वा गन्धर्वाः सप्तविᳬंशतिः ॥ तेऽअग्नेऽश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥ इतिनाममन्त्रेण च पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ॥ वायुमाकाशगं चैव पवनं वेगवद्गतिम् । आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥ अनाकारो महौजाश्च पश्चाद्दृष्टिर्गतिर्दिवि । तस्मै पूज्याय जगतो वायवेहं नमामि ते ॥ इति नत्वा ॥ उत्तरस्तम्भेदध्यक्षतान्गृ० ॥ ॐ भूर्भुवःस्वः कुबेर ससार्वभौम सगदायुध सवाहन सशक्तिक सपरिवार सांगोपाङ्गेहागच्छ पूजार्थं त्वा० ॥ ध्यानम् ॥ कुबेरदेवता तत्र द्विभुजो नरवाहनः । गदापाणिश्च ध्यातव्यो धनदो धननायकः ॥ आवाहनम् ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्वौषधाभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्य ॥ ॐ व्वयᳬंसोमव्व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि ॥ इतिनाममन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य कुबेराय नमः इति पुष्पांजलिं समर्प्य ईशानस्तम्भे दध्यक्षतबलिं स्थापयेत् ॥ ॐ भूर्भुवःस्वः ईश्वर ससुप्रतीक सत्रिशूल सशक्तिक सांग सवाहन सपरिवारेहागच्छ पूजार्थं त्वामावा० ॥ ध्यानम् ॥ ईश्वरः सर्वभूतानां वृषारूढश्चतुर्भुजः । त्रिशूलखट्वाङ्गवराभयहस्तः प्रकीर्तितः ॥ आवाहनम् ॥ एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगगणेन सार्द्धम् ॥ लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्य तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे व्वयम् ॥ पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्धः

स्वस्तये ॥ इति नाममन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ॥ वृषस्कन्धसमारूढः शूलहस्तस्त्रिलोचनः । आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥ सर्वाधिपो महादेव ईशानः शुक्ल ईश्वरः । शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नमः ॥ पूर्वेशानयोर्मध्ये दध्यक्षतान्गृ० ॥ ॐ भूर्भुवःस्वः ब्रह्मन् सांग सपरिवार सायुध सवाहन सशक्तिकेहागच्छपूजार्थं त्वामा० ॥ रक्तवर्णश्चतुर्बाहुर्हंसारूढश्चतुर्मुखः ॥ पद्मा-क्षसूत्रवरदाभयहस्तो निरामयः ॥ आवाहनम् ॥ एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्धं पितृदेवताभिः । सर्वस्य धाताह्यमितप्रभावो विशाध्वरं नःसततं शिवाय ॥ ॐब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽ आवः स बुध्न्याऽ उपमाऽअस्य व्विष्ठाः सतश्च योनि-मसतश्चव्विवः ॥ इति नाममन्त्रेणपाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् पद्मयोनिश्चतुर्मूर्तिर्वेदन्यासपितामहः ॥ यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै-नित्यं नमोनमः ॥ इतिनत्वा नैर्ऋत्यपश्चिमयोर्मध्ये दध्यक्षतान्गृ० ॥ ॐभूर्भुवःस्वः अनन्त सांग सायुध सवाहन सशक्तिक सपरिवारे-हागच्छ पूजार्थं त्वामा० ॥ ध्यानम् ॥ अनन्तदेवतास्तत्र सहस्रफणिमंडितः ॥ महामंडलरूपो हि मधुपिंगललोचनः ॥ आवाहनम् ॥ एह्येहि पातालधरामरेन्द्र नागांगनाकिन्नरगीयमानः ॥ यक्षोरगेन्द्रामरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम् ॥ अनन्ताय नमः इति पाद्यादिनीराजनान्तं संपूज्य प्रार्थयेत् योसावनन्तरूपेण ब्रह्माण्डं सचराचरम् । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमोनमः ॥ इति प्रार्थ्य दिक्पालान्सम्पूज्य पुष्पाण्यवकीर्य पञ्चपल्लवादीन् संशोभ्य वस्त्रेणाच्छाद्य प्रतिष्ठां कुर्यात् ॥ ॐएतन्ते देवसवितर्य्यज्ञम्प्राहुर्ब्बृहस्पतये ब्ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं यज्ञꣳ समिमं दधातु ॥ विश्वेदेवा सऽइह मादयंतामोम्प्रतिष्ठ ॥ ॐभूर्भुवःस्वः यज्ञशाले सुप्रतिष्ठिता भव ॥ इति प्रतिष्ठाप्य ॥ गौरसर्षपाँल्लाजाँश्च गृहीत्वा पूर्वाभिमुखः सनस्त्रेणाभिमन्त्र्य सर्षपाक्षतादिकान्विकिरन् वक्ष्यमाणमंत्रांश्च पठन् त्रिः प्रदक्षिणाः कुर्यात् ॥ भूतानि राक्षसा वापि येत्र तिष्ठन्ति केचन । सर्वे ते ह्यपगच्छन्तु देवयागं करोम्यहम् ॥ अपक्रामंतु भूतानि पिशाचा सर्वतो दिशम् । सर्वेषामविरोधेन पूजाकर्म समारभे ॥ पाखण्डकारिणो भूता भूमौ येचान्तरिक्षगाः । दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया । ॐअयं पुरो हरिकेशः सूर्य्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः प्प्रहेतिस्ते-भ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टितमेषाञ्जम्भे दध्मः नमोस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः तेभ्यो० ॥२॥ नमोस्तु रुद्रेभ्यो येन्तरिक्षे येषाम्वातऽइषवः । तेब्भ्यो दश प्प्राचीर्दश दक्षिणा दश प्प्रतीचीर्दशोदी-चीर्द्दशोर्द्ध्वाः ॥ तेभ्यो नमोऽअस्तुते० ॥३॥ नमोस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ॥ तेभ्य इतिपूर्ववत्० ॥४॥ आयङ्गौः प्पृश्निरक्रमीदसदन्न्मातरम्पुरः पितरञ्चप्प्रयन्त्स्वः ॥५॥ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि ॥ यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे समानोयमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्य्यमसबन्धुर्न्नि-चखानेद महं तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥६॥ स्वराडसि सपत्नहा सत्त्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्यमित्रहा ॥७॥ रक्षोहणो वोव्वलगहनः प्रोक्षामि व्वैष्णवान्रक्षोहणो वो व्वलगहनोऽवस्तृणामि व्वैष्ण-वान्रक्षोहणो व्वां बलगहनाऽउपदधामि व्वैष्णवी रक्षोहणौ व्वां वलगहनौ पर्य्यूहामि व्वैष्णवी व्वैष्णवमसि व्वैष्णवास्थः ॥८॥ देवस्य

त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददे नार्यसीदमहꣳ रक्षसां ग्रीवाऽअपि कृन्तामि ॥ यवोसि यवया-
स्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्व्यै त्वा शुन्धंताँल्लोकाः पितृषदनाः पितृषदनमसि ॥ इतिप्रदक्षिणीकृत्य ॥ पश्चिम-
द्वारमागत्यैतानि पठेत् ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य तिष्ठति। स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ १ ॥ त्रैलोक्ये
यानि भूतानि स्थावराणि चराणि च ॥ ब्रह्मविष्णुशिवैस्सार्द्धंरक्षां कुर्वन्तु तानि मे ॥ २ ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
मुनयो ऋषयो गावो देवमातर एव च ॥ ३ ॥ सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विता ॥ ब्रह्माविष्णुश्च रुद्रश्च क्षेत्रपालगणैः
सह ॥ ४ ॥ शालां रक्षन्तु मे सर्वे घ्नन्तु रक्षांसि सर्वतः इति ॥ पठित्वा ॥ पश्चिमद्वारेण शालां प्रविशेत् ॥ मत्स्य पुराणे ॥
यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥ पश्चिमद्वारमागत्य प्रविशेद्यागमण्डपम् ॥ तत्र सामान्यदीपंप्रज्वाल्याचम्य ॥ हवनवेदी-
समीपे पुरोहितः प्राङ्मुखस्थितयजमानललाटे तिलकं कृत्वा ॥ पुष्पांजलिं गृहीत्वा ॥ शालायाईशानकोणे ग्रहवेदीं पश्चिमे हवनवेदीं
च विधाय स्वस्तिंवाचयेत् ॥ इतिशालासंस्कारः प्रतिष्ठा च ॥



## समाप्ता दशकर्मादिपद्धतिः